म० म० गोपीनाथकविराज-ग्रन्थमाला
[द्वितीयं पुष्पम्]

महामहोपाध्यायपण्डितश्रीहरिहरकृपालुद्विवेदिप्रणीता
शावरभाष्यव्याख्यानभूता

# कल्पकलिका

( तर्कपादान्ता )




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

M. M. GOPĪNĀTHA KAVIRĀJA-GRANTHAMĀLĀ

[Vol. 2]

ŚĀBARABHĀṢYAVYĀKHYĀNABHŪTĀ

# KALPAKALIKĀ

( Tarkapādāntā )

OF

M. M. ŚRĪ HARIHARAKṚPĀLU DVIVEDĪ

EDITED BY

VIDYĀVĀCASPATI

ACĀRYA ŚRĪ BRAHMADATTA DVIVEDĪ

Ex. Principal,

Ramaniranjana Das Muraraka Sanskrit College

Patana



VARANASI

1987

Research Publication Supervisor,
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.



Published by :—
Dr. Harish Chandra Mani Tripathi,
Publication Officer,
Sampurnanand Sanskrit University
Varanasi—221002.



Available at :—
Sales Department,
Sampurnanand Sanskrit University
Varanasi—221002.



First Edition :— 1100 Copies.
Price Rs—50-00



Printed by :—
Ratna Printing Works,
Kamaccha, Varanasi.

म० म० गोपीनाथकविराज-ग्रन्थमाला
[द्वितीयं पुष्पम्]

महामहोपाध्यायपण्डितश्रीहरिहरकृपालुद्विवेदिप्रणीता

शाबरभाष्यव्याख्यानभूता

# कल्पकलिका

## ( तर्कपादान्ता )

सम्पादकः
विद्यावाचस्पतिः
आचार्यश्रीब्रह्मदत्तद्विवेदी
भू० पू० प्राचार्यः,
पाटलिपुत्रस्थरामनिरञ्जनदास-मुरारकासंस्कृतमहाविद्यालयस्य



वाराणस्याम्
२०४३ तमे वैक्रमाब्दे १९०८ तमे शकाब्दे १९८७ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसन्धानसंस्थानस्य,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।



प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१००२.



प्राप्तिस्थानम्—
**विक्रयविभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१००२.



प्रथमं संस्करणम्—११०० प्रतिरूपाणि
मूल्यम्—५०.०० रूप्यकाणि



मुद्रकः—
**रत्ना प्रिंटिंग वर्क्स,**
कमच्छा, वाराणसी ।

# द्वितीयसंस्करणे किमपि वक्तव्यम्

मानवा एव केवलं न; अपितु सर्वे प्राणिनः परमसुखम् आत्यन्तिकीं दुःखनिवृत्तिं वा कामयमाना विविधविचित्रस्वरूपपरम्पराप्रवाहपरिप्लुताव्यवस्थितव्यवस्थे अनेकविधेष्टानिष्टसाधनतदाभासात्मके सत्यानृतोभयशृङ्खलानिगडितेऽस्मिन् प्रपञ्चे विपच्यमानाः सुखसाधनविभ्रमेण दुःखसाधनमुपाददाना दृश्यन्ते। यदा निखिलक्लेशापगमौपयिकं मार्गं मार्गयमाणाः एतावद्भिर्भौतिकैरुपायैः मनोऽभिलषितमर्थं साधयितुं न क्षमन्ते, तदा तादृशोपायात् पराङ्मुखा अनुपासितपरमार्थसत्याः पुरुषा इष्टसाधनं जिज्ञासन्ते। तान् ईप्सितार्थसाधनजिज्ञासून् भगवान् आम्नायो नित्योऽपौरुषेयो भ्रमप्रमादलिप्साकरणापाटवादिदोषसम्भावनारहितो विधिनिषेधाऽर्थवादादिवचनैरिष्टसाधनम् उपदिदेश।

वेदो मन्त्रब्राह्मणात्मकः। तदुक्तम्—मन्त्रब्राह्मणयोर्वेदनामधेयम् इति। इष्टप्राप्त्यनिष्टपरिहारयोर्लौकिकमुपायं बोधयति यः शब्दराशिः, स वेदः। अथवा अपौरुषेयत्वे सति वाक्यत्वं वेदः इत्येतल्लक्षणं वेदस्य निश्चिन्वन्ति।

वैदिकवाक्यानां याथार्थ्येनार्थो मीमांसां विना नावगन्तुं शक्यः, न च यथार्थावबोधमन्तरा तद्बोधितानुष्ठानसम्भवः, इति प्राणिनामुद्दिधीर्षया करुणावरुणालयो महर्षिजैंमिनिः मीमांसासूत्राणि प्रणिनाय। तेषामपि सूत्राणां गम्भीराशयतया न स्फुटोऽर्थावगम इति विदित्वा उदितदयस्तत्रभवान् शबरस्वामी मीमांसाशाबरभाष्येण द्वादशाध्याय्या मीमांसायाः सूत्राणि व्याकरोदिति नाविदितं प्रेक्षावताम्।

तत्र मीमांसाशब्दः पूजितविचारवचनः। तदाह भामत्यां वाचस्पतिमिश्रः— "पूजितविचारवचनो मीमांसाशब्दः। विचारे पूजितत्वञ्च परमपुरुषार्थहेतुभूतसूक्ष्मतमार्थनिर्णयफलकत्वम्" इति। परमपुरुषार्थस्य = मोक्षस्य हेतुभूतः—धर्मो ज्ञानञ्च इत्येतादृशार्थनिर्णयः फलं यस्य विचारस्येत्यर्थः। मान् जिज्ञासायामित्यत्र निर्दिष्टमान् धातोः "मानेर्जिज्ञासायाम्" इति वार्तिकेन सनि प्रत्यये मीमांसाशब्दः साधुः। अन्ये तु रूढ्या मीमांसाशब्दं वेदवाक्यविचारे प्रयुञ्जते। उभयथाऽपि प्रयुज्यमानः प्रकृते उक्तशब्दो नासंलग्नकः।

मीमांसाशास्त्रस्य वेदवाक्यानां सन्देहनिराकरणद्वारा अर्थस्य निर्णयो मुख्यतया प्रतिपाद्यो विषयः। तत्त्वदर्शनेन सह प्रमाणस्य प्रमेयस्य च विचारः, क्रतुप्रयोगस्य, शाब्दबोधोपयोगिन्यायस्य च विवेचनमित्याद्यपि अत्रास्ति। मीमांसकमते जगत् सत्यं तस्य मूलकारणं धर्मस्तत्र प्रमाणं वेदः, इत्येवं मूलतत्त्वेन सह प्रमाणप्रमेयादीनां विषयाणां सूत्रभाष्यादौ विमर्शस्य सत्त्वात् षड्दर्शनेषु अस्यापि शास्त्रस्य गणना युज्यते एव।

प्रथमाध्यायस्य प्रथमः पादस्तर्कपादशब्देनाभिधीयते। तर्क्यन्ते = प्रतिपाद्यन्ते ये, ते तर्काः पदार्थाः प्रमाणप्रमेयरूपाः। एषां यथार्थावगमः प्रथमेन पादेन जायते। अत

उक्तपदवाच्यत्वं तस्य युक्तमेव। अस्मिन् पादे अष्टौ अधिकरणानि। प्रथमेन सूत्रेण धर्मजिज्ञासाधिकरणम्, द्वितीयेन धर्मलक्षणाधिकरणम्, तृतीयेन निमित्तपरीष्ट्यधिकरणम्, चतुर्थेन धर्मे प्रत्यक्षाद्यप्रामाण्याधिकरणम्, पञ्चमेन धर्मे वेदप्रामाण्यस्याधिकरणम्। षष्ठसूत्रात् त्रयोविंशतितमसूत्रपर्यन्तम्, शब्दनित्यत्वाधिकरणम्, चतुर्विंशतितमसूत्रात् षड्विंशतितमसूत्रं यावद् वाक्याधिकरणम्, अतः, परं पादान्तं यावद् वेदस्यापौरुषेयत्वाधिकरणमित्येवमष्टौ अधिकरणानि पादेऽस्मिन् विवेचितानि। सूत्राणि च द्वात्रिंशत्संख्यकानि अस्मिन् पादे।

मीमांसका निरीश्वरवादिन इति लोकप्रसिद्धिः। तथा च मीमांसाया आस्तिकदर्शनेषु गणनं कथं संगच्छते। ईश्वरसत्तायां बद्धादराणामेव आस्तिकपदाभिधेयत्वादिति नाशङ्कनीयम्। "नास्तिको वेदनिन्दकः" इत्यभियुक्तोक्त्यनुसारेण वेदनिन्दकानामेव नास्तिकत्वेनोल्लेखाद् वेदेषु नितरां बद्धश्रद्धानामेषामास्तिकत्वे सन्देहलेशस्याप्यनवतारात्।

एवमपि मीमांसापारदृश्वनां भट्टकुमारिलपार्थसारथिमिश्रप्रभृतीनां "विशुद्धज्ञानदेहायेत्यादिभिः श्लोकैः स्वस्वेष्टदेवतानमस्कारस्य ग्रन्थादौ कृतत्वेन मीमांसासिद्धान्तविरोधिप्रतिपादनदोषः कथं नापतति। यस्य चानभ्युपगमं विविधैर्वचोविन्यासैः साधयितुं ते प्रायतन्त, तमेव प्रथमं स्वीकृत्य श्रेयसे प्रणमन्तीति चित्रम्। न चित्रम्। सर्वज्ञत्वजगत्कर्तृत्वादिरूपेण अनुमित्यादिप्रमाणेन सिद्धं नैयायिकाभिमतमीश्वरं नाङ्गीकुर्वन्ति। अन्यथा धर्मे चोदनैव प्रमाणमिति अवधारणमुखेन तद्व्याख्यानस्य असङ्गत्यापत्तेः। ईश्वरस्य सर्वज्ञतया तज्ज्ञानविषयताया अपि धर्मे सत्त्वात्। अथैतत्सङ्गतये ईश्वरज्ञानाविषयत्वं धर्मस्य स्वीक्रियते चेत् तदा ईश्वरस्य सर्वज्ञता हीयेत। धर्मविषयमजानानः कथं सर्वं जानातीति शक्यते वक्तुम् इत्युभयतः पाशारज्जुः।

वेदस्यापौरुषेयत्वेन ईश्वराप्रणीतत्वाद् जगत्कर्तृत्वमपि तस्मिन् कथं संगच्छेत। वेदस्याऽपि जगदन्तःपातित्वेन तत्कर्तृत्वस्याऽपि प्रसङ्गः। तथा च अपौरुषेयता तस्मान्निवर्तेत इत्यादिदूषणजालैर्ग्रस्ततया सर्वज्ञत्वादिविशिष्टमीश्वरं नानुमन्यन्ते; किन्तु तद्विपरीतस्य ईश्वरस्य सद्भावे न विद्विषन्त्यपि वेदप्रमाणसिद्धे ईश्वरे नास्ति विप्रतिपत्तिस्तेषाम्। तादृशमेव ईश्वरं स्वस्वश्रद्धोपनतं कल्याणाय नमस्कुर्वाणा आचार्याः शास्त्रसिद्धान्तं न व्यरुन्धन्। अत एव "यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता" इति भट्टपादैरुक्तम्। अनेन स्वातन्त्र्यं निराचिकीर्षति नेश्वरम् इति स्पष्टम्।

अथवा, एतस्य शास्त्रस्यास्तु नाम निरीश्वरवादसिद्धान्तः; परं तादृशसिद्धान्तं व्याख्याकारः स्वीयाचारे निवेशयेदिति क्व नियमः? एवमभ्युपगमे षड्दर्शनटीकाकारः सर्वतन्त्रस्वतन्त्रो वाचस्पतिमिश्रः किं कुर्यात्। नहि परस्परविरोधिनो व्यवहारान् युगपत् कर्तुं शक्नुयात्। भामत्यामपि अद्वैतवेदान्तसिद्धान्ताननुरूपस्य भगवच्छङ्करस्य नमस्कारे का सङ्गतिः स्यात्। लोकेऽपि जीविकालोभेन अन्यथा वा मतान्तरावलम्बी जनो भिन्नमतावलम्बिनं पाठयन्ति। परं स्वीयाचारे न तन्मतं निवेशयन्ति। एवमन्यमतावलम्बिनो ग्रन्थान् व्याकुर्वन्ति च। तथैवात्राऽपि शास्त्रसिद्धान्तस्य तथा सत्त्वेऽपि

श्रद्धानुसारेण स्वाभिमतेश्वरनमस्कारो न विरोधमापादयति। नहि दृष्टेऽनुपपन्नं नाम किञ्चिददिति दिशा न सिद्धान्तहानिशङ्केत्यलमनल्पजल्पनेन।

विस्तरभयाद् विषयान्तराणि न विवेचितानि। तानि अन्यतोऽवसेयानि।

विभूषितमहामहोपाध्यायपदवीकैः सर्वतन्त्रस्वतन्त्रैः, अस्मत्पितृचरणैः पं० श्रीहरिहरकृपालुद्विवेदिभिः विरचिता शाबरभाष्यस्य तर्कपादान्ता "कल्पकलिका" टीका सारल्येन विशदं विवृण्वती जिज्ञासुभिर्विद्वज्जनैरन्तेवासिभिश्च हृदयेन समादृता। अतो द्वितीयं संस्करणमपेक्षितं प्रकाशनोपयोगिपदविच्छेदादिसामग्रीवैकल्यात् संशोधन-प्रमादाच्च जातानामशुद्धीनां निगूढविषयस्फुरणक्षणे पाठकानां सुमनसां मनसि वैरस्य-मापादयन्तीनां निरसनमपि सर्वथाऽऽवश्यकमिति च मन्यमानः पुनः प्रकाशनमेवास्य भेषजमिति निरधारयम्।

ततो भगवतोऽनाथनाथस्य श्रीविश्वनाथस्य विशेषानुग्रहेण कुलपारम्पर्यक्रमागते काशीनिवासे स्पृहणीया स्पृहा अजागरीत्। ततः परमेव वाराणसेयसंस्कृतविश्वविद्यालये विजिटिङ्प्रोफेसरपदे नियुक्तिसूचनां समासादयम्। तस्मिन्नेव क्रमे वाराणसेयसंस्कृत-पुस्तकालयाध्यक्षस्य विविधविद्यापरिशीलनलब्धवैदुष्यस्य श्रीलक्ष्मीनारायणतिवारी-शर्मणः समक्षं कल्पकलिकायाः प्रकाशनं प्रास्तौषम्। स चोदारहृदयः सर्वमवहितमनाः समाकर्ण्य "तत्प्रकाशनौपयिकान् विधीन् विधातुं प्रयतिष्ये" इति प्रतिवचनेन मामन्व ग्रहीत्। विविधप्रकाशनभारबाहुल्याद् एतस्य प्रकाशने विलम्बस्य सम्भवेऽपि प्रकाशनं भविष्यत्येवेति दृढवचसा समये समये मां समुदबोधयत्।

ततः परं प्रकाशनोपयोगिनी पदच्छेदचिह्नविशेषादिसमन्विता शाबरभाष्य-सहितकल्पकलिकायाः शुद्धा प्रतिलिपिः प्रकाशनेऽपेक्ष्यमाणा कथं निष्पद्येतेति चिन्तयानो भृशमुन्मना अभवम्। हिन्दूविश्वविद्यालये मीमांसाविभागाध्यक्षेण मीमांसारत्न-विद्वन्मूर्धन्येन अ० सुब्रह्मण्यशास्त्रिणा पूर्वोत्तरमीमांसापारदृश्वना पूज्यपादपितृचरणान्ते-वासिना सह हिन्दूविश्वविद्यालये सदस्यतया काञ्चित् समितिं गतस्य मम वार्तालाप-प्रसङ्गे एतस्याः शुद्धप्रतिलिपेः विधानस्य भारं गृहीत्वा शास्त्रिमहोदयो मां समतूतुषत्। यथासमयं सर्वमिदं प्रतिज्ञातं सम्पाद्य स सहसा अस्मान् दुःखार्णवे निपातयन् गुरुचरणान् प्रकाशनवृत्तान्तं त्वरितमाख्यातुमिव स्वर्गं प्रतस्थे। "मरणं प्रकृतिः शरीरिणां विकृति-र्जीवितमुच्यते बुधैः" इति कालिदासीयपद्यमनुसृत्य किञ्चित्कालातिपाते धैर्यमासा-दितम्।

अनन्तरं कालक्रमेण सुन्दरकर्गजपत्रे अनणुवर्णेन प्रकाशिता तर्कपादान्ता शाबर-भाष्यसमन्विता कल्पकलिका रमणीयकलेवरा भवतां पुरत उपस्थिता जिज्ञासून् नून-मुपकरिष्यति।

अस्य प्रकाशने कृतदृढप्रयत्नं विविधविधेयावधानधुरीणमानसं श्रीलक्ष्मीनारायण-तिवारीमहोदयं भूरिशो धन्यवादान् हृदयेन वच्मि। कृतज्ञोऽहं चिरं जीवनञ्चैतस्य कामये।

शिवसायुज्यं प्राप्ताय सुहृदे विद्वन्मूर्धन्यसुब्रह्मण्यशास्त्रिणे किमनवाप्यं यन्मया देयमिति भवदुपकारभावं स्मारं स्मारं यशःकायरूपाय भवते उत्तमर्णतां समर्प्य सन्तोषमावहामि। एतादृश्या स्वार्थरहितकृत्या प्रथमानो यशोराशिर्भवतां लोके आदर्शाय कल्पते।

धर्म्याचारविचारचारुचरितान् संस्कृतप्रचारप्रसारे समर्पितप्राणान् समलङ्कृतकुलपतिपदान् विद्वद्वरश्रीरामकरणशर्ममहोदयान् सादरं हृदयेन स्मरामि। येषां नैसर्गिककृपादृष्टिसृष्टिर्मां समुल्लासयति।

प्रकाशनाधिकारी सर्वविधविधेयावधानधुरीणो विद्याविवेकोज्ज्वलप्रज्ञः श्रीहरिश्चन्द्रमणित्रिपाठिमहोदयः प्रकाशने उदारमनसा सहयोगं व्यधात्। एतदर्थं हार्दिकीं कृतज्ञतां बिभर्मि। एवमन्ये च ये एतत्प्रकाशने अधिकृतास्तेऽपि धन्यवादार्हाः।

संशोधने अक्षरयोजकानाम् अनवधानतया यन्त्रालये त्रुटितादक्षराच्च जाता अशुद्धयः "सर्वथा व्यवहर्तव्ये कुतो ह्यवचनीयते"त्युक्तिदिशा क्षन्तव्याः। इति शिवम्।

काश्याम्,
वसन्तपञ्चम्याम्,
वि० सं० २०४३

भावत्कः
ब्रह्मदत्तद्विवेदी
भू० पू० प्राचार्यः,
श्रीरामनिरञ्जनदासमुरारकासंस्कृतमहाविद्यालयस्य
चौक, पटना-सिटी

# प्राक्कथनम्

## ( प्रथमसंस्करणस्य )

**प्रणेतुः कथमिह प्रवृत्तिः—**

अथ भगवानाम्नायो प्राणिमात्राभीष्टयोरिष्टानिष्टप्राप्तिपरिहारयोः स्वस्ववर्णाश्रमाद्यनुकूलानुष्ठानयोग्यं यागदानहोमाद्युपायमैहिकामुष्मिकफलकं यथाधिकारिप्रचुराप्रचुरशक्तिद्रव्यायाससाध्यं प्रतिनियतदेशकालापेक्षफलपरिपाकोन्मुखं विदधत् कस्य नाम नेप्सिततमः। परन्त्वलौकिकातिगहनार्थकतया अनालोचितमीमांसामार्गाणां तर्ककर्कशधियामपि दुरवगाहः किमुत साधारणव्युत्पन्नानां शास्त्रान्तरावलोकनाभ्यासनिपीतनिखिलायुष्काणां विदुषामित्यज्ञातः सन् तिरोहितापरिचिताक्षयनिधिरिव सविधस्थोऽपि न जनाभिलाषसिद्धये प्रभवेदिति योगदृशा अवश्यभाविभाविजनमेधामान्द्यादविज्ञातकर्मकलापानुष्ठानविरहोपनतविविधदुर्निवारक्लेशजालविहस्ततां जन्मिनामालोक्य निसर्गतोऽव्यग्रजाग्रदनुकम्पो विश्वपारदृश्वमनीषो न्यायानुगृहीतनानाशाखोपबृंहितकर्मापेक्षितसाध्यसाधनेतिकर्तव्यताप्रदर्शनपरोऽतीन्द्रियज्ञाननिधिर्महर्षिर्जैमिनिमुनिः द्वादशलक्षण्या मीमांसयामास।

अतिमहतो निखिलविद्याश्रयस्य प्रविभक्तवर्णाश्रमविभागस्य संक्षेपाय मन्दमतिसमवधानफलाय ततः परमतीते कियति काले तपोबलवीर्यविपाकाद्यपचयवशप्रादुर्भूतदोषाधीनतदर्थविपर्यासाद्युपरुद्धमानसेषु सौगताद्युद्भावितानर्थहेतुपशुहिंसाकर्मकालिकफलानुत्पादकालान्तरफलाविश्वासहेत्वन्तराधीनफलोत्पादक्षणिकत्वादिदोषाभासैः शिथिलीभवच्छ्रद्धाभक्तिविवेकप्रमुखगुणगणेषु नैरात्म्यक्षणिकेत्याद्युपदेशनिवारितनिरयनियतनिदानकर्ममयेषु स्वाभाविकपराग्विषयप्रवृत्तिशीलेषु इन्द्रियाद्यनुकूलविषयोपभोगानुरागपरोपदेशैः धर्मपथात्पराङ्मुखीकृतेषु अभिमुखीकृतेषु च कुतर्कपरिकल्पनासत्फलानुवद्धस्वमताभासेषु धर्मप्राणेषु भारतीयसनातनजनमनस्सु पुनर्दुर्वारौर्वानलज्वालावलीवलीढमानसत्वमवधाय निखिलशास्त्रमार्मिकमतिः पूज्यपादश्रीशङ्करापरावतारश्रीशङ्कराचार्यमहोदयैरपि शास्त्रतात्पर्यविदित्युक्त्या सादरमुदाहृतो निरन्तरनिगमाटवीविहरणानुरूपप्रथितशबरस्वामिनामधेयः स्वल्पाक्षरप्रमितबहुतरार्थैः प्रतिपक्षाक्षेपप्रतिक्षेपविचक्षणैरतिमधुरा क्वचित्साक्षात्क्वचित्तात्पर्यतः सूत्रार्थतत्तात्पर्यं च प्रदर्शयद्भिः मुख्यतया श्रौतार्थप्रदर्शनपरैर्वचनसन्दर्भैर्भाष्यमुपनिबबन्ध। अत्र च समीचीनतर्केण परपक्षाभासं प्रतिक्षिप्य आम्नायार्थप्रमाणेन पराक्रम्य व्यवातिष्ठिपत्। उद्दधार च दुरध्वगत्वरीं जनतां समीहितसाधनतात्त्विकोपदेशत्रातेनेति न परोक्षं प्रेक्षावतामत्र सुगृहीतक्षणानाम्।

किन्तु कालकलाया अतिविचित्रपरिणतिशीलतया समतीते कियति समये पुनरेतद्भाष्यमपि विरलपुरुषधौरेयावधेयार्थकं साधारणविदुषां बुद्धिपथातिवर्त्तिशीलमिवाभूदिति

लब्धावसरैः नास्तिकैः पुनः कलिङ्गोपमं प्रतायमानमाम्नायदूषणाभासमवलोक्य अखिल-विद्वद्वृन्दमौलिमालाप्रसूनप्रसूतपरागपुञ्जपिञ्जरीकृताविनिद्रनवनलिननिभचरणयुगलः पूर्वं निशितशरनिकरनिवारिताशेषतारकाद्यसुरसमूहोऽधुना वाचैव सत्पथाचारप्रचारविरोधिनां तथैव तदुच्छेदाय भगवान् कुमार एव धृतापरावतारोऽत्रभवान् कुमारिलभट्टो वादिदुरुत्तरातिकठिनतर्कशतसहकृतप्रमाणवलोन्मूलितप्रभाकरबन्धुप्रमुखाखिलकुहकजालापुनरुत्पादाय श्लोकवार्तिकतन्त्रवार्तिकटुप्टीकाभिः पूर्वोत्तरपक्षतया निखिलदार्शनिकावलम्बनीयाभिः विशिष्य आम्नायार्थपरिज्ञानोपायभूताभिः विशिष्टार्थप्रतिपादकमधुरस्वरशालितया विप्रतिपन्नानामपि हृदयग्राहिणीभिः स्वतः स्वार्थप्रत्यायनकुशलस्वभावाभिः तद्भाष्यमुद्दीपयाञ्चक्रे ।

यद्यपि श्रीमत्कुमारिलभट्टोक्तयोऽखिलमर्थजातं स्वतोऽनुभावयन्त्यो न व्याख्यानमपेक्षन्ते; तथापि विपश्चितामग्रेसरेण पार्थसारथिवत्प्रातःस्मरणीयेन श्रीपार्थसारथिमिश्रेण सविस्तरं व्याख्याता अपि ता इति न पुनरिहव्याख्यानान्तरापेक्षा । किन्तु प्रकर्षवन्निकर्षस्याप्यानन्त्यात् स्वल्पसमये प्रतिभावतामत्र प्रविविक्षूणामन्तेवासिनामुपकृतये शाबरभाष्यस्य स्वल्पशरीरा सरलार्था टीका नितरामपेक्ष्यते इति विहारोत्कलसंस्कृतसमितौ प्रस्तावोऽभूत् ।

तदनु विविधविरुदावलीविभूषितसदनुष्ठानपरिनिष्ठितान्तःकरणवृत्तिः संस्कृताङ्गलभाषोभयरसनाभिज्ञानाद्वितीयरसनः पूर्वपुरुषैः प्राणार्पणाद्युपायैश्चिरार्जितस्य परिरक्षितस्याविरतोपयोगेऽप्यपायरहितस्य त्रैलोक्यापूर्वरत्नस्याम्नायस्य वाचा कर्मणा चाद्वितीयाश्रयः सदा समरविजयी श्रीमन्महाराजाधिराजद्विजराजश्रीरमेश्वरसिंहमहोदयो मिथिलामहेन्द्रो मुजफ्फरपुरनगरे तत्संस्कृतसमितौ निखिलधर्माचरणनिराकरणप्रवणे कामक्रोधमदलोभमोहाद्यनेकापसहायसध्रीचीने अतिकपूयाचरणपरायणे कलौ विविधविषयविषमरसास्वादवशमुकुलितमानसानामधीयानानामपि शाबरभाष्यपठनमतिकठिनमिति कालान्तरे वार्त्तिकादिग्रन्था अनधिगतार्था भविष्यन्तीति पर्यालोच्य टीकानिर्माणाय समादिशत् सामान्येन ।

आत्मन्यप्येतद्व्यापारमवदघानस्तदनुकूलावकाशविरहादशक्यमिदं, निर्देशगौरवात्कथञ्चित्कार्यमेवेति दोलायितचित्तवृत्तिः सुपरिण्टेण्डेन्टपदासीनेनोदारमूर्तिस्वभावेन डाक्टरश्रीहरिचन्द्रशास्त्रिमहोदयेन "यावत्पाठनीयं तावल्लेखनीयमित्यध्यापकानामितरापेक्षया समयः सुलभः" इति प्रत्यबोधिषि ।

प्रबन्धलेखाय व्यापृतो मोक्षकथायामपि धृतानादरः कथमिव पाठयेदपि लिखेदपीति जानानोऽपि टीकाकरणाय समकल्पयम् । ततः परावृत्य पाटलिपुत्रनगरे तदुपकरणसम्पादनाय त्वरितमुदयूयुजम् । अवाप्तसाधनो लेखनाय प्रवृत्तो यावत्पञ्चषाणि पत्राणि नापूपुरम् तावदेव वलवता दैवदुर्विपाकानुगतदुःखवज्रेण ( प्लेगवशाद् द्वितीयपुत्रस्य ) उमादत्तस्य निधनेन विक्षतमना इत एव निमित्तादिदमापतितमिति संशयानो जाताया विपदोऽनुकूलमाचरितुं प्रयागस्थपण्डितपुरग्रामस्थितं गृहमेवायासिषम् । तत्रापि शून्याश इव अपहृतसर्वस्व इव जडवत्कियन्ति दिनानि कथञ्चिदयापयम् ।

ततः संस्कृतकौंसिलसभावसरे पुनः पाटलिपुत्रं समागतस्तदत्तीतमपि पुनः साक्षादिवानुभवन् तदीयवस्तून्यवलोक्य यां दशामवापम्, तां निरुद्यालमित्यलमात्मनो विशसनावस्थाश्रावणेन श्रोतुरपि दुःखकरेण दुःखाकरेण। षष्ठपत्रार्द्धमपूर्णपङ्क्तिलिखितं दृष्ट्वा पुनरुत्पीडितहृदयः कर्तुमकर्तुमिह चिरं चिन्तयानो यद्भावि तदभूत् परमपि भावि भवेदेव किमनयाऽनायत्तभावनया इदमेव तावत्पूर्णं करवाणीत्याशया लिखतः पूर्वं पङ्क्तिः पश्चात्पत्रं च पूर्त्तिमगाताम्। इतरापेक्षया इममेव शोकापनोदोपायमीक्षमाणोऽत्र प्रवृत्तः, समाप्तिकामस्त्वरितलेखनशीलोऽभवम्। गुणानामेव ग्रहणे दोषाणां प्रहाणे च मतिमवहितां कर्तुं नापरयम्। तदनुकूलचेतःप्रसादाभावाद् भग्नोत्साहस्येदमेवातिबहु। अपि दोषा केचित्पुरुषस्वाभाविकधर्मतया न सुपरिहरा इत्यवश्यभाविनस्तेऽभूवन्नेव। ये पुनरवधानेन निरसितुं शक्यास्तेऽपि चेतसः शोकाकुलतया समयसङ्कोचात्पुनर्निरीक्षितुमवकाशाभावात् स्वपरिच्युतेः सहसा स्वसाक्षात्काराभावाद् दुरवगाहविषयवशाच्च अपरिहृताः सन्त्येवेति परीक्षकैरेव निराकार्याः सत्यवसरेऽस्माभिरपि। "सर्वथा व्यवहर्तव्ये कुतो ह्यवचनीयतेति" सर्वानुभूतिमूलकाभियुक्तोक्त्या अपुनर्निरीक्षितमेव प्राहिणवं मुद्रणाय।

मुद्रणञ्चास्य कल्याणकोटिभाजनश्रेष्ठी सम्प्रतिकलकत्तानगरवासी चि० बाबूश्रीओङ्कारमलजालानमहोदयः स्वकीयद्रव्यव्ययेन स्वकृतप्रबन्धेन च कलकत्तानगरे एव कारितवान्। प्रूफसंशोधनं कियत्पत्रपर्य्यन्तं सकलशुभगुणालङ्कृतः पं० श्रीबलदेवमिश्रः काव्यतीर्थोऽकार्षीत्। कार्यवशात्कानपुरं गतवति तस्मिन्नेतत्कः कुर्यादिति सोच्छ्वासं चिन्तयतोऽनेकशास्त्रपरिशीलनलब्धवैदुष्यः श्रीविशुद्धानन्दसरस्वतीमहाविद्यालयाध्यापकः पण्डितश्रीपलटूझाशर्मशुभोदयो मम च्छात्रः स्मृतिपथमागतः। पत्रद्वारा समधिगतैतद्विषयाशयोऽसावतिविनीतः पूर्णावकाशविरहेऽपि सहर्षमग्रहीदस्य संशोधनादिकार्यभारम्। अनैषीच्च सोत्साहमतिश्रमेण समाप्तिम्। अत एव द्वाभ्याममूभ्यामात्मीयाभ्यामनेके धन्यवादाः शुभाशीर्वादाश्च दीयन्तेऽसकृत्। एतयोः साहाय्यमन्तरेदं कार्यं कथमपि न स्यादित्यनयोरुपकारेण चिरमनुगृहीतः।

यद्यपि मुद्रितेऽस्मिन् अर्थाननुसन्धाननिबन्धना भूयांसो दोषाः सन्ति, तथापि मदीया एवेति नान्यस्तद्वाच्यमर्हति। आदर्शपुस्तके अभ्यासवशात्सहैव पदानि वाक्यानि च लिखितानि। विभज्य न स्थापितानि। न वा पूर्वोत्तरवाक्याङ्गभावसूचकचिह्नानि स्थापितानीति मुद्रितेऽपि तथैव प्रतिबिम्बितानीतिनातिचित्रीयते। किन्तु वाचकानां चेतसि चिरमुद्वेगकारितयाऽवमानितानि सहृदयैः स्वयमूहितव्यानि तानीति भृशमर्थये। भाष्यं क्वचित्स्थूलाक्षरैर्मुद्रितं क्वचित्सूक्ष्माक्षरैरित्यत्र यन्त्रालयपरिवर्तनम्, अन्यत्र स्थूलाक्षरविरहश्चेति हेतुद्वयं बहिरङ्गदूषणं नार्थं तिरोधत्त इति न विशिष्य दूषणं प्रेक्षावत्प्रवृत्तये।

इह पुनस्तत्त्वमावेदये। अत्र भाष्यव्याख्यानं न मदीयापूर्वाभिनवकल्पनाप्रलपितपदार्थकलितकलेवरम्। क्व वा मादृशामीदृशार्थे कल्पनावकाशसामर्थ्यम्। कथं वेदृशव्याख्यानप्रकाशनेन प्रकृते लोकोपकारलेशोऽपि। न वा आहोपुरुषिकाख्यापनार्थमत्र मे प्रवृत्तिः, अपि तु श्रीमत्पार्थसारथिमिश्रैरतिस्फुटं व्याख्यातया श्रीमत्कुमारिलभट्टपाद-

प्रणीतश्लोकवार्त्तिकाख्यपद्यमयटीकया अतिविशदीकृतेऽप्यत्र भाष्ये ये उक्तटीकायाः काठिन्याद्विस्तृतत्वाच्च न तद् द्वारापि प्रवर्तितुमुत्सहन्ते। तेषां सुकुमारमतीनामत्र प्रवृत्तये मे प्रवृत्तिरियम्। यद्येतेन कश्चिदुपकारः स्यात्तर्हि अग्रेऽपि प्रयतिष्ये। नात्रातीव कर्तव्यं दोषदृष्टिपरं मनः। दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते इति श्रीभट्टपादोक्त्यनुसारेण परगुणग्रहणपरायणान्तःकरणा महामहिमशालिनो विद्वांसोदयोदयमधुरदृशा पदप्रचाराप्रगल्भस्य बालकस्येव मम स्खलनेऽपि धृतकौतुका निरीक्ष्येदमत्र मामकीनं श्रमं सफलयन्त्विति सप्रश्रयं प्रार्थयेऽसकृदिति शम्।

श्रीमतामाश्रवः

पं० हरिहरकृपालुद्विवेदी

# भूमिका

## ( प्रथमसंस्करणस्य )

अयि निखिलविद्यावदातमानसाः सहृदयधुरीणास्तत्रभवन्तो महानुभावा विद्वद्वरा विदितमेवैतद् भवतां यन्निखिलधर्माचाराचारणभास्वरे भारते खण्डे सकलनिगमागमपारावारपारीणैः करामलकवदधिगतब्रह्मप्रकाशैस्तत्त्वदर्शिभिर्महर्षिभिः परमकरुणया सकलजगन्नियन्तुश्चराचरप्रभवस्य श्रीपरमेश्वरस्य निःश्वाससंग्रहस्वरूपम् ऋग्यजुःसामाथर्वलक्षणमखिलं वेदं मन्त्रब्राह्मणारण्यकोपनिषदादिभेदैर्बहुधा विभक्तमपि सकलार्थसाधनोपयोगितया कर्मकाण्डोपासनाकाण्डज्ञानकाण्डरूपेण पुनस्त्रिधा विभज्य सकलमिदं प्राणिजातं चिरमुपकृतमिति ।

तत्राध्वरप्रयोगसमवेतद्रव्यदेवताद्यर्थस्मारकतया मन्त्रभागस्य कर्मकाण्डत्वम्, मन्त्रोदितार्थेतिकर्त्तव्यताबोधकतया ब्राह्मणभागस्य तच्छेषताम्, उपनिषद्भागस्य चोपासनाज्ञानप्रतिपादकत्वेनोपासनाकाण्डत्वं ज्ञानकाण्डत्वञ्च प्रतिपादितम् । तदर्थं निर्णयसौकर्य्याय पुनर्न्याय-वैशेषिक-पातञ्जल-सांख्य-मीमांसा-वेदान्तप्रभृतीनि दर्शनानि च निर्म्मितानि ।

तथा च तेषु सकलेष्वपि दर्शनशास्त्रेषु पूर्वमीमांसादर्शनस्यैव सकलवेदार्थप्रकाशकत्वाद् वेदमूलकत्वात् सर्वदर्शनोपयोगित्वात् "ज्योतिष्टोमेन यजेत स्वर्गकामः", "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यादि सहस्रशो निरतिशयस्वःस्वाराज्यादिप्रापकोपायप्रदर्शकत्वाच्च सर्वोपादेयत्वं सर्वमान्यत्वं सर्वदर्शनालङ्कारत्वञ्च स्वीकृतमिति नाप्रत्यक्षं प्रेक्षावताम् ।

तच्चेदमखिलमन्त्रब्राह्मणोभयात्मकवेदमधीयानानां निश्शेषविद्यानिष्णातानाम् विदुषामपि यथावदर्थावबोधो न मीमांसादर्शनाध्ययनमन्तरा कदापि सम्भवतीति सर्वथा मन्वानेन सर्वतन्त्रस्वतन्त्रेण तत्रभवता दिव्यचक्षुषा महर्षिप्रवरेण जैमिनिना सर्वजगदुपकाराय द्वादशाध्यायात्मकं पूर्वमीमांसाशास्त्रमाविष्कृतमिति । तत्र भगवता शबरस्वामिना भाष्यं व्यरचि । स्वनामधन्यैः कुमारिलभट्टपादैर्वार्त्तिकं विरचितम् । तदनुसारिणी च पार्थसारथिमिश्रैः शास्त्रदीपिका प्रकाशिता । तत्र च शाबरभाष्यस्यातिदुरधिगमत्वाद् दुर्बोधत्वाच्च न केवलं छात्राणामेव; किन्त्वध्यापकमहोदयानामप्यनेकेषु स्थलेषु सम्मोहमवगाहते बुद्धिरित्याकलय्य परीक्षापारावारसमुत्तितीर्षूणां छात्राणामध्यापकानाञ्च पठनपाठनसौकर्य्याय "विहारोत्कलसंस्कृतसमितिसभापतीनाम्, विविधविरुदावलीविराजमानमानोन्नतानाम् जी० सी० आई० ई० के० बी० ओ० प्रभृतिपदवीविभूषितानां मिथिलेश्वरश्रीरमेश्वरसिंहशर्म्ममहोदयानाम् असकृदनुरोधेन विभूषितमहामहोपाध्यायपदैः प्रधानाचार्य्याद्यनेकोपाधिविशिष्टैः पण्डितप्रवरैरस्मद्गुरुवर्य्यैः श्रीहरिहरकृपालुद्विवेदिभिर्महानुभावैः शाबरभाष्यस्य कल्पकलिकानाम्नीं टीकां प्रकाश्य

गीर्वाणवाणीविलासप्रणयिनां प्रेक्षावतां विशेषतश्छात्राणाञ्च परीक्षार्थिनां सुमहानुपकारोऽकारीति तेभ्यो महद्भ्योऽनेके धन्यवादाः सन्ति ।

अथैतद्ग्रन्थप्रकाशनसाहाय्यं प्रभूतं वितरद्भिः सनातनधर्मप्राणैः संस्कृतसरस्वतीप्रधानसेवकैः परमोदारहृदयैः श्रीमद्भिः श्रेष्ठिप्रवरैः श्रीमद्गुरुमुखरायगुप्ततनूजश्रीगज्जुमलगुप्तात्मजैः—ओंकारमलगुप्तमहोदयैर्निरतिशयमुपाक्रियतेति तेभ्योऽतीतसंख्यान् धन्यवादानाशीर्वादांश्च वितरामः ।

सेयं भाष्यस्य दुरूहार्थतामपनयन्ती सर्वार्थप्रकाशिका कल्पकलिका सहृदयहृदयालङ्कारभूता पठनपाठनसौकर्य्यप्रदानेन सर्वेषां छात्राणामध्यापकानाञ्च परमप्रमोदाय भविष्यतीत्याशास्ते—

**नन्दप्रसादचतुर्वेदी**
सांख्य-साहित्यतीर्थः,
मनोहरदास-जयनारायणविद्यालयाध्यापकः
चौक, पटना सिटी ।

## धन्यवादाः

आसीद्वैश्यान्ववायामलकमलदलोन्मेशक्तृत्तिग्मरश्मिः
स्वव्यापारप्रमादव्यथितजनमनश्शान्तये शीतभानुः ।
अर्थिव्रातोपनम्राभिमतफलकुलक्लृप्तये कल्पकल्पः
शिष्टश्रेष्ठी सुनिष्ठः सति गुरुमुखरायेत्यभिख्योऽत्र मुख्यः ॥ १ ॥

तत्पुत्राः पञ्च पञ्चाननसदृशनिजोत्पादितात्मप्रभावाः
कर्तव्यार्थे नदीष्णाः स्वधिगतविनया निष्पवित्राचरित्राः ।
प्राभूवन्प्रौढतेजःप्रचितमुखरुचः किन्तु तेषामुपान्त्यः
श्रीमान् गज्जूमलोऽभूत्स्वसुतगुणगणैरग्रणीरग्रगण्यैः ॥ २ ॥

सर्वत्रादीनदीक्षो व्यवहृतिनिपुणः स्मेरपूर्वाभिभाषी
स्निग्धोद्बुद्धान्तरात्मा व्यसनिषु विमुखः सम्मुखः सज्जनेषु ।
आलोक्यानेकदुःखं जगति जनिमतामत्र जातापरागः
स्वल्पायुः स्वर्गसौख्यान्यनुभवितुमसावत्यजन् मर्त्यलोकम् ॥ ३ ॥

सद्रत्नं रत्नखानेरिव सहजगुणो मञ्जुमूर्त्तिस्वभावः
सत्यश्रद्धासमृद्धिप्रथितपृथुयशा धीरधौरेयमेधः ।
लोकश्रेयोऽर्थमर्थाप्तिवितरणमिति ज्ञापनार्थावतारः
तुल्यप्रेमा त्रिवर्गे सहृदयहृदयानन्दवृन्दैककन्दः ॥ ४ ॥

स्वीयाचारविचारचारुचरितो व्यापारपारीणधीः
दानौदार्यदयादमादरगुणग्रामाभिरामाकृतिः ।
कार्याकार्यविवेकसेकसरसस्वान्तो नितान्तोन्नतिः
श्रीलौङ्कारमलोऽमलोऽतुलमतिः पुत्रः ततः सत्तमः ॥ ५ ॥

विद्युद्यन्त्रपरिष्कृतैः प्रियकरैर्दीप्तैः प्रदीपैरपां
सम्पातैः पवनैश्च धर्मसलिलोद्रेकापनोदोद्यतैः ।
युक्तापेक्षितसाधनैर्बहुविधैः शुभ्रान्तराभ्रङ्कषा
यस्यास्ते "पटना"भिधाननगरे विस्मेरवेश्मावलिः ॥ ६ ॥

अत्रैतद्धर्मशाला पथिकजनमुदे विद्यते हृद्यपद्या
सर्वारामा त्रिभूमिर्विपुलपरिकरा राजमार्गान्तिकस्था ।
लोकाभीष्टार्थसिद्ध्यै सकलमहसुखं सत्यदेवस्य चास्मि-
न्नानन्दं दर्शकानां जनयति हृदये सुन्दरं मन्दिरं नः ॥ ७ ॥

धर्मोन्मूलनकौतुकेऽत्र समये सर्वे स्वयं स्वामिनः
सन्तीभ्यास्तु विशिष्य सन्तु न च तैरर्थोऽस्ति कथ्याः कथम् ।
अर्थप्रौढवयःप्रभुत्वसहजप्राचीनधर्मादरा-
द्येकावासमहोज्ज्वलाकृतिरयं तद् वस्तुतः संस्तुतः ॥ ८ ॥

मीमांसाभाष्यभाषापरिचयविधये मन्दमेधानुरोधात्
स्वल्पस्पष्टार्थवाक्यैः स्फुटपदघटितैः संस्कृता वृत्तिरल्पा ।
सर्वत्रास्याः प्रचारः कथमिव भविता मुद्रणे द्रव्यदैन्यं
कोऽन्यो धन्यो वदान्यः प्रभुरिति मृशतःसङ्गमोऽमुष्य मेऽभूत् ॥ ९ ॥

ज्ञात्वाऽशेषमसौ ममाशयमिहामन्दारविन्दाननो
धर्मोऽसौ मम तत्परोपकृतये मुद्रापयिष्येऽचिरम् ।
इत्याहाथ मुदापनिद्रहृदयो दत्वाऽतिमुद्राशिषः
भारानस्य समर्प्य हर्षभरिताश्चायुष्मते स्मो वयम् ॥ १० ॥

तत्त्वोदर्कवितर्ककर्कशधियो ये सन्ति तेषां कृते
नायं किन्तु कृतो मया मृदुधियामत्रोत्पिपासावताम् ।
एतद्भाष्यगभीरतत्त्वनिकषग्रावोग्रतर्कस्फुर-
न्मानोन्मेयविवेचनश्रमभरः स्तोकाय मोदाय वः ॥ ११ ॥

दारैरपत्यैः सह संपदा च सौख्यैरसंख्यैः सह वन्धुवर्गैः ।
सानन्दमोङ्कारमलः चिरायुः जीव्यादितीशं भृशमर्थयेऽहम् ॥ १२ ॥

**पं० हरिहरकृपालुद्विवेदी**

# कल्पकलिकाविषयसूची

म० म० हरिहरकृपालुद्विवेदिप्रणीता

शाबरभाष्यव्याख्यानभूता

# कल्पकलिका

अरविन्दासनासीनां वीणापुस्तकधारिणीम् ।
प्रारब्धाभीष्टसिद्ध्यर्थं वन्दे वागीश्वरीमहम् ।। १ ।।

नमोऽखिलजगज्जन्मस्थेयभङ्गैकहेतवे ।
निबद्धनरनिस्तारसेतवे वृषकेतवे ।। २ ।।

स्वर्गापवर्गसंसर्गमार्गेष्वागमनिर्गमौ ।
यतो बीजस्य जायेते तदहं कर्म संश्रये ।। ३ ।।

अचेतनाचिन्त्यशक्तिस्वैरिकर्मवशंवदः ।
चित्रमुच्चावचं भात्रं चेतनश्चिरमञ्चति ।। ४ ।।

वेदार्थविज्ञानमहार्णवस्य,
पारं प्रयात्वल्पमतिः सुखेन ।
इतीव यः सूत्रतरिं प्रतेने,
तं जैमिनिं वेदमुनिं प्रपद्ये ।। ५ ।।

चेतसा शबरस्वामिपादपद्ममहं हृदि ।
चिरं निधाय तद्भाष्यं गम्भीरार्थं प्रकाशये ।। ६ ।।

त्रयीप्रकाशेऽपिहिते परोक्त्या,
पुंसः प्रवृत्तानपथेऽपिधानम् ।
योऽपास्य तर्कैः पुनरुद्दधार,
ध्येयः सदा नः स कुमारिलाङ्घ्रिः ।। ७ ।।

ब्रह्माण्डप्रततोरुशाखविमलन्यायप्रसूनोत्किरः,
पुण्यप्राप्तविवेकिसज्जनमनोऽभीष्टार्थसम्पादिनः ।
सन्मूला विकलाध्वराखिलफलोल्लासित्रयीस्वस्तरोः,
भाष्यस्याऽस्य सुखेन कल्पकलिकां टीकां समुट्टङ्कये ।। ८ ।।

नानाम्नायोच्चशाखाप्रचयसमुचितालोकलोपापचेष्टैः,
सर्वज्ञैर्वञ्चकैश्चापरिहितवसनैर्विप्लुतप्राच्यविद्या ।
मीमांसानन्दवापी ननु निगममहारण्यदुर्गस्थलस्था,
विज्ञैरेषा विशङ्कं कविवरशबरस्वामिसूक्त्यैव सेव्या ।। ९ ।।

क्वेदं भाष्यमगाधबोधविबुधध्यानावधेयार्थकम्,
क्वाहं हन्त हतोहमन्थरमतिर्व्याख्यातुकामस्तथा ।
तीर्थाप्लावसुधट्टभट्टचरणोद्दिष्टापदुष्टाध्वना,
क्षन्तव्योऽस्मि परिस्खलन्नपि चलन्नैवापहास्यः सताम् ।। १० ।।

प्राच्याचारविचारचारुचरितप्रादुर्भवत्प्राणिभृत्,
प्राज्यप्रेमपरिष्कृता प्रतिभटप्रौढ़प्रतापश्रियः ।
एषा श्रीमिथिलेश्वराभिधमहाराजाधिराजप्रभोः,
निर्देशात्कलिका कृता प्रभवतु प्रेक्षावतां प्रीतये ।। ११ ।।

शब्दार्थानितराममी परिचिता नव्याः क्वविज्ञानिनाम्
न ज्ञातेषु रुचिस्तथापि कृतिनामाधास्यते कौतुकम् ।
''स्वल्पाप्रौढ़पदाक्रमोपचरिताव्यक्ताक्षरव्याहृतिः,
बालस्येव ममाप्यसाविति पृथुप्रत्याशया व्यापृतः ।। १२ ।।

श्रीमद्भट्टकुमारिलस्य चरणैर्व्यक्तीकृते शाबरे,
भाष्येऽस्मिन्नपि नूतनार्थविषयव्याख्यास्पृहा चेत्तदा ।
स्यादेवं तरुणारुणस्य किरणैरामूलमौलिस्फुटे,
मेयेऽर्थेऽपि पुनः प्रदीपकलिकालोकाभिलाषःसताम् ।। १३ ।।

मूलार्थावगमोपपत्त्यभिमताक्षेपार्थसंयोजनैः,
अन्यूनानधिकैर्निरुक्तनियतस्पष्टार्थवाग्विस्तरैः ।
व्याख्यातानुभवत्यपेतविषयासङ्गो व्यथां यादृशीम्,
कस्मै केन स तादृशीं प्रकटये जानन्ति ये तत्कृतः ।। १४ ।।

नेयं बालमुदे यतोऽतिमधुरैः ख्यातैश्च शब्दैः कथा
शक्या कर्तुमियन्तु किन्तु निगमन्यायोपनीतार्थिनाम् ।
धर्माधर्मविवेकिनां कृतधियां लोकोत्तरश्रेयसे
प्रारब्धेति क्वचित् पदैर्न कठिनैर्दुष्यान्मम व्याहृतिः ।। १५ ।।

प्रयोजनपरिज्ञानमन्तरा स्वल्पप्रयाससाध्ये कर्मणि शास्त्रे वा मन्दोऽपि न प्रवर्तते, प्रागेव तु बहुलायाससाध्ये तत्र प्रेक्षावानिति प्रकृतेऽत्र मीमांसा-शास्त्रे प्रेक्षावत्प्रवृत्यौपयिकविषयप्रयोजनसम्बन्धाधिकारिरूपानुबन्धचतुष्टय-निर्देशाय वेदज्ञाननिधिर्महर्षिजैमिनिः प्रथममथातो धर्मजिज्ञासेति सूत्रयाञ्चकार । अस्यां द्वादशाध्याय्यां मीमांसायां प्रमाणभेदशेषप्रयुक्ति-क्रमाधिकारसामान्यातिदेशविशेषातिदेशोह-बाध-तन्त्र-प्रसङ्गाः क्रमाद् द्वादशा-नामध्यायानां विषया इति स्पष्टमेव तद्विदाम् ।

ननु व्याकरणसूत्रकारस्य यथा प्रयोजनप्रदर्शनं विना व्याकरणसूत्र-रचनायां प्रवृत्तिस्तथा महर्षिजैमिनिमुनेरपि मीमांसासूत्ररचनायां प्रवृत्तिः सम्भवतीति, वृथा प्रयोजनप्रदर्शनप्रयासः । शिष्या अपि तद्वदत्र प्रवर्तिष्यन्ते नहि प्रयोजनमनभिधाय सूत्राणि प्रणीतानीति । प्रेक्षावन्तो न प्रवर्त्तन्ते इति नियमः । क्वचिदस्ति दृष्टचर इति चेत् ? न । स्वल्पप्रयत्नसाध्ये कौतुकेन, परप्रेरणया वा प्रवृत्तिसम्भवेऽपि व्युत्पन्नपद-पदार्थस्य निखिलवाक्यगत-सन्देहनिराकरणप्रयोजनायां विद्यान्तरोपेयभूतायां प्रचुरपरिश्रमसाध्यायां पण्डितरूपैकवेद्यायां मीमांसायां प्रयोजनपरिज्ञानमन्तरा प्रेक्षावतां प्रवृत्त्य-सम्भवात् । किञ्च प्रयोजनाज्ञानापराधेन शास्त्रान्तरा प्रवृत्तौ स्वल्पमेवानिष्ट-मापद्यते, प्रकृतशास्त्राप्रवृत्तौ तु निखिलबाह्यार्थनिरूपणस्य यो न्यायस्त-स्मिन्नज्ञाते दुर्ज्ञाते वा सर्ववाक्यार्थनिरूपणमसत्स्यादिति विशिष्टानिष्ट-सम्भवाच्च । अथैवं फलनिर्देशस्यावश्यकत्वे व्याकरणादाविवात्रापि भाष्य-कृतोऽपि तत्प्रतिप्रादनसम्भवात्, विशिष्य सूत्रकारस्यैव कथमत्र प्रवृत्तिरिति वाच्यम् ? प्रयोजनान्तरप्रतिपादनसम्भावनया स्वोक्तप्रयोजनप्रतिपादने निर्णयाभावात् प्रवृत्त्यौपयिकप्रयोजनान्तरापेक्षया प्रयोजनप्रतिपादन-स्यात्यावश्यकत्वाच्च ।

ननु श्रोतृबुद्धिसमवधानाय यथा प्रयोजनमभिहितम्, तथा शास्त्रारम्भ-हेतुभूतः सम्बन्धोऽपि वाच्यः—अनेन सम्बन्धेनेदं शास्त्रमायातमिति,

अन्यथा सूत्रकृतोऽसम्बद्ध-शङ्कया विनेयानामविश्वासापत्तेः । अतएवाजिज्ञासितार्थाभिधायित्वशङ्कानिराकरणाय 'अथातो धर्मं व्याख्यास्याम (वै० द. १-१-१) इति वैशेषिकसूत्रे शिष्यप्रश्नानन्तर्यरूपः शास्त्रावतारहेतुभूतः सम्बन्धः प्रतिपादित इति चेत् ? सत्यम् । धर्मज्ञानेन मीमांसाशास्त्रस्य साध्यसाधनरूपः सम्बन्धः धर्मज्ञान-मीमांसाशास्त्रयोः समभिव्याहारादेव स्फुटं प्रतीयत इति, न सूत्रकृता स पृथक् निर्दिष्टः । अनन्यलभ्यार्थसूचकत्वात्सूत्रस्य । शिष्यप्रश्नानन्तार्यादिरूपः सम्बन्धस्तु न प्रकृतशास्त्रारम्भभूतः, शिष्यप्रश्नं विनाऽपि करुणावरुणालयमहर्षिजैमिनेः तमःपङ्कमग्नस्य जगत उद्दिधीर्षया स्वत एव धर्मज्ञानोपायभूत-मीमांसाशास्त्रस्य प्रणयनसम्भवात् । स चायं सम्बन्धः सम्बन्धिनोस्समभिव्याहारादेव स्फुटं प्रतीयते इति न विशिष्याभिहितः । यत्तु वेदाध्ययनानन्तर्यमथशब्दार्थं मत्वा वेदाध्ययनेन मीमांसाशास्त्रस्यानन्तर्य्यरूपः शास्त्रावतारहेतुभूतः सम्बन्धः अथशब्देन साक्षादेव सूत्रकृताभिहित इति, तदाक्षेपोऽसंगत इति । तत्तुच्छम् । वेदाध्ययन-जिज्ञासाक्रिययोरानन्तर्यरूपसम्बन्धस्यार्थशब्दार्थत्वेऽपि मीमांसाशास्त्रावतारहेतुभूतस्य तदानन्तर्यस्य तेनाबोधनात् । नहि जिज्ञासैव मीमांसाशास्त्रम् । जिज्ञासा हि ज्ञानविषयिणीच्छा, सा च श्रोतृक्रिया । मीमांसा तु वक्तृनिष्ठा विचारात्मिकेति, तयोः परस्परं भेदात् । पर्यायभ्रमेण मीमांसायां धर्मजिज्ञासापदप्रयोग इति न शास्त्रावतारहेतुभूतः सम्बन्धः सूत्रकृता साक्षादभिहितः ।

एवं शिष्यप्रश्न-देवताराधन-रसायनाद्यानन्तर्यरूपः, गुरुपरम्परात्मको गुरुपर्वरूपो वा सम्बन्धो जिज्ञासायामेव बोधितो, न मीमांसाशास्त्रे, मीमांसाया जिज्ञासातो भिन्नत्वात् । शिष्यप्रश्नानन्तर्यरूपः सम्बन्धः कणादशास्त्रे प्रदर्शित एव ।

गुरुपर्वक्रमश्च क्वचिदेवमभिहितः । तद् यथा—ब्रह्मा बृहस्पतये मीमांसाशास्त्रं प्रोवाच, सोपीन्द्राय, सोप्यग्नये, स च वशिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये । स च स्वोपदेशानन्तरमिमं मीमांसाग्रन्थं निबबन्ध । तदेवं सम्बन्धनिरूपणमपि न सत् निष्प्रयोजनत्वात् प्रमाणाभावाच्च । यादृशसम्बन्धाभिधाने प्रकृतशास्त्रश्रवणे श्रोतॄणां प्रवृत्तिः

अनभिधायाभिधाने तत्राप्रवृत्तिः। तादृश एव सम्बन्धो वाच्यः, अपेक्षितत्वात्। अप्रवृत्तिनिवृत्तिकरसम्बन्धप्रतिपादनं तु व्यर्थम्। यत्किञ्चिदनन्तरं यत्किञ्चिदुत्पत्तेः सर्वसम्मतत्वेनाजिज्ञासितत्वात्। गुरुपरम्पराकथनमपि व्यर्थमेव निष्प्रमाणत्वात् निष्फलत्वाच्च नहि अस्मिन् सम्बन्धे किञ्चित् प्रमाणमस्ति। क्वचित्क्रमान्तरस्यापि श्रवणात्। तथा हि ब्रह्मा महेश्वरो वा प्रजापतये मीमांसाशास्त्रं प्रोवाच प्रजापतिरिन्द्राय इन्द्र आदित्यायेत्यादि दर्शनमिति सप्रमाणकः सप्रयोजनश्च सम्बन्धो वाच्यः स च साध्यसाधनभावरूप एव युज्यते इति भावः।

इदं पुनरिहावधेयम्-ज्ञाप्यजन्यभेदेन विषयो द्विविधः। ज्ञाप्यो धर्मः, जन्यं तज्ज्ञानम्, धर्मेण सह शास्त्रस्य सम्बन्धः ज्ञाप्यज्ञापकभावलक्षणं तज्ज्ञानेन सह जन्यजनकत्वलक्षणः। धर्मज्ञानमवान्तरप्रयोजनम्। परमप्रयोजनमभ्युदय-निःश्रेयसे। तत्कामोऽधिकारीत्यनुबन्धचतुष्टयं श्रुत्यर्थाभ्यां सूत्रकारेण श्रोतृप्रवृत्तिसिद्धये समुक्तम्। लोकानुग्रहश्च, शास्त्रप्रस्तावे हेतुः।

ननु शिष्टाचारपरम्पराप्राप्तस्य विघ्नध्वंससमाप्त्यादिफलकस्येष्टदेवतानमस्कराद्यात्मकस्य मङ्गलस्याकरणात् सूत्रकारस्याशिष्टत्वशङ्कया प्रेक्षावतामास्तिकानामत्र प्रवृत्त्यनुपपत्तिरिति चेत्? न। अन्यार्थं नीयमानोदकुम्भवत् अथ शब्दश्रवणमात्रेण मङ्गलस्य कृतत्वात्

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभावितिस्मृतेः॥"

लोकशब्दं प्रयुञ्जानेन भाष्यकारेणापि तत्त्वानुस्मरणरूपं तत्कृतमेव। विशुद्धज्ञानदेहायेत्यादि वदता वार्तिककारेण स्पष्टमेव मङ्गलाचरणं कृतमिति, नात्र तदुपालम्भः सम्भवति इति ध्येयम्, विशुद्धज्ञानदेहयेन्यादिपद्यं सप्तशत्यां कीलकस्थमेवात्र सन्निवेशितमितिध्येयम्। लोके येषु अर्थेषु इति भाष्यम्।

कल्पकलिकायुते शाबरभाष्ये धर्मजिज्ञासाधिकरणम्।

**सूत्रम्—अथातो धर्मजिज्ञासा। १।१।१**

**भाष्यम्—लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्! तदाध्याहारादिभिरेषां परिकल्पनी-**

**योऽर्थः, परिभाषितव्यो वा । वेदवाक्यान्येव एभिर्व्याख्यायते । इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत ?**

अत्र षडर्थाः प्रतीयन्ते—१ सर्वव्याख्या २ उपालम्भः । ३ प्रत्याख्यानम् । ४ परिसंख्या । ५ स्तुतिः । ६ अथशब्दस्य दूषणम् ।

व्याख्यानं द्विविधम्-साधारणमसाधारणञ्च । आद्यं निखिलव्याख्येयानुगतम् । अन्त्यमेकैकसूत्रनियतम् ।

ननु प्रथमसूत्रसन्निधिपाठात् आदिमसूत्रघटकाथशब्ददूषणपरमेव युज्यते इति चेत् ? न । आदौ प्रयुक्तस्य भाष्यस्य निखिलव्याख्यानशेषत्वसम्भवेनाथशब्ददूषणपरत्वनिर्णायकप्रमाणाभावात्, सर्वव्याख्यानसाधारणस्य विषयस्य निरूपणं ग्रन्थादावेव युज्यत इति, न स्थानकृतो विशेष इति भावः ।

ननु सकृदुच्चरितस्य वाक्यस्यानेकार्थत्वकल्पनमनुचितमिति चेत् ? न । व्याख्यातृपुरुषभेदेनैकवाक्यानेकार्थत्वस्वीकारेऽपि, स्वस्वमते एकार्थकत्वस्यैव सम्भवेनैकमतेऽनेकार्थत्वकल्पनाभावेनादोषात् । गतोऽस्तमर्क इत्यादिवत् सति तात्पर्ये पौरुषेयवाक्यस्यानेकार्थत्व-( स्वयमपिकारेणात्र ) कल्पनायामपि दोषविरहाच्च ।

पूर्वोक्तेषु षट्सु पक्षेषु सर्वव्याख्यानसाधारणं व्याख्यानमधुना प्रदर्श्यते । तथा हि—सूत्रेषु निखिलव्याख्येयसूत्रेषु यानि पदानि सन्ति, तानि सति सम्भवे लोकप्रसिद्धार्थानि एव ग्राह्याणि इत्यनेन प्रवृत्तिरुक्ता । न पदान्तराध्याहारेणैषां परिकल्पनीयोऽर्थः गुण-वृद्ध्यादिवत् परिभाषितव्यो वेत्यनेन च निवृत्तिरुक्ता । प्रवृत्ति-निवृत्तिपरवाक्यस्यैव शास्त्रत्वात् । यदाहुर्वृद्धाः—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

श्लो० वा० श० प० श्लो० ४ । इति ।

**अत्रैतच्छब्दस्य सर्वनामत्वेन तस्य निसर्गतः प्रधानपरामर्शितया सूत्राणां** सप्तम्या विशेषणत्वप्रतीत्या गुणतया प्रधानभूतानां पदानामेवपरामर्शस्यन्याय्यतयाशास्त्रप्रवृत्तिवन्निवृत्तेः पदविषयत्वप्रतीतावपि तत्राध्याहारादेः प्राप्ति-

विरहादगत्या निवृत्तिः गुणभूतेषु सूत्रेषु एव बोध्याः, पदस्य प्रकृतिप्रत्ययोभयात्मकस्य नियतक्रमतया तत्राध्याहारादेर्वक्तुमशक्यतया पदघटितवाक्ये एव तन्निवृत्तिरवगन्तव्या, तत्राध्याहारादेर्वक्तुं शक्यत्वात् । ईदृशसर्वसाधारणव्याख्यानफलं भाष्यकारः स्वयमेवाह एवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते इत्यादि । अयं भावः—वेदवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्, सर्वैर्वेदवाक्यान्युदाहृत्य व्याख्यायन्ते तेषां प्रयोजनवत्त्वात्, न तु तदुपायभूतसूत्राणि तेषां स्वातन्त्र्येण प्रयोजनवदर्थप्रतिपादकत्वाभावात् । एतेन व्याख्यानेन सर्वाणि सूत्राणि व्याख्यातानि । सर्वेषु व्याख्येयेषु निखिलानि पदानि लोकप्रसिद्धार्थकान्येवेति, नात्रापूर्वार्थकत्वकल्पनाप्रयुक्तसंशयावकाशः ।

नन्वत्र भाष्ये एवशब्दस्वारस्येन सर्वत्र सूत्रव्याख्यानस्यानावश्यकत्वप्रतिज्ञयाग्रे करिष्यमाणं सूत्रव्याख्यानमसंगतं स्यादिति चेत् ? न । अल्पार्थकत्वतात्पर्येणात्रैव शब्दप्रयोगात् । लोकप्रसिद्धार्थकपदग्रहणेन प्रायः सूत्राणि व्याख्यातानि क्वचिदप्रसिद्धार्थकपदव्याख्यानमल्पमवशिष्यते । तच्च सदपि स्वल्पत्वादसदित्युपचर्यते इति भावः । इतरथेति भाष्यम् । यदि सूत्रेषु लोकप्रसिद्धार्थकातिरिक्तानि पदानि गृह्येरन्, तदा वेदवाक्यव्याख्यानं चापेक्षितं स्यादिति, उभयव्याख्याने प्रयत्नगौरवं स्फुटमेव । ननु प्रसिद्धार्थकपदग्रहणस्याध्याहारादिवर्जनस्य च सति सम्भवे सर्वत्र सर्वसम्मततयात्र विशिष्यत तदभिधानं मन्दफलम् । न हि बलादप्रसिद्धार्थकपदग्रहणमध्याहारादियोजनं क्वचित्क्रियते इति चेत् ? न । नासूया कर्त्तव्येतिन्यायेन पौरुषेयवाक्ये केनचित् स्वप्रसिद्धार्थकस्याप्यौचित्येन तत्र तस्य गुणत्वे प्रसिद्धार्थकत्वस्य गुणत्वेनादोषात् । न हि प्रसिद्धार्थो न वाच्यः, पौरुषेयेण वाक्येनेति नियमः । तथा सति विनेयानामविश्वासापत्तेः प्रसिद्धार्थाभिधानद्वारैव क्वचिद् प्रसिद्धार्थमपि विश्वसिति लोकः । तस्मात् सति सम्भवे प्रसिद्धार्थकग्रहणं अध्याहारादिवर्जनमित्युक्तिः भाष्यकृतो नासंगतेति बोध्यम् ।

एवमपि येषां न परितोषः तेषां सन्तोषार्थं समाधानान्तरमुच्यते । अथ वा तत्रान्तरे गुणवृद्ध्यादिपरिभाषया, अध्याहारादिना च सूत्रव्याख्यानं पश्यतः तदपि व्याख्यानाङ्गमेवेति भ्राम्यतः विवेकाय न तद् व्याख्यानाङ्गमित्यस्मिन् शास्त्रे न तदपेक्षत इत्युपदेशे भाष्यतात्पर्यमिति वोध्यम् ।

द्वितीये उपालम्भपक्षे भाष्यमिदमित्थं व्याख्येयम् प्राचीनवृत्तिकारस्य भवदासस्यैतत् सूत्रव्याख्यानमीदृशम्——अथात इति पदद्वयेनानन्तर्यमात्रमुच्यते, तथा च वेदाध्ययनानन्तरं वेदार्थविचारः कर्तव्य इति। तदेतदुपालभ्यते——लोके येषु अर्थेष्वित्यादिभाष्येण भिन्नं पदद्वयमेकपदीकृत्यानन्तर्यमात्रार्थकत्वमथातः शब्दस्य व्याख्यानमयुक्तम्।

मङ्गलानन्तरारम्भ-प्रश्नकार्त्स्न्येऽवधारणे इति कोशात् अथशब्दस्य मङ्गलाद्यर्थकत्वं प्रसिद्धमेव, अतः शब्दस्यापि हेत्वर्थकत्वं प्रसिद्धम्, ''क्षेमसुभिक्षोयमतोऽस्मिन् प्रतिवसामीति भाष्येण तस्य प्रसिद्धार्थकत्वप्रदर्शनात्। तदेतत्प्रसिद्धार्थकं भिन्नं पदद्वयं स्वार्थात्प्रच्याव्य, अन्यत्रार्थे एकपदीकृत्य प्रयुज्यमानं पारिभाषिकं स्यात्। तच्च सत्यां गतावसंगतम्, गौरवात्, फलाभावात्, विनेयानामपरितोषकत्वाच्च। एवं च लोके येषु अर्थेषु मङ्गलानन्तरहेत्वाद्यर्थेषु प्रसिद्धानि यानि अथातः पदानि, तानि सति सम्भवे आनन्तर्यहेत्वाद्यर्थकान्येव सूत्रेषु ग्राह्याणि, नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा फलवद् वेदवाक्यस्यैव व्याख्येयत्वात्, अन्यथा वेदवाक्यस्य, स्वपदार्थस्य च व्याख्याने प्रयत्नगौरवं स्यात्। सूत्रव्याख्यानक्लेशपरिश्रान्तो वेदवाक्यार्थावगतये न प्रवर्ततोपायसौकर्यस्योपेयप्रकृत्योपायस्योपेयकत्वात्।

तृतीये प्रत्याख्यानपक्षे इत्थं भाष्यसंगतिः। भाष्यकारो हि सूत्राणि पठित्वा तानि अव्याख्यायैव वेदवाक्यानि उदाहृत्य व्याचष्टे। तत ईदृशी शङ्का जायते यद् भाष्यकारः सूत्राणि पठित्वापि न व्याचष्टे केवलवेदवाक्यान्येव व्याचष्टे, तत्कस्य हेतोः? किमेषां हुंफटादिवत्कश्चिदर्थं एव नास्ति। उतार्थपरिज्ञानाभावात्, अथ वा स्फुटार्थतया, निष्प्रयोजनतया चाव्याख्येयत्वादिति। अस्याः शङ्कायाः निराकरणं प्रत्याख्यानभाष्येण क्रियते। सूत्राणि न व्याख्येयानि, निष्प्रयोजनत्वात्। सप्रयोजनत्वाच्च वेदवाक्यान्येव व्याख्येयानि, वेदवाक्येन हि अभ्युदयनिःश्रेयसोपयोगिकर्मोपदिश्यते इति तदर्थविचारः आवश्यकः। नहि वेदार्थमनिश्चित्य कर्म कर्तुं शक्यते, न वा विचारं विना तन्निश्चय इति, तच्चिकीर्षया तन्निर्णयः श्रेयान्। सूत्रेण तु स्वतः न किञ्चित्कर्तव्यमुपदिश्यत इति निष्फलत्वात्

तद्विचारो नावश्यक इति वृत्तिकारेण लौकिकार्थानुसरणपरेण वेदवाक्य-व्याख्याने एव यत्नः कार्यः ।

तदिदमुक्तं वेदवाक्यान्येव एभिर्व्याख्यायन्ते, माभूत्केवलसूत्रव्याख्यानम्, उभयव्याख्याने को दोष इत्यत आह 'इतरथा' हि इत्यादि भाष्येण प्रयत्न-गौरवदोषः तत्र स्फुटं प्रदर्शितः । अथ—उपायभूतसूत्रव्याख्यानं विना कथमुपेयस्य वेदवाक्यस्य विचारः कर्तुं शक्यः इति चेत् ? सत्यम् । उपाय-भूतसूत्रार्थज्ञानमावश्यकं, परन्तु सूत्राणामतिस्फुटार्थकतया तदर्थज्ञानाय न व्याख्यानापेक्षेत्याह (लोके येष्वर्थेषु यानि पदानी)ति । ततश्चासन्देहान्न सूत्रव्याख्यानमपेक्ष्यते इति तद्भावः । सोऽयं प्रत्याख्यानपक्षो न युक्तः यतः पदं विभज्य सूत्राणि भाष्यकृता यद्यपि न व्याख्यातानि, तथापि तात्पर्यतः सर्वसूत्राणि व्याख्यातान्येवेत्यल्पबुद्धेरेवैष निर्णयः । सूत्रव्याख्याने न भाष्यकृतस्तात्पर्यम् । इति प्रत्याख्यानमेव ज्यायः । निपुणप्रज्ञस्तु तात्पर्यतः सूत्राणां व्याख्यानदर्शनात्प्रत्याख्यानपक्षो भाष्यकृतो नाभिप्रेत इत्येव परामृशति । अत एव चोदनासूत्रे नन्वशक्तमिदं सूत्रमि(भा पृ.१९)ति । न्यूनत्वं चोदयित्वा परिहरिष्यति । एवमर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि२.१.४६त्यत्र किमर्थमुभयं सूत्रितमि(भा. पृ. ४४८ )ति वक्ष्यति । विशयेप्रायदर्शनादि२-३१६त्यत्र **चागमकं सूत्रमि**(भा. ६०२)ति-न्यूनतां चोदयित्वा परिहारं च वक्ष्यति । तदिदं सूत्रव्याख्यानप्रत्याख्यान पक्षे विरुद्धचेत । अपि च उपायभूतसूत्रव्याख्यानं विनोपेयभूतवेदवाक्य-विचारोऽशक्यसम्पादन इति प्रत्याख्यानपक्षः सर्वथा अनुचितः । नच सूत्रं विनापि उपायान्तरेण वेदविचारस्य कर्तुं शक्यतया न तदर्थं सूत्रव्याख्यानम-पेक्ष्यत इति वाच्यम् । वेदविदामुपायान्तरस्य सुकरस्य प्रदर्शयितुमशक्यत्वात् । अपि च सूत्रव्याख्यान प्रत्याख्यानवादिनापि न व्याख्यानमात्रं प्रतिषिषेधयि-षितं, तथा सति न व्याख्यातव्यमित्येवोच्येत । **अध्याहारादिभिर्न परिकल्पनीयोऽर्थ** इति वदता तु दुष्ट व्याख्यानमेव निराचिकीर्षितमिति निर्दुष्टव्याख्या अनुमन्यते । अतएव स्वयंकृत सूत्रव्याख्यानेन न विरोधः इति ।

इदानीं परिसंख्यापक्षे चतुर्थं भाष्यतात्पर्यं निरूप्यते । वैदिकजैमिनीय-वाक्ययोर्यथाश्रुतगृहीतार्थयोर्यत्र व्याख्याने परस्परं विरोधः प्रतिसन्धीयते,

तत्र श्रुतार्थानुसारेण श्रुतिं व्याख्यायैतदनुसारेणाध्याहारादिभिः सूत्रार्थो वर्णनीय इत्यनेन भाष्येणोपदिश्यते । वेदो वा प्रायदर्शनादितिमी. १३-३-२ सूत्रे सूत्रानुसारेणैव वेदस्यान्यथाकरणं दृश्यते इति तु न सत् । यतस्तत्रापि ऋगादि शब्दानांलक्षणया वेदपरत्वं, न सूत्रानुसारेण व्यवस्थापितम् अपि तु वैदिकेनोपक्रमेण विरोधात् । तथाहि प्रजापतिरकामयत प्रजाः सृजेयेति, स तपोऽतप्यत, तस्मात्तपस्येनात् त्रयो देवा असृज्यन्त, अग्निर्वायुरादित्यः, ते तपोऽतप्यन्त, तेभ्यस्तेनानेभ्यः त्रयो वेदा असृज्यन्त अग्ने ऋग्वेदः वायोर्यजुर्वेदः आदित्यात्सामवेदः, इत्युपक्रम्य निगमने इदं श्रूयते उच्चै ऋ॑चा क्रियते, उपांशु यजुषा, उच्चैः साम्ना ए. ब्रा. ५-५-६ इति अत्रोच्चैष्ट्वादयो धर्माः किमुपक्रमवाक्योक्तवेदधर्माः उत ऋगादि धर्मा इति सन्दिह्योपक्रमवाक्यानुसारेणासंजातविरोधितया च ऋगादिशब्दानां लक्षणया वेदपरत्वमङ्गीकृत्योच्चैष्ट्वादयो धर्मा वेदगामिन इति व्यवस्थापितमिति स्पष्टमेव तद्विदाम् । तथा चाऽत्रापि न सूत्रानुसारेण वेदस्यार्थकल्पना । तथा च वेदवाक्ययोः परस्परं विरोधे दुर्बलस्य लक्षणादयोदोषाः सन्तु नाम । श्रुतिसूत्रविरोधे तु सूत्रस्यैवान्यथाकरणं युज्यते, अप्रधानत्वात् सूत्राणाम्, न तु वेदवाक्यानां, तेषां प्राधान्यात् ।

ननु प्रधानविरोधेऽप्रधानस्यान्यथाकरणं प्रसिद्धमेवेति निष्फलैव, तथापि परिसंख्येति चेत्?उच्यते येषां सूत्रापेक्षया श्रुतेः प्राधान्यनिर्णयः पौरुषेयापौरुषेयत्वनिबन्धनविशेषग्रहश्च तेषां परिसंख्यया मन्दफलत्वेऽपि, येषां धर्मे यथा वेदः प्रमाणम् तथा सूत्रमपि नादृष्टार्थकयोरनयो कश्चिद्विशेषः, येन सूत्रव्याख्याने इति मतिः, तेषां परिसंख्याऽर्थवती एवं श्रुतिसूत्रयोरगृहीतविशेषयोः परस्परविरोधेऽविशेषाद् विकल्पस्स्यात् । तथा वेदवाक्य व्याख्यानोपायभूतानां सूत्राणां प्रथममुपस्थितानामसंजातविरोधितया यथाश्रुतार्थकत्वमास्थायैतदनुसारेण वेदार्थोनेयः स्यादिति, तन्निवृत्तये परिसंख्याऽर्थवती । अत्रैव भाष्यं योजनीयम् यत्नगौरवभयात् यत्प्रसिद्धार्थंग्रहणं अध्याहारादिवर्जनं चाश्रयणीयं प्राप्तमनूघ, तत्सर्वं वेदाविरोधसम्भवे सति नासतीत्ययमर्थो विधीयते । सति संभवे कर्तव्यमित्येवं विधिरूपं वाक्यस्यासति सम्भवेनेत्येवं निषेधपरत्वात् परिसंख्यात्वमिति ।

असम्भवे सति अध्याहाराश्रयणोदाहरणम् । षष्ठाध्याये चतुर्थपादे तृतीयसूत्रे । 'अपि वा शेषभाजां स्याद्विशिष्टकारणत्वादि(४६-४-३)त्यत्र स्पष्टम् । तथा हि दर्शपूर्णमासयोः मध्यादवद्यति, पूर्वार्धादवद्यति इति श्रूयते । तत्र तावत्तस्य हविषो नाशदोषापहारे सति 'यस्य सर्वाणि हवींषि दुःष्येयुर्नश्येयुरपहरेयुर्वा, आज्येनैता देवताः परिसंख्याय यजेते ति पुनः श्रूयते । अत्रैवं सन्देहः किं हविषो विनाशादौ सति आज्येन यजेत, उत शेषादेव पुनरवदेयम् । न च तथासति अत्राज्यविधानमनर्थकं स्यादिति वाच्यम् । निखिलस्य हविर्विनाशतात्पर्येणास्य वचनस्याऽऽज्यविधायकत्वाभ्युपगमात् । प्रकृते निश्शेषहविर्विनाशाभावेनैतद्विधेर्न प्रवृत्तिः । एवञ्च प्रकृते अवदाने विनष्टेऽपि अवशिष्टे पुनर्मध्यपूर्वार्द्धसंभवात् तत एव पुनरवदेयं न हविरन्तरस्याज्यस्यापेक्षा । यत्र सम्पूर्णं हविर्विनष्टं तत्र हविरन्तरापेक्षायामाज्यं हविर्विधीयते इति प्राप्ते ।

सिद्धान्तः—सम्पूर्णं पुरोडाशं प्रकृत्य श्रूयते 'मध्यादवद्यति, पूर्वार्द्धादवद्यति' इति । अवत्तहविर्विनाशे तु अविकलपुरोडाशाभावात् । न पुनरवदानं तत्र युज्यते अवदेयस्योपरितनाङ्गुलिपर्वमात्रावयवस्य हविषस्तत्रासत्वात्, अधस्तनावयवस्य सतोऽपि हविष्ट्वाभावात् । तस्मात् तत्र हविरन्तरमाज्यमेव भवति । न च 'यस्य सर्वाणि हवींषि दुष्येयुरि'त्यत्र सर्वशब्दश्रवणात् सर्वहविर्विनाशे एवाज्यं विधीयते, नावयवविनाशे इति वाच्यम् हविर्विनाशमात्रस्यैव हविरन्तरविधाने निमित्ततया सर्वशब्दस्य वाक्यपरिसमाप्तिन्यायेन प्राप्तानुवादकत्वाङ्गीकारात् । एवं सिद्धान्तिते यत्र शेष कार्यार्थं गृहीतस्यावदानस्य नाशः तत्र किं कर्त्तव्यमित्यपेक्षायाम् अपि वा शेषभाजामित्यादि सूत्रमुपतिष्ठते । अस्यार्थः—स्विष्टकृदिडादिनाशः किं शेषावदाननिमित्तमुतनेति सन्दिह्य यागशेषप्रतिपत्त्यर्थत्वात्तन्नाशे पुनः शेषादवदेयम् । इति पूर्वपक्षे, साकल्यदशायां उत्तरार्द्धावयवस्य स्त्रिष्टकृत्संस्कार्यस्य द्रव्यस्य विनाशात् । अवशिष्टस्योत्तरार्द्धस्य तादृशद्रव्यत्वाभावान्न ततोऽवदेयम्, पूर्वोक्तन्यायेन हविर्विनाशे आज्यस्येव द्रव्यान्तरस्यापि न प्रयोजकत्वम्, अन्यत्र क्रियमाणानां शेषसंस्कारकत्वायोगात् सूत्रस्थेन अपि वा शब्देन पुनरवदानव्यावृत्तिर्बोध्यते । एवं च स्वार्थावत्तनाशे शेषभाजां

नावदानं, किन्तु लोप एव न्याय्यः। तथा च यत्राध्याहारं विना श्रौतार्थो न सङ्गच्छते, तत्रागत्याध्याहारः कार्य एव। यत्र तु अध्याहारं विना पि सूत्रार्थं उपपद्यते तत्राध्याहारादिकल्पना न संगतेति निष्कर्षः।

एवं पशोश्च विप्रकर्षः तन्त्रमध्ये विधानादि(१२.२.३२)ति सूत्रे विधानादितिपदं प्रथमया विपरिणम्यते, विधानस्य साध्यत्वेन प्रथमार्हत्वात्। तथा च पशोश्च विप्रकर्षात् तन्त्रमध्ये पुरोडाशानां विधानमित्याकारेऽर्थ-संगतिः, नान्यथा।

एवं लौकिकवैदिकवाक्ययोरविशेषेण पौरुषेयत्वशङ्कानिराकरणार्थमिदं सूत्रम्। लोके सन्नियमात् प्रयोगसन्निकर्षः स्यादि(१.१.२६)ति। अत्र लोक इति पदस्य व्यवहितेन सन्निकर्षपदेन सम्बन्धः। तथा च लोके प्रमाणान्तर-सम्बन्धात् प्रयोगसन्नियमः स्यात्। लौकिकानां शब्दानां प्रमाणान्तर-गोचरार्थाभिधायकतया पौरुषेयत्वं, वैदिकानां तु शब्दानां प्रमाणान्तरा-गोचरार्थाभिधायकत्वेनापौरुषेयत्वमिति तयोर्महद् वैषम्यमितिभावः। यद्यपीदं परिणामोदाहरणमपि सम्भवति, तथापि परिणामोदाहरणस्य पूर्वमेव प्रदर्शनात् एतद् व्यवहितकल्पनोदाहरणमेव युक्तमितिबोध्यम्। एवं व्यवधिवाक्यभेद-सूत्रान्यथाकरणगुणकल्पनोदाहरणानि बोध्यानि।

स्तुतिपक्षपरिग्रहणेनेदानीं भाष्यं व्याख्यायते। पारिभाषिकाद्यर्थावधान निबन्धनक्लेशपरिजिहीर्षया परमकारुणिको भगवान् जैमिनिमहर्षिः लोक-प्रसिद्धार्थैः पदैः मीमांसाशास्त्रं निबबन्धेति। लोके इत्यादि सूत्रकारस्य स्तुतौ भाष्यतात्पर्यम्।

सूत्रकारस्तुतेः प्रकृते उपयोगाभावादयमपि पक्षो न समीचीन इति। अथ शब्ददूषणपक्षः परिगृह्यते। भवितव्यं तु तेनेत्यतः, तत्तु वेदाध्ययन-मित्यतो वा प्रागेकवाक्यभूतेन लोक इत्यादि भाष्येणाथशब्ददूषणं प्रदर्श्यते। लोके प्रसिद्धार्थपदैः सूत्रैः वेदार्थनिर्णयः कार्य इत्यभिप्रायो निरूपितः। स चात्र न संगच्छते अथ शब्दार्थनिर्णयाभावात् यदव्यभिचारेण धर्मजिज्ञासा भवति, तस्य नियताव्यवहितपूर्ववर्त्तिनः पदार्थस्य निरूपणमन्तरा किन्नि-रुपितानन्तर्यमथशब्दार्थः प्रतीयेत। तत्प्रतीतिं विना कथमथशब्दस्य प्रसिद्धार्थ-कत्वं यत्किञ्चिदानन्तर्यस्य सर्वत्र सत्वेन तदुक्तौ न किञ्चित्प्रयोजनम्। अवश्य-

मेव जनः किञ्चित्कृत्वा किञ्चित्करोति इति सार्वजनीनमेतत् । अयं भावः भवितव्यं तु तेनेत्यतः प्रागेकवाक्यभूतेन भाष्येण प्रसिद्धार्थैः पदैः वेदार्थ-निर्णयः प्रतिज्ञातः सचेह नास्ति अथ शब्दार्थाविवेकात् । तत्तु वेदाध्ययन-मिति द्वितीयावधौ प्रसिद्धार्थकमेवपदं वक्तुं शक्यं, तच्च नेह दृश्यते, अप्रसिद्धार्थकस्याथशब्दस्योपादानादित्याक्षेपः ।

ननु पूर्वोक्तेषु साधारणादिषु पञ्चस्वपि पक्षेषु प्रसिद्धार्थक पदग्रहणस्य व्यवस्थापिततया प्रसिद्धार्थकाथशब्दग्रहणतात्पर्येण पुनरेतदर्थकथनमनुचित-मनाकाङ्क्षितत्वात् इति चेत् ? न । निदर्शनपरत्वात्तदुपादानस्य । यथा अथ शब्दः प्रसिद्धार्थकः एवं पदान्तरमपि वोध्यमित्याशयेन तदभिधानम् । अथवा प्राचीनवृत्तिकृता भवदासेन भिन्नार्थकमथात इति पदद्वयमेकपदी-कृत्यानन्तर्यमात्रार्थकमिति व्यवस्थापितं, तन्निराचिकीर्षया अष्टमाद्याथशब्द-वदस्यापि केवलस्याथ शब्दस्यानन्तर्यमात्रार्थकत्वं, न पदद्वयस्येति तात्पर्येणाथ-शब्दार्थ कथनमित्याशयो विभाव्यताम् ।

अपि च यत्र विधिवाक्यं विचार्यते, तत्रैव सूत्रव्याख्यानं निराकृतं, सूत्रविधिवाक्योभयविधव्याख्याने प्रयत्नगौरवस्य प्रदर्शनात् यत्र तु किञ्चिदपि विधिवाक्यं न व्याख्यायते, तत्र सूत्रव्याख्यानं न निराकृतं । अन्यथात्र कस्यचिदपि विधिवाक्यस्य विचाराभावेन सूत्रस्याप्यव्याख्याने भाष्यमेव निर्विषयं स्यात् । यद् वा सर्वत्र सूत्रे प्रसिद्धार्थकस्यैव पदस्य ग्रहणमिति प्रतिज्ञातेऽत्राथशब्दे पूर्ववृत्तस्य नियतस्य कस्यचित्प्रतीत्यभावेन नियता-नन्तर्यस्य वोद्धुमशक्ततया कथं प्रसिद्धार्थकस्यैव पदस्यात्रग्रहणमित्याक्षेपस्य समाधानायाथशब्दार्थकथनं युज्यत एव । आक्षेपभाष्यं तत्र लोक इत्यादि ।

यद्वा नावयवार्थप्रदिदर्शयिषया अथ शब्दव्याख्यानं, येन प्रसिद्धार्थक पदग्रहणप्रतिज्ञाविरोधः सम्भाव्येत, किन्तु तदर्थकथनप्रसङ्गेन शङ्का-समाधानाभ्यां वेदाध्ययनस्य पूर्ववृत्तित्वं, स्नानोत्कर्षश्च निरूपणीये । ते चाथशब्दार्थनिरूपणप्रसङ्गमन्तरा न निरूपयितुं शक्येते, अनाकाङ्क्षिता-भिधानभयात् । तथा च न पूर्वोक्तविरोधः ।

इदं पुनरिहावर्धयम् । साधारणादि पञ्चसु पक्षेषु प्रयत्नगौरवपर्यन्तम् पृथग्वाक्यम् तत्र लोक इत्यादि तु वाक्यान्तरमथशब्ददूषणपरम्, तस्य चावधिद्वयं पूर्वदिशाऽवसेयम् ।

**आक्षेप भाष्यम्**

**भाष्यम्—"तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थोदृष्टः न चेह किञ्चिद्‌वृत्तमुपलभ्यते, भवितव्यन्तु तेन, यस्मिन् सति अनन्तरं धर्म जिज्ञासाऽवकल्पते । तथाहि प्रसिद्धार्थकः स कल्पितो भवति, तत्तु वेदाध्ययनम्, तस्मिन् सति सावकल्पते । नैतदेवम् । अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता प्रागपि च वेदाध्ययनात् ।**

तत्र भवितव्यमित्यादेः पूर्वैणदूषणग्रंन्थनैकवाक्यभूतस्य योऽर्थः, स व्याख्यातः । प्रथमावधिपक्षे तु भवितव्यमित्यादिः परिहारग्रन्थः । अयंभावः सूत्रे सर्वत्र सति सम्भवे प्रसिद्धार्थकस्यैव पदस्य ग्रहणमिति प्रतिज्ञयाऽनर्थकस्याप्रसिार्थकस्य च पदस्याग्रहणवोधनादानन्तर्यकस्यैवाथ शब्दस्य ग्रहणमित्युत्सर्गतः प्राप्तावपि यन्निरूपितानन्तर्य्यमथशब्देनाभिधित्सितं, तस्य प्रमाणविरहेण निर्णयशङ्कायां कृत्रिमेण कर्तुरिव धर्मजिज्ञासारूपकार्येण कारणस्य पूर्ववृत्तस्य कस्यचित्कल्पनं सम्भवतीत्याशयेन सामान्यतः उत्तरम् । भवितव्यन्तु तेनेति सामान्य सिद्धिरेव विशेषं साधयतीति तात्पर्येण विशिष्याह तत्तु वेदाध्ययनम् । यदा तु भवितव्यमिति दूषणभाष्यं, तदा तु वेदाध्ययनमित्येवोत्तरमिति । भाष्यार्थस्तु '**अथप्रजानामधिपः प्रभाते**' इत्यादौ यथा अथशब्दस्य पूर्ववृत्तानन्तरप्रतिपादकत्वं दृष्टं तथा 'अथातो धर्मजिज्ञासा' इत्यत्र न किञ्चित्पूर्ववृत्तं समुपलभ्यते, यदानन्तर्यमथशब्दस्य व्यवस्थाप्येत इत्याह **न चेति** । ननु शिष्यप्रश्नाद्यानन्तर्यमेवास्तु तर्हि अथशब्दार्थ इत्यत आह 'भवितव्यन्तु तेने' ति । न किञ्चिदानन्तर्यम् वुबोधयिषितं तस्य सर्वत्र सुलभत्वेन तदुपादाने प्रयोजनविरहात्, किन्तु तस्यानन्तर्यं वक्तव्यं, यस्मिन् सति नियमेन धर्मजिज्ञासा भवति, असति न भवति । न च शिष्यप्रश्नादिस्तथा, किन्तर्हि तदित्याह तत्तु वेदाध्ययनम् तस्मिन् हि सति सावकल्पते इति ।

आक्षेपभाष्यं **नैतदेवमन्यस्यापीति** । ननु नावश्यं नियमः वेदाध्ययनानन्तरमेव धर्मजिज्ञासा भवति, अनधौतवेदस्यापि संकल्पादितो धर्मजिज्ञासादर्शनादित्याशङ्कते **अन्यस्यापीति** । नन्वेतदाक्षेयोऽयुक्तः धर्मजिज्ञासारूपकार्येण तत्कारणीभूतस्य वेदाध्ययनस्यैव वृत्तत्त्वनिश्चयात्, अन्यथा धूम-

सत्तयाऽग्निसद्भावनिर्णयोऽपि न स्यात् । तत्रापि अन्यतोऽपीति सन्देह-सम्भवात्, प्रमाणदृष्टार्थे सन्देहाभावस्तु प्रकृतेऽपि सम इति चेत् ? सत्यम् । सूत्रस्याथशब्देनैव वेदाध्ययनानन्तर्यमुपदिश्यते इत्यभिप्रायेणाक्षेपः । तेनानन्तर्य्यमात्रं वक्तुं शक्यते, न विशिष्टानन्तर्यम्, अन्यथाऽप्रसिद्धार्थकत्वेन पारिभापिकत्वापत्तेः । विशिष्टशक्तौ प्रमाणाभावात् कोषादित अनन्तर्यमात्रे शक्तिग्रहात् । तथा च यदनन्तरं धर्मजिज्ञासा भवति तन्न वेदाध्ययनमेव । किन्तु संकल्पादिकमपि सम्भवतीत्याशयेन **आह-अन्यस्यापीति** । वस्तुतस्तु असूत्रितत्त्वोपालम्भो न युक्तः । सूत्रेणानन्तर्यमात्रमुपदिश्यते तच्च दृष्टार्थकमिति, तेन वेदाध्ययनमाक्षिप्यते । एवं च यदनन्तरमेव धर्मजिज्ञासा भवति, तद्वेदाध्ययनमेव, अन्यथानन्तर्योपदेशस्यादृष्टार्थत्वापत्तेः । यत्किञ्चिदानन्तर्यमेव बुभुत्सितं तच्च वेदाध्ययनमेव दृष्टार्थोपकारकोऽपि संकल्पादि नाक्षिप्यते, तस्य क्रियामात्रोपकारकत्वेन साधारणतया जिज्ञासायामसाधरणकारणत्वाभावात् ।

प्रागपि च वेदाध्ययनादिति, आक्षेप भाष्यम् । ननु अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा भवतीत्युक्त्या वेदाध्ययनात् प्रागपि सा लब्धैवेति पुनः तदुपादानं, पुनरुक्तमिति चेत् ? एतद् भाष्यस्यापि चेति पदद्वयस्यान्यथायोजनीयत्वात् । अपि च प्राग् वेदाध्यनाद्धर्मजिज्ञासा युक्तेति । अयम्भावः वेदार्थ एव धर्मो न बुद्धादिवाक्यार्थं इत्यस्य जैमिनिमुनेः वेदवाक्यार्थ विचारे एव प्रवृत्तिरित्यस्य च निर्णयस्याभावेन धर्मसामान्यज्ञानाद् बुद्धादिदेशनाया अपि धर्मगोचरत्वाभिमानेन तद्वाक्यश्रवणानन्तर्यंनियमस्तस्यामित्याशयेनान्यस्याप्यनन्तरमित्याद्याक्षेपः, हानोपदानविषयकजिज्ञासाया हानोपादानात् प्रागेव जायमानतया पूर्वं धर्मजिज्ञासा, तदनन्तरं वेदार्थ एव धर्म इति ज्ञानं ततस्तदर्थवोधाय वेदोध्येय इत्यध्ययनप्रवृत्तिरितिक्रमालोचनेनाध्ययनात् प्रागेव धर्मजिज्ञासा प्राप्नोति इति तात्पर्येण प्रागपीति द्वितीयाक्षेप इत्यपि चिन्त्यम् ।

वस्तुतस्तु अग्रिमभाष्यानुसारेण वेदमधीत्याथातो धर्मं जिज्ञासेति सूत्राकारः स्वीकर्तव्यः । तथा चास्य विधिद्वये तात्पर्यम्-वेदमधीत्यैव, नानधीत्य, तथा अनन्तरमेव, नान्यत् कृत्वेति । तच्चैकस्मिन् वाक्ये न सम्भवति

विधिद्वयाभ्युपगमे वाक्यभेदप्रसङ्गात् । एवं चैकस्मिन् वाक्ये एकमेव विधेयमपरमनूद्यम् । तथा च वेदमधीत्यैवेति वचनव्यक्त्या यदा आनन्तर्यमनूद्य वेदाध्ययनमेव विधीयते, तदा वेदाध्ययनानन्तर्यस्य जिज्ञासायामविधानात् । अन्यस्यापि कर्मणोऽनन्तरं जिज्ञासा न वारितेत्यभिप्रायेणोक्तं भाष्यकृता अन्यस्यापिकर्मणोनन्तरं धर्मजिज्ञासा युक्ता । यदातु वेदाध्ययनमनूद्यानन्तर्यमेव जिज्ञासायामेव विधीयते—या वेदमधीत्य जिज्ञासा, सा वेदाध्ययनानन्तरमेवेति वचनव्यक्त्या वेदाध्ययनोत्तरकाले जायमानायां जिज्ञासायां तदानन्तर्यविधानेऽपि, ततः प्राक्काले जायमानजिज्ञासापरं तद्विधानाभावेन सा ततः पूर्वमपि प्राप्नोतीत्याशयेन प्रागपि वेदाध्ययनादित्याक्षेपः । एवं च विधिद्वयतात्पर्येणाक्षेपद्वयमिति, न पुनरुक्तिदोषलेशः ।

उच्यत इत्यादि समाधानभाष्यम् । अयमाशयः सत्यम् । भगवता बुद्धेन धर्माःदेशिता इत्यभिमानवतां पुंसां बुद्धवाक्यश्रवणानन्तरमपि धर्मजिज्ञासा जायते इति न सर्वत्र जिज्ञासायां वेदाध्ययनस्य पूर्ववृत्तत्वम् इति । किन्तु यादृशजिज्ञासातात्पर्येणाथशब्दं प्रयुक्तवानाचार्यः तादृशी जिज्ञासावेदाध्ययनानन्तरमेव भवति नान्यत इत्याह—

**भाष्यम्——उच्यते तादृशीन्तु धर्माजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न सम्भवति । कथम् वेदवाक्यानामनेकविधो विचार इह वर्त्तिष्यते ।**

वेदवाक्यानामनेकप्रकारक-विचार इह भविष्यति इति जिज्ञासा अधीतवेदस्यैव भवति, नान्यस्य, तथा च तादृशजिज्ञासातात्पर्येणाध्ययनस्य पूर्ववृत्तत्वमुक्तमिति नान्यानन्तरजिज्ञासामादाय व्यभिचारः । यदपि हानोपादान-विषयक-जिज्ञासाया हानोपादानात् प्रागेवेत्यादिना धर्मजिज्ञासोत्तरं वेदाध्ययनमाश्रित्याक्षेपस्तस्याप्येतदेवोत्तरम्-अनधीतवेदस्य तदर्थविषयक-जिज्ञासाया असम्भवेन तदर्थं तदध्ययनस्य पूर्ववृत्तत्वमावश्यकं वेदार्थस्य धर्मत्वानवगमे तज्जिज्ञासया कथं तदध्ययनप्रवृत्तिरिति तु न शङ्क्यम् । हितकारिपित्रादीनां प्रेरणया तत्र प्रवृत्तिसम्भवात्, अन्यथा बालस्य कुत्रापि प्रथमाध्ययने प्रवृत्तिर्न स्यात्, तेषां तदानीं तत्फलज्ञानाभावात् । अद्यापि पित्रादि-प्रेरिता एव बाला अध्ययनाय प्रवर्तन्ते इति न काचिददृष्टचरकल्पनेतिम ध्येयम् ।

यदपि च वेदमधीत्याथातो धर्मजिज्ञासेतिसूत्राकारमङ्गीकृत्य एकस्मिन् वाक्येऽध्ययनानन्तर्ययोरेकदा विधानासम्भवेनानन्तर्यमनूद्याध्ययनविधेरध्ययनमनूद्यानन्तर्यविधेश्च पर्यायेण स्वीकारादन्यस्यापि, प्रागपीत्याक्षेपद्वयमुक्तम् । तदपि न मनोरमम् । अनन्तर्यमात्रे विधिस्वीकारेणान्यस्यापीति चोद्यानवतारात् । अथ तथापि वेदाध्ययने विधेरनभ्युपगमात् प्रागपीति चायं स्यादेवेति चेत् न । तादृशीमित्यनेन तस्यापि परिहारात्, न जिज्ञासामात्रेऽध्ययनस्य पूर्ववृत्तत्वमुच्यते, किन्तु विशिष्टजिज्ञासायां सा चाध्ययनानन्तरमेव, न ततः प्रागिति न कोऽपि चोद्यावसरः । न चाध्ययनानन्तर्ययोर्द्वयोर्विधिस्वीकारे वाक्यभेदः अन्यतरविधौ अन्यतराक्षेपो दुर्निवार इति कथं चोद्यपरिहार इति वाच्यम् । आनन्तर्यविधिस्वीकारादन्यस्यापीत्यस्य परिहारः स्फुट एव । धर्मो हि वेदार्थ एवेति । धर्मजिज्ञासापदेन वेदार्थजिज्ञासाबोधनात्, सा चाध्ययनं विना न सम्भवतीति अध्ययने विधिं विनापि सामर्थ्यादेव तल्लाभ इति, नानधीतवेदस्य तत्प्रसक्तिरिति स्फुटमेव । ततः प्रागपीत्यस्य परिहार इति सर्वं चतुरश्रम् ।

भाष्यार्थस्तु तादृशीं विविधवेदवाक्यविचारविषयिणीं धर्मजिज्ञासामुद्दिश्याथशब्दः सूत्रकृता प्रयुक्तः । यादृशी च जिज्ञासा अधीतवेदस्यैव भवितुं युक्ता नानधीतवेदस्येति । तच्चावेदाध्ययनमिति । कुतो नानधीतवेदस्य सेत्यत आह-**वेदेति** । सामान्यतो ज्ञातस्यैव सन्देहविषयत्वाभ्युपगमेन पक्षप्रतिपक्षोद्भावनया विचारणीयत्वात्, अज्ञाते सन्देहाभावेन तद्विचारविषयकेच्छाया असम्भवेन तज्जिज्ञासोत्पत्तये सामर्थ्यादेवाध्ययनलाभे इति न ततः प्राक् सेति भावः ।

अध्ययनानन्तर्यं विधिद्वयौपयिकपूर्वोक्तवचनव्यक्त्योरन्यतरेणापि श्रौतार्थो न विधीयत इत्याहापिचेत्यारभ्य वक्ष्यतीत्यन्तेन भाष्येण, किन्तर्हि विधीयत इत्यपेक्षायामाह—

**भाष्यम्—अपि च नैव वयमिह वेदाध्ययनात्पूर्वंधर्मजिज्ञासायाः प्रतिषेधं शिष्मः, परस्ताच्चानन्तर्यम् । नहि एतदेकं वाक्यम्, पुरस्ताच्च वेदाध्ययनात् धर्मजिज्ञासां प्रतिषेधयिष्यति, परस्ताच्चानन्तर्यं प्रकरिष्यति, भिद्येत हि तथावाक्यम् अन्या हि वचनव्यक्तिरस्य पुरस्ताद्**

**वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधति अन्या च परस्तादानन्तर्यमुपदिशति। वेदमधीत्य इति एकस्यां विधीयते अनूद्य आनन्तर्य्यम्, विपरीतमन्यस्याम्, अर्थैकत्वाच्चैकवाक्यतां वक्ष्यति।**

**किन्तु "अधीतवेदे इत्यारभ्य एदमर्थोयमुपदेश** इत्यन्तेन भाष्येण" पूर्वभाष्यार्थः प्रदर्श्यते, भवतु नाम वेदाध्ययनात् प्राग् धर्मजिज्ञासा, तावताऽपि न नो विरोधः, नहि वयं ततः पूर्वं तस्याः प्रतिषेधं शिष्मः नापि परस्तादानन्तर्यमित्यत्रापि शिष्म इति केचिदध्याहरन्ति। तेषामयमाशयः- न तावदधीत्यैवेति वचन-व्यक्त्याध्ययने विधिः वेदार्थजिज्ञासायामध्ययनस्य सामार्थ्यादेव लाभात्। नाप्यानन्तर्ये विधिः अदृष्टार्थत्वापत्तेः, न्यायशास्त्रेऽदृष्टार्थविधानस्यान्याय्यत्वात्। अतो लक्षणयान्यपरत्वं नानन्तर्यपरत्वमिति।

तदयुक्तम् आनन्तर्यवचनव्यक्तेर्भाष्ये दर्शनात्। न चैवमदृष्टार्थविधानापत्तिः, केवलस्य श्रुतार्थस्य विधानाभावात्। अजहत्स्वार्थलक्षणयाऽऽनन्तर्यविशिष्टगुरुकुलनिवासनिवृत्तिरूपोऽर्थो विधीयते। स्नानजिज्ञासे हि मिथो विरुद्धे। न च गुरुगृहे निवसतो धर्मं जिज्ञासमानस्यापि स्नानमदृष्टार्थं सम्भवतीति, नानयोर्विरोध इति वाच्यम्। ब्रह्मचारिणो हि न स्नायादित्यनेनास्नानादि नियमोक्त्या तदवध्यपेक्षायामधीत्य स्नायादित्यनेन विदिताध्ययनमवधिरिति तदुत्तरकालिकस्नानस्य सकलब्रह्मचारिधर्मनिवर्तकत्वेन गुरुनिकेतननिवासनिवृत्तेरपिसूचकतया तस्याश्च विचारविरोधित्वस्य स्फुटत्वात्, गुरुं विना विचारासम्भवात्। अविरोधिसत्ता च विरोध्यन्तराभावव्याप्ता, एवं चाध्ययनोत्तरं प्रतीयमाना जिज्ञासा स्वविरुद्धस्नानाभावं लक्षयति। यद्यपि पर्यायेण द्वयोः प्रवृत्तौ न विरोधः, तथापि युगपत्प्रवृत्तौ विरोधोऽस्त्येव। अधीत्य स्नायादित्यनेन प्राप्तं स्नानमुत्कर्षकारणाभावादनन्तरमेव प्राप्तं भुक्त्वा गच्छेत्यादौ भोजनानन्तरगमनवत्। धर्मजिज्ञासापि तस्मिन्नेव काले प्राप्ता, तेन विरुद्धयते।

अपि च **नैव वयमिति** भाष्यस्यायं संक्षेपार्थः वेदमधीत्याथातोधर्मजिज्ञासेत्याकारसूत्रघटकानन्तरार्थकाथशब्देन वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधः, धर्मजिज्ञासायां वेदनाध्ययनानन्तर्यञ्चेत्युभयं न युगपद्विधातुं शक्यते, वाक्यभेदप्रसंगात् वाक्यभेदं दर्शयितुमाह। **अन्या हि वचनव्यक्तिरित्यादि**। वेदाध्ययनात्प्राग् धर्मजिज्ञासाप्रेतिषेधाय वेदमधीत्यैव,

नानधीत्येति वचनव्यक्तिः स्यात् तस्यामध्यनानन्तर्यं विधानाय तु अन्तरमेव धर्मजिज्ञासा कर्तव्येति वचन-व्यक्तिः स्यात् । पूर्वत्रानन्तर्यमनूद्य वेदाध्ययने विधिः, उत्तरत्राध्ययनमनूद्यानन्तर्ये विधिः । तदेतद्द्वयमेकेन वाक्येन युगपद्विधातुमशक्यम्, सकृदुच्चरितः सकृदेवार्थं बोधयतीतिन्यायात् । आवृत्त्या तु अर्थद्वयबोधाभ्युपगमे वाक्यभेद-प्रसंगात्, एकवाक्यत्वसंगमे वाक्य-भेद-कल्पनाया जघन्यत्वात् ।

नन्वेकवाक्यताकारणाभावादस्तु तर्हि वाक्यभेद एवेत्यत आह—**अर्थैकत्वादेकवाक्यतामिति ।**

अश्रौतार्थकत्वादेतदुभयं न विधेयम्, किन्तु गुरुगृहनिवासनिवृत्ति-व्यावृत्तिरनेन विधित्सितेति प्रदर्शयितुमाह । **किन्त्विति** अयम्भावः—वेदाध्ययनोत्तरं धर्मविचारः समावर्त्तनं चेत्युभयं युगपत् प्राप्तम्, तत्र वाचनिकेन स्मार्तस्नानेन न्यायप्राप्तस्य दुर्बलस्य धर्मविचारस्य बाधाभावाया-ऽथशब्देनाजहल्लक्षणया सकलब्रह्मचारिधर्मं निवृत्तिर्व्यावृत्तिर्बोध्यते ।

**भाष्यम्—किन्तु अधीते वेदे द्वयं समापतति गुरुकुलाच्च समावर्त्तितव्यम्, वेदवाक्यानि च विचारयितव्यानि । तत्र गुरुकुलान्मा समावर्त्तिष्ट कथं नु वेदवाक्यानि विचारयेत् इत्येवमर्थोऽयमुपदेशः । यदि एवं न तर्हि वेदाध्ययनं पूर्वं गम्यते । एवं हि समामनन्ति वेदमधीत्य स्नायादिति । इह च वेदमधीत्य स्नास्यन् धर्मं जिज्ञासमान इममाम्नाय-मतिक्रमेत् । न चाम्नायो नामातिक्रमितव्यः ।**

इत्याह—**गुरुकुलान्मासमावर्तिष्टेति** । स्मार्तस्नानेन दुर्बलस्य न्याय-प्राप्तस्य धर्मविचारस्य बाधोयुक्त इत्येतत्तात्पर्येणाह **यद्येवमिति**। अयम्भावः—'अधीत्य स्नायादिति मनुस्मृतौ ३.२ बौधायनगृह्ये ६.१. आपस्तम्बीये स्नास्यन्निितिपाठः । अत्र त्वर्थतो गृहीतमिति बोध्यम् । स्मृत्या अध्ययनोत्तरं स्नानं विहितम् । एवं च वाचनिकेन बलवता स्नानेनाध्ययनोत्तरं जिज्ञासाया बाधितत्वादध्ययनपूर्वकत्वं जिज्ञासायां न स्यादित्याह **यद्यवं, न तर्हि वेदाध्ययनं पूर्वं गम्यते** इति ।

यदि चाथशब्दवलेन श्रौतार्थेन न्यायप्राप्तेनापि धर्मं विचारेण स्नानमेव वाध्यते तर्हि अधीत्यस्नायादित्याम्नायो वाधितो भवेन्नचाम्नायोनाम वाधनीय इत्याह ।

**भाष्यम्—तदुच्यत अतिक्रमिष्याम इममाम्नायमनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम । दृष्टो हि तस्यार्थः कर्मावबोधनं नाम । न च अध्ययनमात्रात् तत्र भवन्तो याज्ञिकाः फलं समामनन्ति, यदपि च समामनन्तीव तत्रापि द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्, इत्यर्थवादतां वक्ष्यति । न चाधीतवेदस्य स्नानानन्तर्यमेतद्विधीयते, नहि आनन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति । पूर्वकालतायां क्त्वास्मर्यते न आनन्तर्ये दृष्टार्थता चाध्ययनस्य आनन्तर्यं व्याहन्येत, लक्षणयात्वेषोऽर्थः स्यात् । न वेदं स्नानमदृष्टार्थं विधीयते किन्तु लक्षणया अस्नानादिनियमस्य पर्यवसानादध्ययनसमकालमाहुः ।**

**न चाम्नायो नेति ।** परिहारभाष्यमतिक्रमिष्याम इति । अयमाशयः—स्वाध्यायोऽध्येतव्य तै. आ. २.१५. इत्यध्ययनविधिना विहितमध्ययनं दृष्टार्थकम्, फलं तदर्थावधारणम् । अर्थावधारणं च न विचारमन्तरा इति, अध्ययनविधिरेव विचारमप्याक्षिप्य विदधाति न चाध्ययने विधिं विनापि **अध्ययनमर्थं ज्ञानहेतुरध्ययनत्वाद्—भारताध्ययनवदित्यादि** प्रमाणान्तरेणापि अध्ययनेऽर्थज्ञानहेतुत्वं प्राप्तमेवेति न तत्र विधिस्वीकारप्रयोजनमिति वाच्यम् । दर्शपूर्णमासादिजन्यापूर्वौपयिकावघातादिवन्नियमविधिस्वीकारात् । व्युत्पन्नस्य स्वतः पुस्तकादिदर्शनेनार्थज्ञानसम्भवेऽपि ततः स्वाध्यायसंस्कारानभ्युपगमेन क्रत्वपूर्वानुत्पत्त्या तदुत्पत्तये अध्ययनविधिजन्यस्वाध्यायसंस्कार आवश्यकः, नियमपूर्वकाधीतवेदैरपगतानि कर्माणि फलदानीति नियमात् । न चानारभ्याधीतत्त्वेन श्रुत्याद्यभावाच्च न क्रत्वर्थत्वं, किन्तु अदृष्टार्थम् । तच्चाक्षरराशिमात्रग्रहणेनापि सम्भवतीति, न तदर्थं विचारापेक्षा, नतरां गुरुगृहनिवासप्रयोजनमिति वाच्यम् । सम्भवति दृष्टे फले अदृष्टफलकल्पनाया अनुचितत्वात् ।

**तदुक्तं "लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना ।**
**विधेश्च नियमार्थत्वान्नानर्थक्यं भविष्यति ।।"**

**शा. दी. पृ. ६**

तदिह अर्थावधारणरूपदृष्टफलौपयिकाध्ययनविधिर्विचारं विनाऽनुपपद्यमानो विचारमाक्षिपन् तद् विरुद्धं स्मार्तं स्नानं बाधते, अन्यथा अर्थव-

धारणफलकस्वाध्यायाध्ययनविधिबोधितस्याम्नायस्यानर्थक्यापत्तेः । तदिदमुक्तं--**वेदं प्रयोजनवन्तमिति** ।

ननु अदृष्टार्थकतयापि आम्नायः सार्थक इति नानर्थक्यमत आह—**दृष्टो हि तस्यार्थः कर्मावबोधनं नाम' इति** । किञ्च यत्रैकस्याम्नायस्याप्रामाण्यं, तत्र तन्मूलभूतस्मृतेरप्रामाण्यप्रसक्तिः । यत्र पुनः समस्तस्यैवाम्नायस्यानर्थक्यं, तत्र का वार्ता स्मृतिप्रामाण्यस्य, तस्माद् धर्मजिज्ञासया स्मार्तस्नानस्यैव वाधो युक्तः । पूर्वं विरोधमङ्गीकृत्य विचारेणैव स्नानवाध उक्तः, इदानीं विरोधाभावान्न स्नानेन धर्मजिज्ञासाया वाधप्रसक्तिरित्याह **नचेति** ''अयमाशयः'' अधीत्य स्नायादिति । स्मृत्याध्ययनोत्तरं स्नानं विधीयते, नत्वनन्तरं । नहि आनन्तर्यस्य वाचकः कश्चिच्छब्दोऽत्र श्रूयते । पूर्वकालतायां क्त्वः स्मरणात् । एवं च यत्र किञ्चिद् वाधकं नास्ति तत्र क्त्वाप्रत्ययेनानन्तर्यं प्रतीयते । यथा श्रुत्वा हसति । यत्र तु बाधकं दृश्यते, यथा प्रकृते, तत्र क्त्वाप्रत्ययेनोत्तरकालमात्रं प्रतीयते, नानन्तर्यम् । एवञ्च विचारोत्तरमपि स्नाने अध्ययनोत्तरकालस्यावाधितत्वान्न विरोधः इति ।

अपरमपि **दृष्टर्थता चाध्ययनस्यानन्तर्ये व्याहन्येत**, लक्षणया **त्वेषोऽर्थः स्यादिति** भाष्यद्वयं पुनरुक्ततया कैश्चित्परित्यक्तम् । तथा हि दृष्टार्थतेतिभाष्यं 'दृष्टो हि तस्यार्थः कर्मावबोधनमित्यनेन पुनरुक्तम्, लक्षणयेति । ज्ञातार्थत्वादिति ।

तदयुक्तम् तात्पर्यभेदेन पौनरुक्त्याभावात् । आनन्तर्यन्न क्त्वाशब्दवाच्यमिति तात्पर्येण पूर्वं भाष्यमग्रिमन्तु यदि क्त्वा-शब्द-वाच्यमानन्तर्यमङ्गीक्रियते, तदा तदभ्युपगमेऽध्ययनं दृष्टार्थं न स्यात्स्नानेन विचारवाध प्रसङ्गादिति, लक्षणयोत्तरकाल एवार्थोऽङ्गीकर्त्तव्यः । तथा च पौनरुक्त्याभावात्तत्परित्यागोऽसंगत एव

अधीत्येत्यत्राधिपूर्वकेण्गतावित्यस्य प्रयोगाभ्युपगमे ये गत्यर्थकाः, ते ज्ञानार्थका इत्यभियुक्तोक्त्या अधिगम्येत्यर्थाश्रयेण विचारस्नानयोरविरोधोपपादनन्तु न सत् । इङिकारे एवाधिपूर्वकत्वाव्यभिचारश्रवणात् अध्ययनशब्दस्याक्षरराशिमात्रग्रहणे एव रुढत्वाच्च, विचारविशिष्टस्याध्ययनपदवाच्यत्वे प्रमाणाभावाच्च ।

ननु गुरुगृहे निवसतो धर्मं जिज्ञासमानस्य ब्रह्मचारिणोऽदृष्टार्थंमधीत्य स्नायादित्यनेन स्नानं विधीयतामित्याशङ्क्य परिहरति "**न चेदमिति**" अयं भावः—न स्नायादित्यनेन ब्रह्मचारिणोऽस्नानादिनियमो विहितः, तस्यावध्यपेक्षायामधीत्य स्नायादितिविहितं स्नानं अस्नानादिनियमनिवृत्तिं लक्षयति, गुरुकुलवासादयोपि तत्सहचरितास्तन्निवृत्तो निवर्तन्ते इति स्मृतेः दृष्टार्थत्वम् अन्यथा अदृष्टार्थत्वं स्यात् । तच्चानिष्टं, सम्भवति दृष्टफलकत्वे अदृष्टकल्पनाया अन्याय्यत्वादिति । यावददध्ययनं, तावदेव तेऽनुष्ठीयन्तेऽध्ययनसमाप्तिरेव तेषामवधिः, तत्समाप्तौ सकलब्रह्मचारिधर्मा निवर्तन्ते, अध्ययनाङ्गत्वात् तद्धर्माणाम् । नहि अङ्गिसमाप्तौ अङ्गानि अनुष्ठातुं शक्यन्ते, तथा सति अङ्गत्वमेव तेषां न स्यादिति न्यायमूलकस्मृतेः सकलब्रह्मचारिधर्मनिवृत्तिलक्षणायामदोषः ।

यदध्ययनस्यार्थावबोधपर्य्यंवसायित्वं व्याख्यातं स्नानशब्दस्य गुरुकुलनिवासनिवृत्ति-व्यावृत्तिपरत्वं यदीरितम् । अत्र सर्वत्राध्ययनस्य दृष्टार्थत्वमेव हेतुरिति प्रकरणार्थोऽवसेयः ।

न च स्मृतिविरोधपरिहाराय स्नानानन्तरमेव धर्मविचारः कर्तुमुचितः, तावतापि वेदानर्थक्यनिवृत्तिसम्भवादलं स्मृतेर्लक्षणाभ्युपगमेनेति चेत् ? सत्यम् । स्यादेवं यदि स्नानमात्रमेव विहितं स्यात्, किन्तु 'स्नात्वा भार्यामुपगच्छेत्, कृष्णकेशोऽग्नीनादधीतेत्यादिवचनेन कर्मान्तरस्यापि कर्तव्यतया निर्देशात्तेषां च धर्मविचारविरोधितयाऽवश्यं बाधनीयत्वे प्रथमोपस्थितस्य विरोधिनः स्नानस्यैव वाधनं युक्तम् । अपि च ज्ञानसाध्यस्याग्न्याधानादिकर्मणो ज्ञानमन्तराऽशक्यसम्पादनीयतया ज्ञानस्यावश्यकत्वे विचारं विना तदर्जनाभावात्स्नानात्प्रागेव विचारं विना तदर्जनाभावात्स्नानात्प्रागेव विचारोऽनुष्ठेय इति, पाठक्रमानुरोधेन प्राप्तमपि स्नानाध्ययनयोरानन्तर्यमर्थक्रमेणाध्ययनप्रयोजनौपयिकेन जिज्ञासानन्तर्येण वाध्यते पाकहोमयोरिव । पाठक्रमादार्थक्रमो वलीयानिति पञ्चमे निरूपयिष्यते । यद्यपि अधीत्य स्नायादत्र क्त्वाप्रत्ययोल्यप् स्थानितया श्रूयते इति श्रुतिकर्मो भवितुमर्हति, तथापि स्मृतिगतत्वेन विप्रकर्षात् पाठक्रमतुल्य इति पाठक्रमोऽभिहितः । क्रमस्य पदार्थधर्मतया दुर्बलत्वेन प्रधानेनाध्ययनपदार्थेन वाध इति स्नानाध्ययनयोरानन्तर्यमाश्रयणीयम्, अध्ययनवैयर्थ्यापत्तेः ।

इदं तु बोध्यं विरोधहेतुकत्वाद् वाधस्य येन येन धर्मविचारस्य विरोधः, तत्तदेव वाध्यते, येन तु तस्य न विरोधः, तत्तेन न बाध्यते। एवं च मधुमांसादिभक्षणस्य धर्मविचारविरोधित्वाभावात् न वाधः। मधुमांसादिभक्षयन्नपि जिज्ञासितुमर्हति। न च मधुमांसादिभक्षणवद्दारपरिग्रहोपि स्यात् तस्यापि तद्विचारविरोधित्वाभावादिति वाच्यम्। स्नात्वाभार्यामधिगच्छेदित्यनेन स्नातकस्यैव दारपरिग्रहस्मरणात् समासन्नब्रह्मचारिधर्मः स्नातको भवति, अन्यथा अस्नाननिवृत्तेरपर्यवसानत्वानापत्तेरिति, वेदमधीत्य स्नायाद् गुरुकुलात्मासमावर्तिष्ट इति अदृष्टार्थतापरिहारायैव। तस्माद् वेदाध्ययनमेव पूर्वमभिनिर्वर्त्य अनन्तरं धर्मो जिज्ञासितव्य इति अथशब्दस्य सामर्थ्यम्।

न च ब्रूमोऽन्यस्य कर्मणोऽनन्तरं धर्म-जिज्ञासा न कर्त्तव्येति। किन्तु वेदमधीत्य त्वरितेन न स्नातव्यमनन्तरं धर्मो जिज्ञासितव्य इति अथ शब्दस्यार्थः। वेदमधीत्य स्नायाद् गुरुकुलान्मासमावर्तिष्टेत्यदृष्टता परिहारायैवेतिभाष्यम्।

नन्विदं भाष्यमसङ्गतम् वेदाध्ययनानन्तरं स्नानमुक्तं, पुनः गुरुकुलान्मासमावर्तिष्टेत्यप्युक्तं गुरुकुलात्समावर्तनं न स्नानमेवेति मिथो विरुद्धमिति चेत्? न वाक्यभेदेन भाष्यद्वयस्य व्याख्येयत्वात्। तथा हि-अधीत्य स्नायादितिस्मृतिर्नाध्ययनानन्तरमेव समावर्त्तनं वोधयति, अध्ययनस्यादृष्टार्थत्वापत्तेः। किन्तु वेदार्थविचारानन्तरमेवञ्च यावद्विचारो न समाप्यते, तावदस्नाननियमः पालनीय इत्येवाधीत्य स्नायादिति स्मृतेरर्थः।

गुरुकुलान्मासमावर्तिष्टेत्येतत्तु यथाश्रुतमधीत्य स्नायादितिस्मृतिविपरोतार्थमतस्ततोऽपनेयम् अपनीतस्यायमर्थः स्मृतेर्लाक्षणिकार्थकत्वप्रदर्शनप्रसङ्गेन अथशब्दस्यानन्तर्यार्थिकत्वं परित्यज्य, गुरुकुलनिवासनिवृत्तिव्यावृत्तिपरत्वेन व्याख्याने दृष्टार्थत्वमेव हेतुः। तथा च वेदमधीत्य गुरुकुलात्समावर्तनमविधाय धर्मजिज्ञासा कार्या इत्येवाथातो धर्मजिज्ञासेति सूत्रार्थः।

ननु अधीत्य स्नायादितिबलेनाध्ययनानन्तरं गुरुगेहान्निवृत्तिः विचारार्थं पुनर्गुरुगेहे समागमश्चेति कालभेदेनोभयोरविरोधसम्भवेन नोक्तार्थे स्मृतेर्लक्षणा युक्तेति चेत्? न। अकृतार्थस्य गुरुगेहान्निवृत्तिः, पुनरागमश्चेत्युभयोरदृष्टार्थत्वप्रसङ्गात्, निर्गमस्य वाचनिकत्वेनादृष्टार्थत्वसम्भवेऽपि तत्र

स्मृतेरतात्पर्यात्, आश्रमान्तरप्रवेशायैव निर्गमस्य स्मृतिबोधितत्वादित्यलं भूरिभाषितेन ।

**भाष्यम्––अतः शब्दो वृत्तस्यापदेशको हेत्वर्थः । यथाक्षेमसुभिक्षोऽयम् अतोहमस्मिन् देशे प्रतिवसामीति । एवमधीतो वेदो धर्मजिज्ञासायां हेतुर्ज्ञातः । अनन्तरं धर्मो जिज्ञासितव्य इति अतः शब्दस्य सामर्थ्यम् । धर्माय हि वेदवाक्यानि विचारयितुमनधीतवेदो न शक्नुयात् । अतः एतस्मात्कारणात् अनन्तरं धर्मं जिज्ञासितुमिच्छेदित्यतः शब्दस्यार्थः ।**

**अतः शब्दो हेत्वर्थकः** यतो वेदाध्ययननं धर्मजिज्ञासाहेतुरतः तदनन्तरं धर्मजिज्ञासा कार्या अध्ययनस्य जिज्ञासाहेतुत्वे एवानन्तर्यस्य दृष्टार्थकत्वं, नान्यथा । एवं च दृष्टार्थकानन्तर्याभिधायिना अथशब्देनैवाध्ययने जिज्ञासा हेतुत्वबोधनादतः शब्दोपादानं व्यर्थमिति भ्रमवारणायातः शब्दार्थो व्याख्यायते, अध्ययने धर्मजिज्ञासायोग्यत्वरूपं हेतुत्वंमथशब्देनोक्तम् । तथाचाधीतपुरुषो धर्मजिज्ञासाधिकारी इत्येतावन्मात्रमथशब्देनोक्तं, न त्वनुष्ठानयोग्यत्वम्, अतस्तद्वक्तुमप्यतः शब्दः । स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिरेवेतिकर्त्तव्यताभूतस्य धर्मविचारस्योत्पादकोऽनुष्ठापकश्च । तत्रोत्पत्तौ अध्ययनस्य हेतुत्वमथशब्देनोक्तम्, अत एव तस्मिन् हि सावकल्पते इति भाष्यकृतोक्तम् ।

अतः शब्दोऽप्यध्ययनविधेरेव धर्मजिज्ञासां प्रत्यनुष्ठापकत्वलक्षणप्रयोजकहेतुत्वमाह । धर्मजिज्ञासां प्रत्यध्ययनविधेरनुष्ठापकत्वाभ्युपगमे फलार्थताप्यनुष्ठापकत्वेनाशंक्येत सा शूद्रेऽपि सम्भवात् तस्यापि विचारं प्रयुञ्जीत (पृ. १६ इति सिद्धान्तचन्द्रिका) तथा च शूद्रे विद्याधिकारनिवृत्तये अध्ययनविधेरेव विचारप्रयोजकत्वमिति वक्तुमतः शब्दः एवञ्च वेदाध्ययनानन्तरं तदर्थजिज्ञासा कार्या अन्यथा तदध्ययनमनर्थकं स्यात् अध्ययनं हि अर्थज्ञानहेतुतया विहितम्, अर्थज्ञानं न च विचारं विनेति तद्विचाराय प्रयतितव्यं न तूष्णीमवस्थातव्यम् एवं च येषां त्रैवर्णिकानामध्ययनेऽधिकारस्तेषामेव धर्मजिज्ञासायामप्यधिकारः, नान्येषां शूद्रादीनां तेषामुपनयनाभावेन विद्याधिकारस्य वक्तुमशक्यत्वात् । उपनयनविधौ शूद्राणामश्रवणात् । वसन्ते ब्राह्मण-

मुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यमित्यनेन त्रैवर्णिकानामेव निर्देशात् तेषामेव विद्याधिकारः ।

अतः शब्दोपादानप्रयोजनान्तरमपि प्रदर्श्यते । वृत्तहेतुत्वाभिधायिना अतः शब्देन अथ शब्दस्याध्ययनानन्तर्यार्थकत्वसिद्धिः, अन्यथा अत्र मङ्गलार्थकोऽथशब्दः सूत्रकृता प्रयुक्त इत्यपि भ्रमः स्यात् । न चेदृशार्थस्य प्रकृतेऽन्वयासम्भवेन न तदर्थग्रहणम् । किञ्चान्यार्थमानीयमानोदकुम्भदर्शनवत् श्रवणमात्रेणैव मङ्गलनिष्पत्या न तादृशार्थाभिधानोपयोग इति वाच्यम् । स्वभावतः प्राप्तं यत्किञ्चित् क्रियानन्तर्यमनुवदन्नथशब्दः मङ्लार्थतया सूत्रकृता प्रयुक्त इति विभ्रमसम्भावनाया अपरिहारात् ।

अथ वा अथ शब्दोऽध्ययनस्य धर्मविचारहेतुत्वं प्रतिपाद्य, स्नानमपि वाधत इत्येतत्प्रदर्शनाय अतः शब्दोपादानम् । यतोऽधीतवेदः पुरुषो धर्मविचारयोग्यो भवति, अतः कर्मणि अधिकर्तुं त्वरितुं धर्मं विचारयेन्न वृथा समयं यापयेत् अन्यथा वेदाध्ययनस्य वैफल्यापत्तेः ।

धर्मजिज्ञासितुमिच्छेदिति भाष्यम् ।। नन्वत्र सनः इषेर्लिङस्तुमुनश्चेच्छावाचकत्वेन पौनरुक्त्यमिति चेत न् ? भावनवबोधात् ज्ञातुमिच्छा जिज्ञासेत्यत्र सन्प्रत्ययवाच्याया इच्छायाः समानपदोपात्तं ज्ञानं कर्मेति ज्ञानकर्मिकेच्छा सन्नन्तभागेन प्रतीयते, इष्धातुवाच्याया इच्छायाः कर्म धर्मो वा पदान्तरोपात्तः, ज्ञानेच्छैव वा द्वयं वेति भिन्नविषयत्वात् क्व पौनरुक्त्यावकाशः । लिङः तुमुनश्च भिन्नार्थवाचकतया न प्रकृते दोषः । न च सूत्रकृतैकैवेच्छा प्रदर्शिता भाष्यकृता किमर्थमिच्छाद्वयमुपत्तिमिति चेत् ? सूत्रकारेच्छाभिनिर्वृत्तये इच्छान्तरोपादानात्, न चेच्छाविषयकेच्छायां प्रमाणाभावः, मन्दाग्नीनां भोजनेच्छायामिच्छादर्शनात् न काचिदनुपपत्तिः ।

**भाष्यम्—धर्माय जिज्ञासा धर्मजिज्ञासा । सा हि तस्य ज्ञातुमिच्छा, स कथं जिज्ञासितव्यः, को धर्मः, कथं लक्षणः, कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेनि, तत्र को धर्मः, कथं लक्षण इति एकेनैव सूत्रेण व्याख्यातं चोदनालक्षणोर्थो धर्म इति । कानि अस्य साधनानि, कानि साधनाभासानि, किं परश्चेति शेषलक्षणेन व्याख्यातम्**

**क्व पुरुषपरत्वं क्व वा पुरुषो गुणभूत इत्येतासां प्रतिज्ञानां पिण्डस्यै-तत्सूत्रम्--अथातो धर्मजिज्ञासेति ।**

धर्माय **जिज्ञासा धर्मजिज्ञासासेति** भाष्यम् । ननु धर्माय जिज्ञासेति विग्रहप्रदर्शनात् चतुर्थी तदर्थेति २-१-३६ सूत्रेण समासोऽभिप्रेतो न युज्यते, "चतुर्थी तदर्थे प्रकृति-विकृतिग्रहणं कर्तव्य''मिति वार्तिकानुसारेण विकृति-वाचक-चतुर्थ्यन्तस्य प्रकृतिवाचकशब्देन समासस्येष्टतया प्रकृते धर्मस्य विकृतिवाचकत्वाभावेन समासस्यासाधुत्वम् । न च धर्माय जिज्ञासेति-विग्रहो न तादृशसमासाभिप्रायकः, अपि तु सामर्थ्यप्रदर्शनायेति वाच्यम् । "समर्थः पदविधिरि''त्यनेनैव २-१-१ सामर्थ्यलाभे तदुपादानस्य वैयर्थ्या-पत्तेरिति चेत् ? न । **सा हि तस्येति** भाष्योक्त्या षष्ठीसमासस्यैवात्रेष्टत्वात्, तादर्थ्यसम्बन्धाभिधायिषष्ठ्यन्तस्य धर्मशब्दस्य जिज्ञासापदेन समास इति वोधनाय धर्माय जिज्ञासेत्युक्तिः । न च तादर्थ्यविवक्षायां चतुर्थ्येव प्राप्नोति न षष्ठीति कथं षष्ठ्यन्तस्य धर्मपदस्य समास इति वाच्यम् । तादर्थ्यस्य तत्त्वेनाविवक्षायां चतुर्थ्यप्राप्त्या सम्बन्धसामान्येन तद्विवक्षायां सामान्य-सम्बन्धस्य सम्बन्धविशेषविश्रान्तत्वेन सामान्येन तादर्थ्यसम्बन्धस्यैव षष्ठ्यर्थत्वात् ।

निखिलं व्याख्येयमंशमेकस्यां प्रतिज्ञायामन्तर्भावयन् भाष्यकारः पृच्छति-**स कथं जिज्ञासितव्य इति ?** कथं लक्षणं यस्य स कथंलक्षणः, कानि साधनाभासानि, अन्यसाधनमन्यस्य साधनाभासः । यथा क्रत्वर्थं पर्ण-मयीत्वादि पुरुषार्थस्यापापश्लोकश्रवणादेः यस्य पर्णमयी जूहूर्भवति न स पापं श्लोकं श्रृणोतीत्यादिप्रसिद्धस्य । गोदोहनेन(पशुकामस्या)पः प्रणये-दित्यादिविहितस्य पुरुषार्थस्य गोदोहनादेः क्रतोः साधनाभासत्वम् । एतेषां प्रतिज्ञातानां यस्य यत्र व्याख्यानम्, तत्र तं दर्शयता भाष्यकारेणोक्तं को **धर्मः कथंलक्षण इति** द्वयं चोदनासूत्रेण व्याख्यातमित्युक्त्वा अवशिष्टं शेषलक्षणेन व्याख्यातमित्युक्तम् । शेषलक्षणशब्दश्च तृतीये प्रसिद्धः, अत्र शेषलक्षण-शब्देनावशिष्टं निखिलं मीमांसाशास्त्रमभिप्रैति । तेन कतिपयप्रतिज्ञातानां तत्राव्याख्यानेऽपि न क्षतिः ।

**भाष्यम्--धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा । स चेत्प्रसिद्धः, न जिज्ञासितव्यः अथाप्रसिद्धो न तराम्, तदेतदनर्थकम्, धर्मजिज्ञासा-**

**प्रकरणम् । अथ वार्थवत् । धर्मं प्रति हि विप्रतिपन्ना बहुविदः केचिदन्यं धर्ममाहुः, केचिदन्यम्, सोयमविचार्य प्रवर्तमानः कञ्चिदेवोपाददानः विहन्येत, अनर्थं च ऋच्छेत्, तस्माद्धर्मो जिज्ञासितव्य इति, स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे । तदभिधीयते ।**

धर्मः प्रसिद्धो वा स्यात् अप्रसिद्धो वेति भाष्यम् । धर्ममीमांसाशास्त्रयोः प्रतिपाद्यप्रतिपादकत्वसम्बन्ध एव शास्त्रावतारहेतुः समर्थितः सूत्रकृता धर्मो हि अस्य प्रतिपाद्यतयाप्रयोजनमितिवदता । सोऽयं तदा स्याद् यदि धर्मो जिज्ञास्यः स्यात्, अजिज्ञास्यत्वे प्रेक्षावत्प्रवृत्त्यनुपपत्त्या तदारम्भस्यैव वैफल्यम् । धर्मश्चेत्प्रसिद्धस्तदा न जिज्ञास्यः, स्फीतालोकमध्यवर्तिघटवत्, अथ खपुष्पवदप्रसिद्धः, तथापि तद्वन्नजिज्ञास्यः जिज्ञासाशब्देन प्रकृत्या ज्ञानं, प्रत्ययेन चेच्छोच्यते तत्र प्रसिद्धे ज्ञानं भवति, इच्छैव नोत्पद्यते; असिद्धविषयकत्वादिच्छायाः ; अप्रसिद्धे तु न ज्ञानं नापीच्छेति तदुभयाभावबोधनाय न तरामित्यतिशयोक्तिः ।

धर्मम्प्रति विप्रतिपन्ना बहुविदः । इति भाष्यम् ।

**सूत्रम्—चोदनालक्षणोऽर्थो धर्मः ।। १।१।२ ।।**

**भाष्यम्—चोदना इति क्रियायाः प्रवर्तकं वाक्यमाहुः, आचार्यचोदितः करोमीति हि दृश्यते । लक्ष्यते येन तत्लक्षणं, धूमो लक्षणमग्नेरिति हि वदन्ति । तथा यो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे ।**

अयमभिप्रायः—प्रसिद्धचप्रसिद्धिभ्यां धर्मस्याजिज्ञास्यत्वं यदापादितं, तदयुक्तं प्रसिद्धिरप्रसिद्धिर्वा जिज्ञास्यत्वे न तन्त्रम्, किन्तु सन्दिग्धत्वं, सप्रयोजनत्वं च । स्फीतालोकमध्यवर्तिघटादयो न जिज्ञास्यन्ते, तत्र हेतुरसन्दिग्धत्वम्, अप्रयोजनत्वाच्च न खपुष्पादयः । धर्मस्तु सन्दिग्धः विप्रतिपन्नावहुविद इति भाष्येण जिज्ञासाहेतुभूतसंशयप्रदर्शनात् । तथा सप्रयोजनोऽपि सहि पुरुषं निश्रेयसेन संयुनक्ति इति भाष्योक्तेः । तदिह जिज्ञासाहेतुभूतसंशयप्रयोजनवत्वाद् धर्मस्य जिज्ञास्यत्वम् ।

**इति शाबरभाष्यव्याख्यायां कल्पकलिकायां जिज्ञासाधिकरणम् ।**

प्रथमं तावद्धर्मे द्विधा विप्रतिपत्तिः किंप्रमाणकोधर्मः किंस्वरूपश्चेति। तदेतद्विप्रतिपत्तिद्वयस्याद्येन पादेन निर्णयः क्रियते। अत्र धर्मे चोदनैव प्रमाणमिति व्यवस्थापनेन प्रत्यक्षादीनां प्रामाण्यनिराकरणात्। प्रत्यक्षादिप्रमाणगम्यश्चैत्यवन्दनादिर्न धर्मः, किन्तु चोदनागम्योऽग्निहोत्रादिरेव धर्म इति स्वरूपमपि सविशेषं कथितं भवति। धर्मे चोदनाया निरपेक्षं प्रामाण्यमिहैव पादे वर्णितम्। अवशिष्टे पादत्रये विधिवाक्यैकवाक्यतया चोदनामूलतया वा अर्थवादादीनां प्रामाण्यं साध्यते। अतः समस्तोऽध्यायः प्रमाणलक्षणमेव। वेदप्रामाण्यवादिनामपि तत्र तत्र विशेषविप्रतिपत्तिदर्शनान्न स्वतोनिर्णय इति, तदर्थं मीमांसाशास्त्रम् एक शास्त्र परिशीलनशालिनां संशयाभावाद्वहुविदामित्युक्तम्।

अथातो धर्मजिज्ञासेतिप्रथमसूत्रेण शास्त्रारम्भमुपपाद्येदानीं शास्त्रमारभते चोदनालक्षणोऽर्थो धर्म (१. १. २) इति। लौकिकाकारशून्यतया धर्मस्य प्रत्यक्षाविषयत्वेन तन्मूलकप्रमाणान्तरविषयत्वस्य शङ्कितुमप्यशक्यतया निष्प्रमाणक एव धर्मः स्वस्वकल्पनानुसारेण लोकधन्धनाय केवलं बुधैर्निरुपित इति केचित्।

न कल्पनामात्रेण धर्मो निरूपितः किन्तु योगिनां प्रत्यक्षगम्यः। ते हि कारुणिकतया आर्षप्रत्यक्षेण धर्मस्वरूपमवगम्य लोकोपकाराय निबबन्धुरित्येके।

ईदृशयोगिसद्भावे प्रमाणाभावाच्चोदनागम्य एप धर्मो न प्रमाणान्तरगम्य इत्याद्यनेकविप्रतिपत्तिर्दृश्यते।

सधर्मः चोदनालक्षणः अर्थात् चोदनाप्रमाणकः। लक्ष्यतेऽनेनेति व्युत्पत्त्या लक्षणशब्दस्य प्रमाणपरत्वात्। चोदनाप्रमाणकत्वकथनेऽपि एकत्र प्रमाणसंप्लवसम्भवात्प्रमाणान्तरमूलकत्वनिरासो न प्रतीयते इति, तत्प्रतिपत्तये चोदनैव तत्र प्रमाणं, न प्रत्यक्षादि इति व्याख्येयम्। प्रत्यक्षादीनां तत्र प्रमाण्यनिरासेऽपि चोदनायामव्यभिचारेण प्रामाण्यासाधनात्, तदर्थं सा च प्रमाणमेव नाप्रमाणमित्यपि बोध्यम्। एवं च सामान्यतः प्रसिद्धं धर्ममनूद्य प्रमाणविधिर्बोध्य इति भावः।

ननु धर्मे प्रमाणान्तरप्रवृत्तेरनङ्गीकारात् कथं तदनुवादः प्रमाणान्तरानुपस्थितस्यानुवादासंभवात्, अनुवादसिद्धये प्रमाणान्तरमूलकत्वाम्युपगमे

नु चोदनैव प्रमाणं, सा च प्रमाणं, सा च प्रमाणमेवेति व्याख्यानमसंगतं, प्रत्यक्षादेरपि तत्र प्रामाण्याभ्युपगमात् निर्मूलसामान्यप्रसिद्धेरनभ्युपगमात्, विशिष्य प्रमाणान्तरानवगमेऽपि लोकप्रसिद्धिरेव मूलमित्यपि न, निर्मूललोकप्रसिद्धेः शास्त्रीयार्थव्यवस्थापकत्वाभावात् । न च जगद्वैचित्र्यान्यथानुपपत्त्यैव तत्प्रसिद्धिः । स्वभावभेदेनापि जगद्वैचित्र्योपपत्तिसम्भवात् तावतापि चोदनाया अनुवादकत्वापत्तेश्च ।

अत्रोच्यते-अग्निहोत्रादयः कर्मविशेषा धर्मत्वेन लोके प्रसिद्धाः, तत्कारी पुरुषः लोके धार्मिक इत्याख्यायते । तदिदं निर्मूलमिति केचित्, योगिप्रत्यक्षमूलमित्येके, एवं चात्र बहुविधविप्रतिपत्तिदर्शनात्प्रत्यक्षादिव्यवच्छेदेन चोदनायाः प्रामाण्यं प्रतिज्ञायते । तथा च सामान्यतः प्रसिद्धं धर्ममनूद्य चोदनाप्रामाण्यं विधीयते इत्यत्र न काचित् क्षतिः । चोदनाप्रामाण्यविधानादेव धर्मस्वरूप-विशेषयोरर्थात् सिद्धिः । तथा हि चोदनाप्रमाणमेव, नाप्रमाणमित्युक्त्याऽर्थादितज्ज्ञायते चोदनागम्यस्याग्निहोत्रादेर्धर्मत्वमस्त्येव, न तु नास्तीति धर्मस्वरूपसिद्धिः, सैव प्रमाणं न प्रत्यक्षादि इत्यवधारणात् चोदनागम्यस्याग्निहोत्रादेरेव धर्मत्वं, न चैत्यवन्दनादेः । तत्र कस्याश्चिच्चोदनाया अदर्शनादिति धर्मविशेषसिद्धिः ।

अथवान्यथा वा वचनव्यक्तिः-यश्चोदनालक्षणः अग्निहोत्रादिः सधर्म एव, नाधर्मः । स एव च धर्मः, न चैत्यवन्दनादिरितिधर्मस्वरूपतद्विशेषसिद्धिरिति भावः ।

ननु कोधर्मः कथं लक्षण **इत्येकेनैव सूत्रेण व्याख्यातमिति** भाष्यम् ननु सकृदुच्चरितन्यायेनैकेन वाक्येनैकविध एव वाक्यार्थबोधः सम्भवति, तत्कथं वाक्यार्थद्वयोत्पत्तिरिति चेत् ? सत्यम् । श्रुत्या एकवाक्येन वाक्यार्थद्वयोपपत्तिर्न सम्भवति, किन्तु श्रुत्यर्थाभ्यां ततः वाक्यार्थद्वयमुपपादयितुं शक्यत एव । तथा हि यश्चोदनागम्यः, स एव धर्मः, नेतरश्चैत्यवन्दनादिरिति धर्मस्वरूपविधावर्थाद्गम्यते चोदनैव प्रमाणं, न प्रत्यक्षादि । न प्रत्यक्षादीत्युच्यते, तत्प्रामाण्याभिधित्सया, तदा अर्थादितद्गम्यते चोदनागम्योऽग्निहोत्रादिरेव धर्मो नेतरश्चैत्यवन्दनादिरितिपूर्वमुक्तमपि पुनस्पष्टप्रतिपत्तयेऽभिहितमित्यवधेयम् ।

चोदनेति क्रियायाः **प्रवर्तके**तिभाष्यम् । चोदनाशब्दो यद्यपि लिङादिप्रत्ययस्य वाचकस्तथापि केवलस्य तस्य लोके प्रयोगाभावात्तद्घटितपदप्रयोगसम्भवेऽपि तावन्मात्रेण कस्यचित्प्रवृत्तेरदर्शनात्तद्घटितवाक्यस्य लक्षकः इत्यभिप्रायेणाह भाष्ये **क्रियायाः प्रवर्त्तकं वचनमिति** । अत्रैव लोकानुभवं दर्शयति आचार्यचोदितः करोमीति ।

अथवा न केवलं लिङादिप्रत्ययः विधेये पुरुषं प्रवर्तयितुमीष्टे, किन्तु किं केन कथमित्याद्यपेक्षित साध्यसाधनेतिकर्त्तव्यतासहितं विधिघटितं वाक्यमित्यभिप्रायेण प्रवर्तकं वाक्यमित्युक्तम् ।

**चोदनाहिभूतमितिभाष्यम्**

**भाष्यम्—चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्, नान्यत्किञ्चनेन्द्रियम् । नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना । यथा हि यत्किञ्चन लौकिकं वचनम् । नद्यास्तीरे फलानि सन्ति । इति । तत् तथ्यमपि भवति, वितथमपि भवतीति । उच्यते ॥**

नन्वेतदुपादानं धर्मे चोदनायाः प्रामाण्यं, प्रत्यक्षादीनामप्रामाण्य मित्यत्र युक्तिप्रदर्शनाय, तदनुचितं प्रतिज्ञासूत्रे तदर्थसाधनाभावेन युक्तिप्रदर्शनस्यानाकांक्षिततत्वात् । औत्पत्तिकसूत्रेऽस्य वक्ष्यमाणत्वाच्चेति चेत् न । प्रतिज्ञातार्थसमर्थनाय तदुपादाने दोषाभावात्, सम्भवदर्थविषयकं वाक्यं प्रतिज्ञोच्यते । न चेदं तथा । नित्यं प्रमाणान्तरानुगामिनः शब्दस्येदृशेऽर्थे प्रामाण्यं, स्वतन्त्रस्य प्रत्यक्षस्य चाप्रामाण्यमित्यभिधानादित्याक्षेपनिरासाययुक्तिप्रदर्शनस्यावश्यकत्वात् । तथा चातीन्द्रियार्थेषु शब्दसामर्थ्यदर्शनात् प्रत्यक्षादेश्च सामर्थ्याभावात् चोदनैव प्रमाणं सा च प्रमाणमेवेति प्रतिज्ञायाः सम्भावितार्थकत्वं साधूपपद्यते ।

नन्वेवम् । अत्यन्तासतोप्यर्थस्य शब्देन बोधनात्, तत्र तस्येव धर्मेऽपि-चोदनाया अप्रामाण्यमेव स्यादितिचेत् ? न तत्र तदर्थज्ञानोत्पादहेतुकत्वरूपप्रामाण्यस्योत्सर्गतः प्रसक्तावपि अर्थान्यथाधीहेतुदोषज्ञानवशात्तत्र तदपनोदवत् प्रकृते तदभावेन प्रामाण्यस्य सुस्थिरत्वात्, चोदनाशब्दस्य विधायकवाचकतया तस्य च भूतादिषु प्रसक्तेर्विरहाच्चोदना हि भूतमिति भाष्योक्तिरसंगतेति तु न शङ्क्यम् ।

प्रमाणविशेषस्य प्रत्यक्षादेर्धर्मे प्रामाण्यनिरासे तत्र किं प्रमाणविशेष-जिज्ञासया तद्विशेषस्य शब्दस्यैव सामर्थ्यप्रदर्शनमुचितमित्यगत्या शब्दसामान्ये चोदनापदस्य लक्षणाङ्गीकारात् ।

अपि च भूताद्यभिधानसामर्थ्यं शब्दस्य न चोदनात्वप्रयुक्तं, किन्तु शब्दसामान्यप्रयुक्तमिति सामान्यमुखेनैव तत्र तस्य सामर्थ्यप्रदर्शनमुचितम् । तदयं भाष्याशयः चोदना, धर्मे प्रमाणं, शब्दत्वात् भूताद्यभिधायिशब्दवत् । शब्देषु अतीन्द्रियाभिधानसामर्थ्यं दृष्टं, न प्रत्यक्षादिष्विति धर्मेऽपि शब्द एव प्रमाणं, न प्रत्यक्षादि, धर्मस्यातीन्द्रियत्वात् इति भावः ।

लक्षणपदेन निमित्तं यदोच्यते, तदा प्रमितेः कारणमात्रमवगम्यते । यदा प्रमाणमुच्यते, तदा प्रमितेरसाधारणं कारणं प्रतीयते । तदेव करणं व्यापारवदसाधारणं कारणं करणमिति प्रसिद्धेः ।

प्रमाणमपि विवक्षाभेदेन भिद्यते । तथा हि यदि शब्दादि प्रमाणं, तदा तदर्थाधिगतिः फलम्, यदा च तदर्थाधिगतिः प्रमाणं, तदा हानोपादानोपेक्षाबुद्धयः फलम् ।

न च यदा ज्ञानादिपरं लक्षणपदं तदा शब्दपरचोदनाशब्देन सामानाधिकरण्यं न स्यादिति वाच्यम् । लक्षणया ज्ञानादिपरचोदनापदेन तत्परलक्षणशब्दस्य सामानाधिकरण्योपपादनसम्भवात् ।

निमित्तमात्रलक्षणपक्षे शब्दप्रामाण्यपक्षे च मुख्यमेव सामानाधिकरण्यम् । वस्तुतस्तु सर्वस्मिन् पक्षे सामानाधिकरण्यं सूपपादम् । लक्षणशब्दस्य लक्ष्यतेऽनेनेति व्युत्पत्या यथा ज्ञानादि परत्वं, तथा चोदनापदस्यापि चोद्यतेऽनयेति व्युत्पत्त्या ज्ञानादिपरत्वम् । अत एव

प्रवर्त्तेऽहमिति ज्ञानं येन शब्देन जन्यते ।
सा चोदनोच्यते यद्वा प्रवर्त्तनफला मतिः ॥

इत्युक्तिः सङ्गच्छते । एवं च मतभेदेन लक्षणशब्देन निमित्त-प्रमाणयोरुभयोर्ग्रहणमिति भावः ।

ननु गोदोहनादि द्रव्यं, नोचैस्त्वादि गुणो, यागादिक्रिया च फलसाधनत्वाद्धर्मः, नापूर्वादिरिति श्रेयस्करभाष्योक्त्या गोदोहनद्रव्यादेर्धर्म-

त्वात्, तत्र प्रत्यक्षादिप्रमाणप्रवृत्तेः सर्वसम्मतत्वात्तत्र चोदनैव प्रमाणमित्यवधारणमसंगतमिति चेत् ? न। ऐन्द्रियकेण गोदोहनत्वादिधर्मेण तेषां प्रत्यक्षत्वेपि, तेन रूपेण धर्मत्वाभावात्, येन रूपेण श्रेयःसाधनत्वेनैषां धर्मत्वं, तेन रूपेण प्रत्यक्षत्वानभ्युपगमात्, शब्दैकसमधिगम्यत्वाच्छ्रेयस्साधनत्वस्येति युक्तमेव चोदनाया एव तत्र प्रामाण्यं नेतरस्येति निरूपणम्।

ननु न युक्तं तादृशनिरूपणं **नान्यत् किञ्चनेन्द्रियम**मितिभाष्योक्त्या इन्द्रियस्यैव तत्र सामर्थ्यनिराकरणं प्रतीयते, न प्रमाणान्तरस्येति चेत् ? न। दृष्टान्तप्रदर्शनार्थत्वादिन्द्रियोपादानस्य। यथेन्द्रियमतीन्द्रियेऽसमर्थं कुत इत्यपेक्षायां इन्द्रियपूर्वकत्वात्प्रमाणान्तरस्येन्द्रियाप्रवृत्तौ तत्सामर्थ्यविरहात्। एवञ्च प्रमाणान्तरप्रवृत्त्यसम्भवात् चोदनैव तत्र प्रमाणमिति सिद्धम्।

ननु माभूद् भूतादिषु प्रत्यक्षप्रसक्तिः, अनुमानं तु भवत्केन वार्यते। नदीपूरभेदादिना व्यवहिताया विप्रकृष्टाया मेघोन्नत्या पिपीलिकाण्डसञ्चरणेन वा अनागतायाश्च वृष्टेरनुमानमामनन्ति न्यायविदः। एवं गन्धादिना तदाश्रयीभूतसूक्ष्मद्रव्यस्य, शाखादिकम्पनेन वायोश्चेति नाखिलप्रमाणस्य प्रतिषेधोपपत्तिरिति चेत्, न। तत्र सामान्येन लिङ्गलिङ्गिसम्बन्धग्रहणेनानुमानस्वीकारेऽपि प्रकृते सामान्यतो विशेषतोलिङ्गिनोधर्मस्य केनचित् रूपेण कस्यचिल्लिङ्गस्य सम्बन्धग्रहणाभावेनानुमानासम्भवात्।

एवं तर्हि शब्दस्यापि गृहीतसम्बन्धस्यैव प्रत्यायकतया प्रकृते पूर्वोक्तदिशा सम्बन्धग्रहणासम्भवात् कथं चोदनैव प्रमाणमिस्यावधारणमगृहीतसम्बन्धस्य शब्दस्य प्रत्यायकत्वे तु प्रथमश्रवणेऽपि तस्य प्रत्यायकत्वापत्तिरिति चेत् ?

सत्यम्। स्यादेव दोषो यदि वाचकतया शब्दो धर्मं बोधयेत्, किन्तु तद् भूताधिकरणोक्तदिशा वाच्यवाचकभावरूपसम्बन्धग्रहनिरपेक्षैरेव पदैः पदार्थहेतुकवाक्यार्थवोधस्यैव व्यवस्थापयिष्यमाणत्वात्। तदेतत्सर्वं तत्रैव स्पष्टीभविष्यति। **नन्वतथाभूतमप्यर्थमिति** भाष्यम्। न सर्वत्र शब्दः प्रमाणं, विप्रलम्भकवाक्यस्याप्रमाणस्यापि दर्शनात्। किन्तु यत्र प्रमाणान्तरेणार्थमवधाय शब्दः प्रयुज्यते, तत्र प्रमाणम्, अन्यथा तु नेति नियमः। ततश्च प्रकृते प्रत्यक्षादि प्रमाणसम्वादविरहेण कथं चोदनायाः प्रामाण्य-

मित्यभिप्रायेण शङ्कते-ननु **अतथाभूतमिति**। न च सम्भवद्वक्तृदोषेण लौकिकवाक्येन नित्यनिर्दोषस्यापौरुषेयस्य वेदवाक्यस्य साधर्म्यापादनमयुक्तमिति वाच्यम्, नास्तिकैरपौरुषेयत्वानभ्युपगमात्। तन्मते चोदनाया अपि पौरुषेयतया लोकवाक्यवद् वेदवाक्यानामपि अतीन्द्रियार्थे न प्रामाण्यमिति।

अपि च वक्तृप्रत्ययाधीनं शब्दस्य प्रामाण्यं, वेदस्य नित्यत्वे तु वक्तुरभावात् स्वरसतएवाप्रामाण्यं प्रसज्जते। शब्दान्तरप्रामाण्यस्य वक्तृप्रत्ययाधीनत्वेऽपि वेदस्य स्वत एव प्रामाण्यमिति तु अश्रद्धेयम्, प्रमाणान्तरप्राप्तार्थबोधकस्वभावस्यैव वाचां सर्वत्र दर्शनात्। अनुभवप्राप्तार्थबोधकस्मृतिवत् प्रमाणान्तरप्राप्तार्थबोधकवाक्यानामपि न स्वतः प्रामाण्यमित्येव युज्यते, लोकमर्यादानुसारात्। तदतिक्रमणे परीक्षकाणामश्रद्धेयत्वापत्तिरिति भावः।

ननु न प्रमाणान्तरप्राप्तार्थप्रापकवाक्यानामेव प्रामाण्यमिति नियमः, श्रोतृवर्गादृष्टपूर्वाभिनवागतपुरुषोदीरितवैदेशिकविचित्रार्थवाचां लोके प्रामाण्यदर्शनादिति चेत्? न। वक्तुराप्तत्वनिश्चये तत्र तदीयानुभवकल्पनयैव प्रामाण्याभ्युपगमात्। यत्र तु स्वस्य वक्तुर्वा अनुभवो नावधार्यते, तदर्थकं वाक्यं न प्रमाणमिति लोकानुसाराद्वेदेऽपि तथैव युक्तम्। अथ वेदादतीन्द्रियार्थेऽपि ज्ञानोत्पाददर्शनात्तदुत्पादहेतुत्वरूपं प्रामाण्यं तत्राक्षतमिति कथं तदप्रामाण्यमिति चेत्? न। तथाविधप्रामाण्याङ्गीकारेऽर्थसत्त्वानपेक्षयाज्ञानजनकस्यासदर्थकवाक्यस्यापि प्रामाण्यापत्तेः। तस्मात् स्वतन्त्रज्ञानजनकं वाक्यं प्रतिज्ञावाक्यवन्न प्रमाणम्। वेदो न प्रमाणं, स्वतन्त्रज्ञानहेतुत्वात्, प्रतिज्ञावाक्यवत्। प्रमाणान्तराप्राप्तार्थबोधकं वाक्यं न प्रमाणं, प्रमाणान्तरागृहीतार्थकत्वादीदृशार्थबोधकबुद्धवाक्यवत्। वेदो न प्रमाणं नित्यत्वादाकाशवदित्यादयः प्रयोगा अत्र बोध्याः। न च तन्मते वेदनित्यत्वानङ्गीकारान्नेदृशप्रयोगः वेदनित्यत्ववादिनां हेतुप्रसिद्ध्या प्रसङ्गापादनसम्भवान्नान्यतरहेत्वसिद्धिर्दोषः। एवं प्रयोगान्तराणि बोध्यानि।

**विप्रतिषिद्धमिदमिति** भाष्यम्। एतदाक्षेपसमाधानाय पूर्वमेतत् चिन्तनीयम् किं प्रामाण्यविचारः ज्ञानस्य प्रामाण्यं, अप्रामाण्यं च स्वत एव, किं वा कारणगुणदोषावधारणादुभयं परतः, अथवा अप्रामाण्यं स्वतः, प्रामाण्यं परतः किं वा प्रामाण्यं स्वतः, अप्रामाण्यं च परतो निर्णीयते इति। तत्र ज्ञानस्य प्रामाण्याप्रामाण्यजननस्वभावाभावे परसन्निधिसहस्रेणापि

ततस्तदुत्पादासम्भवादुभयं परत इति केचित् अनभ्यासदशोत्पन्नज्ञाने स्वतः प्रामाण्याप्रामाण्योभयानवधारणदर्शनात् । कारणगुणदोषाहितज्ञानगतगुण-दोषाभ्यां परत इति परे । तत्र मिथो विरुद्धतदुभयजननस्वभावस्यैकत्र ज्ञाने स्वाभाविकत्वाभ्युपगमे ज्ञानोत्पत्तिवेलायामेवान्यतरावधारणापत्तिः, अतस्त-दुभयं स्वत इति पक्षोऽसंगतः । एवं कारणगुणदोषदर्शनात् पूर्वमुत्पन्नेन ज्ञानेनार्थापरिच्छेदे तस्य निस्स्वभावत्वापत्त्या तदवधारणस्यावश्यकतया तदुभयं परत इत्यपि पक्षोऽसंगत एव । अपि च कारणगुणदोषाभ्यां प्रामाण्या-प्रामाण्ययोरुत्पादाभ्युपगमे गुणदोषोभयरहिताच्चक्षुरादेरुत्पन्ने ज्ञाने तदुभयो-रुत्पादासम्भवेन तस्य निःस्वभावत्वप्रसङ्गादिति ।

ज्ञानं हि द्विविधं प्रमाणं वास्यादप्रमाणं वा । कोटिद्वयभिन्नं ज्ञानं तु न किमपि सम्भवति । न च मिथो विरोधात् तदुभयजननस्वभावो माभूदेकत्र ज्ञाने, ज्ञानव्यक्तिभेदेन तदुभयस्वीकारे तु न विरोध इति वाच्यम् । तदु-भयावच्छेदकज्ञानत्वातिरिक्तधर्मस्य तत्रानुपलम्भात् ज्ञानत्वस्यैव तदुभयाव-च्छेदकत्वकल्पनायान्तु एकस्यामेव ज्ञानव्यक्तौ अवच्छेदकानुरोधादवच्छेद्य-द्वयप्रसक्तौ विरोधः स्फुट एवेति तदुभयस्थितये ज्ञानव्यक्तिभेदाश्रयणेऽपि तत्परिचायकचिह्नान्तराभावात्, ज्ञानत्वस्य चाविशेषात् न तयोर्विवेक इति अप्रामाण्यं स्वतः प्रामाण्यं परत इति केचित्समर्थयन्ते । प्रामाण्याभावरूपस्या-प्रामाण्यस्यावस्तुत्वान्न दोषजन्यत्वसम्भव इति । तत्स्वतः, प्रामाण्यस्य तु वस्तुत्वात्कारणगुणजन्यत्वमिति कारणगुणजन्यत्वनिर्णयादेव तन्निर्णय इति तत्परतः । अत एव रजतारजतोभयनिबन्धनरजतज्ञानप्रामाण्यं यथार्थत्वलक्षणं गुणादि ज्ञानेनावधार्यते अन्यथा स्वप्नादिज्ञानानामपि स्वतः प्रामाण्यं स्यात् । न च तेषामपि तावदुत्सर्गतः स्वतः प्राप्तमेव प्रामाण्यं, किन्तु दोषज्ञाननिबन्धना-प्रामाण्येनापनोदः क्रियते इति वाच्यम् । तस्यावस्तुत्वेन दोषनिबन्धनत्वा-भावात् । न चाप्रामाण्यस्य स्वाभाविकत्वे प्रमाणज्ञानेऽपि तत् स्यात् । ज्ञानस्वभावस्य तत्रापि सत्वात् अन्यथा ज्ञानमेव तन्न स्यादिति वाच्यम्, स्वाभाविकत्वेन तत्र तत्प्रसक्तावपि कारणगतगुणज्ञानाधीनप्रामाण्येनापनो दाभ्युपगमात् । यत्र तु कारणगतगुणज्ञानं नास्ति । यथा विभ्रमादौ तत्रा-प्रामाण्यं स्वत एवेति नावस्तुनः कारणत्वमिति । तथा च शुक्तिरजतादि-विभ्रमे इन्द्रियस्य सत्वे पि दोषादेव गुणाभावः । स्वप्नविभ्रमे तु इन्द्रियाद्य-

भावादेव तद्गुणविरह इति, तत्र तदपनोदाभावात्स्वतस्तत् शुक्ति-रजतादि विभ्रमेषु दोषैर्गुणापहरणान्मिथ्यात्वनिर्णय इति, मीमांसकानां भ्रमो दोषैर्मिथ्यात्वधीरिति । वस्तुतस्तु अप्रामाण्यापनोदकप्रामाण्यकारणीभूतगुणानां दोषैरपाकरणात्प्रामाण्यानुत्पत्त्या अपनोदकाभावेन स्वतोजायमानमप्रामाण्यं ज्ञायत इति । एवं च परतः प्रामाण्यमिति पक्षे वेदस्यापौरुषेयत्वे वक्तुरभावात्तदीयप्रकृतवाक्यार्थयथार्थज्ञानादिरूपगुणजन्यत्वासम्भवादप्रामाण्यं, पौरुषेयत्वेऽपि पुरुषस्यातीन्द्रियार्थे बुद्ध्यसम्भवात्सुतरामप्रामाण्यम् । एवं स्वतोद्वयमित्यत्रापि तयोः सांकर्यमित्यप्रामाण्यम् परतो द्वयमित्यत्रापि गुणाभावादे-वा प्रामाण्यम्, परतो द्वयमित्यत्रापि गुणाभावादेवाप्रामाण्यमिति पूर्वपक्षसंक्षेपः ।

अथ समाधानम् । स्वतः स्वविषयावधारणसामर्थ्यं ज्ञानस्य यदि नाङ्गीक्रियेत, तदाऽन्येनतत्संपादनासम्भवान् कदाचित् क्वचित् कस्यचिदर्थस्यावधारणं न स्यादिति सर्वस्य जगत आन्ध्यमेव प्रसज्येत । यदपि गुणजन्यत्वावधारणात् परत इति । तदपि च न साधुः, गुणानां निर्वक्तुमशक्यत्वात् । तथा हि-के पुनर्गुणाः ? नहि चक्षुरादिषु प्रामाण्यौपयिकाः केचन गुणाः चक्षुरादीनामतीन्द्रियत्वेन तद्गुणोपलब्धेरशक्यत्वाद् च । वैमल्यादिकं तु दोषाभावान्नातिरिच्यते, तदधीनं प्रामाण्यं तु वेदेऽपिसम्भवतीति नात्रास्माकं प्रद्वेषः ।

गुणावधारणादेव प्रामाण्यधीरिति कथमवगतम् । ज्ञानस्य विषययथार्थत्वं गुणनिमित्तम्, अतः कारणभूतगुणज्ञानेन तदवगम्यत इति चेत्, न। यथार्थत्वस्य गुणनिमित्तत्वानभ्युपगमात् । अत एव दुष्टेन्द्रियजन्यस्यापि पीतः शङ्ख इति ज्ञानस्य शङ्खांशे प्रमात्वमुपपद्यते । तथा च स्वकारणतो यथार्थत्वं दोषाच्चायथार्थत्वमित्येकस्मिन्नेव पीतः शङ्ख इति ज्ञाने विषयभेदेन प्रमात्वाप्रमात्वयोः स्थितिः ।

किंच घटादिकार्यजातं स्वोत्पत्तये स्वकारणं दण्डाद्यपेक्षते, न तु जलाहरणादिके कार्ये, स्वकारणमपेक्षते एवं प्रामाण्यं स्वोत्पत्तये स्वकारणं गुणाद्यपेक्षतां नाम, स्वार्थप्रकाशनरूपकार्ये तु तदनपेक्षमेव ।

किंच ज्ञानं स्वविषयप्रकाशनाय स्वकारणगतगुणमपेक्षेत तदाऽनवस्थया स्वविपयपरिच्छेद एव न स्यात् । तथाहि स्वकारणगतगुणाव-

धारणं ज्ञानान्तरेण वाच्यम्, तदपि ज्ञानं स्वविषयीभूतगुणप्रकाशनाय स्वकारणगुणावधारणमपेक्षते, तदपि गुणावधारणं ज्ञानान्तरेणेतिरीत्यानवस्था स्यादिति ।

प्रमाण्यं चेदस्ति स्वत एव वाच्यमिति । ननु स्वतः प्रामाण्यपक्षेऽपि भ्नवस्था तदवस्थैव । यत्र ज्ञाने प्रामाण्यापवादकदोषज्ञानं नास्ति, तत्रैव ज्ञाने प्रामाण्याङ्गीकारात् । यत्र तु तदपवादकदोषादिज्ञानम्, तत्र तदनभ्युपगमात् ।

तस्माद्बोधात्मकत्वेन प्राप्ताबुद्धेः प्रमाणता ।
अर्थान्यथात्व हेतूत्थ दोषज्ञानांदपोद्यते ।। श्लोक वा० ५३ ।

इत्युक्तेः । ततश्च दोषाभावज्ञानं स्वविषयपरिच्छेदाय तत्र दोषाभाव ज्ञानान्तरमपेक्षते एवं तदपि तदपीति इति चेत् ? मैवम् । दोषज्ञानाभावादेव तदपनोदाभावस्वीकारात् । दोषज्ञानं हि तदपनोदकं, तदभावस्तु अनपनोदक इति भावः । यत्तु अप्रामाण्यस्य व्यतिरेकरूपतयाऽवस्तुत्वात् न दोषजन्यत्वमिति, न तत् ततोवसेयमिति । तन्न । अप्रामाण्यस्य भावरूपत्वात् अनवधारणात्मकस्य संशयस्य, अतद्वति तत्प्रकारकस्य विपर्ययस्य च ज्ञानस्वरूपतया वस्तुत्वेन दोषजन्यत्वे बाधकाभावात् । तथा चायथार्थत्वस्य दोषजन्यतया दुष्टकारण जन्यज्ञानस्यायथार्थत्वमेवेति, न संशयादेर्यथार्थत्वम् । यच्चाज्ञानरूपमप्रमाण्यं, तत्तु न ज्ञानकारणजमिति न तत्रदोषव्यापारापेक्षा ।

ननु यथा प्रामाण्यस्य गुणजन्यत्वेऽनवस्था,—तथा अप्रामाण्यस्य दोषजन्यत्वाभ्युपगमेऽपि अनवस्था स्यादिति चेत् ? न । सजातीयपरम्परापेक्षायामनवस्थास्वीकारात् । यथा प्रमाणज्ञानं स्वसजातीयप्रमाणज्ञानान्तरमपेक्षते, एवमप्रमाणज्ञानमपि सजातीयमप्रमाणज्ञानान्तरमपेक्षते, स्यादेवानवस्था । तदिह प्रमाणज्ञानविषयीभूतार्थान्यथात्वदोषज्ञानाधीनमप्रमाण्यं, प्रामाण्यन्तु स्वत इति नानवस्था । यत्रैकस्मिन् विषये शुक्तिशकलादौ पूर्वमिदंरजतमिति ज्ञानमुत्पन्नं, तत्रैवपुनर्नेदरजतमिति समीचीनं ज्ञानमुत्पन्नं, तत्र नेदं रजतमिति स्वतः प्रमाणेन ज्ञानेन पूर्वस्मिन्निदं रजतमिति विपर्ययज्ञाने अर्थान्यथात्वरूपाऽप्रमाणता जातेतिनानवस्था । न चोत्तरज्ञानेन पूर्वस्मिन् ज्ञाने अप्रामाण्यं यथा, तथा पूर्वज्ञानेनोत्तरस्मिन्नेव ज्ञाने कुतो नाप्रमाणतेति वाच्यम् । यतो हि पूर्वं ज्ञानमुत्तरज्ञानमवाधित्वोत्पद्यते, पूर्वज्ञानोत्पत्ति-

वेलायामुत्तरज्ञानस्यासत्त्वेन तद्बाधस्य वक्तुमशक्यत्वात्, उत्तरज्ञानोत्पत्त्यनन्तरन्तु उदीचैव प्राचो बाधेनासत्त्वात् कथमुत्तरस्य बाधः । पूर्वस्मिन् ज्ञाने सत्येव तद्विपरीतार्थविषयकमुत्तरज्ञानं जायत इति तेन पूर्वबाधः सम्भवत्येव । पूर्वज्ञानबाधं विनोत्तरज्ञानस्योत्पत्यसम्भवात् स्वोत्पत्तिवेलायामेवोत्तरज्ञानेन पूर्वज्ञानेऽर्थान्यथात्त्वरूपाऽप्रमाणताबोधनाल्लाघवमिति ध्येयम् । तथा च पूर्वज्ञानविपरीतार्थग्राहकत्वेन समानविषयतयोत्तरज्ञानस्य पूर्वज्ञानबाधकत्वं शुक्तिरजतादिज्ञानप्रदर्शनेनाभिहितम् ।

क्वचिच्च पीतः शङ्ख इत्यादौ दोषज्ञानस्य समानविषयत्वाभावेऽपि कार्यैक्याद् बाधकत्त्वं क्रत्वर्थचमसः पुरुषार्थेन गोदोहनेनेव । यत्र तु बाधकज्ञाने सन्देहोऽवतरति, तत्र तृतीयज्ञानमवश्यमपेक्ष्यते इति नानवस्था । न चैवं सम्वादात्प्रामाण्यापत्तिः तृतीयज्ञानस्य द्वितीयज्ञानारोपितदोषोत्सारणमात्रप्रयोजनत्वात् । तृतीयज्ञानेन निरस्ते पूर्वज्ञानारोपितदोषे पूर्वज्ञानप्रामाण्यं यथा स्थितमेवेति न क्षतिः ।

यदा तु द्वितीयतृतीयज्ञानयोः सम्बादः, तदा प्रथमस्याप्रामाण्यमेव द्वितीयज्ञानप्रामाण्यमपि न तृतीयाधीनम् द्वितीयज्ञानशङ्कानिराकरणमात्र व्यापारापेक्षणात् । एव च सर्वेषां प्रमाणानां स्वतस्त्वमिति न्यायेन शब्दस्यापि प्रामाण्यं स्वत एवेति प्रदर्श्यते ।

अर्थबोधकत्वमेव शब्दस्य प्रमाणत्त्वम्, न च तदनाप्तवाक्येप्यस्तीति, तस्यापि प्रामाण्यं प्रसज्येतेति वाच्यम् । तत्र दोषेण प्रसक्तप्रामाण्यापनोदाभ्युपगमात् । वेदवाक्ये तु नेदृशाक्षेपः, तत्रदोषसम्भावनाविरहात्, शब्दसामर्थ्याद्दोषशङ्का न युक्ता । स्वतः शब्दे दोषाभावात् । वक्तृदोषेण हि शब्दो दुष्यति, नान्यथा । वेदे वक्तुरभावान्न दोषशङ्कालेशः इति तद्वाक्यस्य स्वतः प्रमाणता ।

ननु लौकिकवाक्ये वक्तृगुणान्वयव्यतिरेकानुविधायिनः प्रामाण्यस्य दर्शनाद् वैदिकवाक्येऽपि तत्कल्पनाया औचित्येनापौरुषेयत्वाभ्युपगमे तेषामप्रामाण्यमेव स्यादिति चेत् ? न । उभयत्र दोषाभावस्यैव प्रमाण्यं प्रति प्रयोजकत्वाभ्युपगमेन वेदप्रामाण्यसमर्थनसम्भवेन वक्तृगुणस्य तत्र प्रयोजकत्वकल्पनायां गौरवापत्तेः । न च दोषाभावस्य प्रामाण्यं प्रति प्रयीजकत्वा-

भ्युपगमेऽपि परतः प्रामाण्यमित्येवायातमिति वृथैव गुणानां तत्र प्रयोजकत्वनिरास इति वाच्यम् । दोषाणां प्रामाण्यापनोदकार्थान्यथात्वादिप्रयोजकतया तत्र दोषाः सन्ति तत्र तदपनोदकसत्त्वात् तन्निरासेऽपि दोषाभावे अपनोदकाभावादुत्सर्गतः प्राप्तप्रामाण्यस्यावस्थानात् दोषोत्सारणमात्रे दोषाभावव्यापारो न प्रामाण्ये इति न, तस्य परतस्त्वमिति भावः ।

एवमेव लौकिकवाक्येऽपि स्वत एव प्रामाण्यम्, न्यायस्योभयत्र समत्वात् । लौकिकवाक्ये गुणावधारणेन दोषाभावनिर्णयः, वैदिकवाक्ये तु निराश्रयत्वादिति न प्रामाण्यस्य परतस्त्वमिति । न च वैपरीत्यमेव किं न स्यादितिवाच्यम् । गुणज्ञानस्य प्रामाण्यप्रयोजकत्वे पूर्वोक्तरीत्यानवस्थापत्तेः । दोषाभावस्य तु दोषोत्सारणमात्रे व्यापार इति तन्निराकृता दोषाः स्वतः प्राप्तं प्रामाण्यं न निघ्नन्तीतिभावः ।

ननु आप्तवक्तृगुणावधारणेन लौकिकवाक्ये प्राभाण्यापवादाभावः शक्यनिर्णयः, वेदे तु वक्तुरभावेन तन्निर्णायासम्भवादप्रामाण्यमेव प्रसज्यते इति वाच्यम्, वक्तृदोषस्यैव शब्दे संक्रमणमित्यङ्गीकारेण वक्तुरभावे तद्द्वारा दोषसंक्रान्ते र्वक्तुमशक्यतया एव तन्निर्णयात् । एवं च वेदप्रामाण्यरक्षणार्थं नैयायिकानां कर्तृकल्पनाऽनुचिता, अन्यथा शाक्यादिग्रन्थवद् वेदस्यापि अप्रामाण्यं स्यात्, दोषस्थ तत्रेवाऽत्रापि सम्भवात् । निर्दोषपुरुषकल्पनाया उभयत्र साम्यात् । स्वतः प्रामाण्येऽपि लौकिकवाक्यस्य मूलान्तरापेक्षा, दोषाभावनिर्णयाय वेदेतु दोषसम्भावनाविरहान्न तन्मूलापेक्षा । मूलाभावो वैदिकवाक्ये गुण एव न दोषः, अन्यथानुवादत्वापत्तेः । यद्यपि लौकिकवाक्यानां संवादात् प्रमाणान्तरसंवादासम्भवेऽपि दोषाभावादेव प्रामाण्यमवगतं, तथापि अपौरुषेयवाचामतीन्द्रियार्थे प्रमाणान्तरसंवादासम्भवेऽपि दोषाभावादेव प्रामाण्यनिर्णयः ।

किंच संवादेन प्रामाण्यनिर्णयो न क्वचित् कर्तुं शक्यः, यत्रैकस्मिन् विषये समानमनेकं ज्ञानं जायते तत्र न पूर्वज्ञाने प्रामाण्यमुत्तरग्राह्यम् उत्तरज्ञानाविषयत्वात् पूर्वज्ञानस्य विषयकृतविशेषाभावाच्च । तथापि उत्तरज्ञानग्राह्यत्वे विनिगमनाविरहेणोत्तरज्ञानग्राह्यं पूर्वज्ञानेन गृह्यत इत्यपि स्यात् । अपि चागृहीतप्रामाण्यकेनोत्तरज्ञानेन संवादासम्भवात्तदर्थं तत्रापि ज्ञानान्त-

रापेक्षायामनवस्था स्फुटैव । अन्ततः क्वचित्स्वतःप्रामाण्यग्रहे तु कल्पना-लाघवाय प्रथमज्ञाने एव तत्कल्प्यताम् ।

अर्थक्रियाकारिज्ञानं संवाद इत्यपि न, अर्थक्रियाकारिज्ञाने तदसम्भवेन तत्रैव प्रामाण्याग्रहणे तेन पूर्वज्ञाने प्रामाण्यग्रहस्य वक्तुमशक्यत्वात् । प्रामा-ण्याग्राहकज्ञाने प्रामाण्यानवधारणात् असत्यपि विषये स्वप्नादौ अर्थक्रिया-दर्शनेन तत्राप्यनाश्वासात् । अपि च प्रवृत्त्युत्तरभाविना अर्थक्रियाकारित्व-ज्ञाने पश्चात् प्रवर्त्तकज्ञानस्य प्रामाण्यावधारणं कृतोद्वाहस्य लग्नपरीक्षण-मिव निरर्थकम् । श्रोत्रादिजन्यज्ञाने संवादाभावात् स्वत एव प्रामाण्य-मिति भावः ।

न चाप्ताऽप्रणीतागमस्य क्वचिदपिप्रामाण्यादर्शनेनैतादृशस्याम्नायस्य कथं प्रामाण्यमिति चेत् । सत्यं । प्रामाण्यस्यानुमानिकत्वे स्यादेवं, तत्तु न । तस्य स्वतस्त्वाभ्युपगमात्, अन्यथा तत्राप्यनुमानान्तरापेक्षायामनवस्था-पत्तेरिति ।

नन्वेवं प्रामाण्यस्योत्पत्तौ स्वतस्त्वोपपादनेऽपि ज्ञप्तौ तदसम्भवः । नहि ज्ञानमुत्पद्यमानमात्मानं गृह्णाति दूरे स्वधर्मतया प्रामाण्यग्रहणम् । न चागृ-हीतेन तेन तद्व्यवहारसिद्धिरिति चेत् न । आत्मतद्धर्मप्रामाण्यग्रहणं विनाप्यर्थं प्रकाशकतया सत्तामात्रेण कृतकार्यत्वाभ्युपगमात् । अवधृतविषयप्रामाण्यक-ज्ञानस्य प्रवर्तकत्वमिति प्रामाण्यापनोदकदोषादेरग्रहे अर्थे ज्ञानेन प्रकाशिते निःशङ्कं पुरुषः प्रवर्तत इति तस्य कृतकार्यत्वे पश्चात् प्रामाण्यजिज्ञण्सायां तत्रानुमानमवतार्य प्रामाण्यं निश्चीयते । तथा च वक्ष्यते भाष्ये **ज्ञाते त्वनु-मानादवगच्छति भा. पृ. ३२** । इति ।

अयं भाव ! । प्रामाण्यं द्विविधं विषयगतं, ज्ञानगतञ्च । तत्र ज्ञानगत प्रामाण्यग्रहणे अस्तु नाम ज्ञानग्रहणापेक्षा, धर्मिणं विना तन्निष्ठतया धर्म-ग्रहणासंभावात् । विषयगतमर्थं तथास्वरूपप्रामाण्यं ज्ञानग्रहणं विनापि सुग्रहम् । तत एव ज्ञाने प्रामाण्यव्यवहारः ईदृशं च प्रामाण्यमज्ञातेनापि ज्ञानेन गृह्यते इति; तस्य स्वतस्त्वम् ।। एवं प्रामाण्यन्तु न स्वतः, अप्रमा-णज्ञानन्तु न स्वकीयाप्रामाण्यं स्वयं ज्ञापयितुमर्हति, शुक्तिशकलादाविदं रजतमितिजायमानं ज्ञानं रजतमिदमित्येवग्राहयति, न पुनर्नेदंरजतमिति ।

तेनाप्रमाणज्ञानमसत्प्रामाण्यं गृह्णाति, तत एव च पुरुषं प्रवर्तयति ततोऽस्य-मिथ्यात्वनिर्णयाय परापेक्षास्त्येवेति ।

न चैवं वेदस्यापि स्वतः प्रामाण्यं न स्यात् तत्रापि पूर्वोक्तानुमानस्य वाधकस्य दर्शनादिति वाच्यम् । अर्थान्यथात्वदोषज्ञानस्यैव तद्बाधकत्वाङ्गीकारेणानुमानस्य तद्बाधकत्वात् । आगमविरुद्धत्वादनुमानं न तं बाधितुमुत्सहते । मिथ्यात्वादनुमानस्य बाध्यत्वमिति तु न आगमस्य मिथ्यात्वे अनुमानस्य वाधकत्वम्, अनुमानबाध्यत्वे च तस्य मिथ्यात्वमित्यन्योन्याश्रयात् । न चागमार्थस्य यथानुमानातिरिक्तं बाधकं नास्ति, एवमागमातिरिक्तं तदर्थसाधकमपिनास्तीति वाधवत्तदर्थसिद्धिरपि स्यादिति वाच्यम् । नरशिरः कपालं शुचीत्यनुमानवदागमविरोध्यनुमानानवतारात् आगमार्थसंवादकप्रमाणाभावान्न तदर्थसिद्धिरिति न किंचिदेतत् । चक्षुराद्यगृहीतस्यापि गन्धस्य घ्राणग्राह्यत्वेनाङ्गीकारात् । अस्मन्मते वेदस्य प्रमाणभावोऽसिद्ध इति न सत् तेनानुमानोदयबाध इति तु न सत्, अस्मन्मते तस्य सिद्धप्रमाणत्वात् । न तव तादृशमनुमानमस्मदादीनां तादृशार्थबोधनाय प्रभवति मदीयागमविरुद्धत्वात् । न च त्वदर्थं तवानुमानं, परार्थत्वात्पदप्रयोगस्य, न च वेदवाक्यात्तव शाब्दवोधो न जायत इति वक्तुं शक्यते । ततोऽसन्दिग्धवोधदर्शनात् । न चैवं शाक्यादिवाक्यतोऽपि शाब्दवोधदर्शनात् तेषामपि प्रामाण्यं स्यादिति वाच्यम् । इन्द्रियाणामतीन्द्रियपदार्थग्रहणे सामर्थ्याभावाद् । विप्रलिप्सादिदोषसम्भवाच्च पौरुषेयवाक्यानां न तादृशार्थे प्रामाण्यम्, अपौरुषेयवेदवाचामतादृशदोषसम्भावनाविरहेणापवादाभावात् प्रामाण्यमित्यङ्गीकारात् । कल्पनागौरवभयाद् वेदप्रामाण्यरक्षायै न कर्तृकल्पना, नापि महाजनपरिग्रह इति न मीमांसकानां क्वचिददृष्टकल्पना ।

तदेवं नित्यनिर्दोषापौरुषेयवाक्येन सर्वेषामसन्दिग्धाविपर्यस्तशाब्दबोधदर्शनात्तत्प्रामाण्यमविशङ्कमेव अप्रामाण्यकारणीभूत संशयादेरत्रादर्शनात् तदेतत् न चाग्निहोत्रं जुहुयादित्यादिना, न वेत्यादिना च भाष्येण निराक्रियते इति ।

संक्षेपेणायं भाष्यार्थः । यत्र धर्मे वादिनां बहुधा विप्रतिपत्तयः, स धर्मश्चोदनालक्षणः-चोदनैवलक्षणं, सा च लक्षणमेवेति श्रुत्यर्थाभ्यां को

धर्मः कथं लक्षणम्, इत्येतद्रूपमेकेन 'चोदनालक्षणोऽर्थो धर्मं' इति सूत्रेण सूत्रकृता व्याख्यातम्। तत्र सूत्रघटकचोदनापदार्थं भाष्यकारो व्याचष्टे चोदनेति। चुदप्रेरणे इत्यस्मात् णिजन्तात् 'ण्यासश्रन्थो युच् (३-३-१०७) ति युच् प्रत्ययेन चोदयतीति व्युत्पत्त्या चोदनापदनिष्पत्तिः। तथा च प्रेरणापरपर्य्यायः चोदनाशब्दः। चोदनापदं यद्यपि विधिवाचकत्वेनान्यत्र प्रसिद्धं, तथापि तावन्मात्रस्य प्रयोगायोगात्तद् घटितस्य पदस्य प्रयोगेऽपि तस्य प्रवर्तकत्वायोगाल्लक्षणया प्रवर्तकवाक्यं चोदनापदेनाभिधीयते। चोदनापदस्य तत्र निरुढलक्षणां दर्शयितुमाह **आचार्यचोदितः करोमीति वदन्ति दृश्यते** भा० पृ० १२ इति। तथा च तत्र तत्पदस्य स्वारसिकप्रयोगदर्शनान्नाप्रसिद्धार्थलक्षणापि इति नापूर्वार्थकल्पनया प्रसिद्धार्थकपदपरिग्रहप्रतिज्ञाभङ्ग इति बोध्यम्।

क्रमप्राप्तं लक्षणपदार्थं निरूपयितुं तद्व्याचष्टे**लक्ष्यते येनेति**। तथा च करणव्युत्पत्त्या लक्षणपदं प्रमितिकारणं तद्विशेषोभयपरम्, कारणविशेषश्च प्रकृते प्रमाणमेवेति चोदनालक्षणं यस्य, स चोदनालक्षणश्चोदनाप्रमाणक इत्यर्थः सम्पद्यते। एवं च यदा शब्दः प्रमाणं, तदर्थाधिगमश्च प्रमेयः, तदा चो दनालक्षणयोः सामानाधिकरण्यम् उभयोः शब्दपरत्वात्।

एवं लक्षणपदं यदा निमित्तमात्रपरं, तदापि तयोः सामानाधिकरण्यमुपपद्यते। यदा च वाक्यार्थावगमस्य प्रमाणत्वं हानोपादानादिबुद्धीनां फलत्वं, तदा चोदनापदस्य तत्र लक्षणां कृत्वा सामानाधिकरण्यमुन्नेयम्। चोदनापदस्य मुख्यवृत्त्या शब्दपरत्वादितिभावः। वह्निज्ञानजनकज्ञान विषयत्वाद्धूमस्य लक्षणत्वं धूमज्ञानजन्यज्ञानविषयत्वाद् वह्नेर्लक्ष्यत्वमित्यभिप्रायेणाह धूमोलक्षणमिति।

यद्वा वह्निपदं तज्ज्ञानपरं धूमपदमपिलक्षणया ज्ञानपरं तथा च वह्निविषयकानुमितिजनकं धूमविषयकं ज्ञानमिति प्रमाणार्थकलक्षणग्रहणसंगतिः लक्षणां विनापि ज्ञायमानस्य हेतोरनुमापकत्वमित्यभिप्रायेण प्रमाणार्थक लक्षणग्रहणसंगतिरिति केचित्।

शब्दस्यातीन्द्रियस्यार्थे सामर्थ्यं प्रदर्शयितुमाह—**चोदनाहीति**। भूतम्-अतीतम्, व्यवहितम्-कुडयादिभिरावृतं विप्रकृष्ट-देशकालासन्निहितं अर्थजातं

शब्दः बोधयितुं शक्नोति शब्दादेवेदृशार्थबोधो नान्यत इति ।

ननु 'नान्यत्' इत्युक्त्येन्द्रियस्यैव निरासः, न प्रमाणान्तरस्येति कथं चोदनैवेत्यवधारणमिति चेद् ? न । दृष्टान्तप्रदर्शनार्थत्वादिन्द्रियोपादानस्य । यथा तत्रेन्द्रियमसमर्थं तथा प्रमाणान्तरमपीतिभावः ।

अथवा तत्र नान्यत्प्रमाणं समर्थं कुतः ? इन्द्रियासामर्थ्यात् इन्द्रियपूर्वकत्वात्प्रमाणान्तरस्येन्द्रियनिवृत्तौ सुतरां तन्निवृत्तिः । तथा च किंशब्दः प्रश्नार्थकः पृथग्बोध्यः । च शब्दोऽपि हेत्वर्थकः पृथगेवेतिभावः ।

नन्वेवमतीन्द्रियार्थे लौकिकवाक्यवद् वैदिकवाक्यस्यापि प्रामाण्यं न स्यादित्यभिप्रायेण शङ्कते **नन्वतथाभूतमिति** । अयं भावः-यत्र प्रमाणान्तरेणार्थं निश्चित्य लोकः शब्दं प्रयुङ्क्ते, तत्र स प्रमाणम् । यथा 'नद्यास्तीरे पञ्च फलानि सन्ति' इत्याप्तोक्तः । अन्यथा परप्रतारणाय यत्र तादृशं प्रयुङ्क्ते, तत्र स न प्रमाणमितिप्रमाणान्तरप्राप्तार्थबोधकशब्दस्य लोके प्रामाण्यदर्शनाद्वेदेपि तथा वाच्यमिति, नातीन्द्रियार्थे तत् प्रमाणमित्याशयः । यद्येप्येतत् सर्वं पूर्वमुक्तं, तथापि संक्षेपेण भाष्यार्थप्रदर्शनाय पुनरभिहितमिति नज्ञातपूर्वा पुनरुक्तिरितिध्येयम् ।

समाधानभाष्यम् **उच्यतेविप्रतिषिद्धमिति** । अयमभिप्रायः—

**भाष्यम्—विप्रतिसिद्धमिदमुच्यते ब्रवीति च वितथं चेति । ब्रवीति उच्यतेऽवबोधयति । बुद्धयमानस्य निमित्तं भवतीति । यस्मिंश्च निमित्तभूते सति अवबुद्ध्यते सोऽवबोधयति । यदि च चोदनायां सत्यामग्निहोत्रात् स्वर्गोभवतीति गम्यते । कथमुच्यते न तथा ब्रवीमीति । अथ न तथा ब्रवीति इति, कथमवुध्यते, असन्तमर्थंमवबुध्यते इति विप्रतिषिद्धम् । न च स्वर्गकामो यजेत इत्यर्थो वचनात्सन्दिग्धमवगम्यते भवति वा स्वर्गो न भवतीति । न च निश्चितमिदमवगम्यमानं मिथ्या स्यात् ।**

वाक्यस्य वितथत्वं प्रमाणान्तरसंवादाभावाद्वा वक्तृगुणजन्यत्वानवधारणाद्वा सन्दिग्धार्थबोधकत्वाद्वा विपरीतार्थबोधकत्वाद्वा अबोधकत्वाद्वोच्यते । तत्र तावन्न प्रथमः, प्रामाण्यस्य प्रमाणान्तरसम्वादाधीनत्वनिराकरणात् । नापि द्वितीयः, प्रमाणस्यान्वयव्यतिरेकाभ्यां दोषोत्सारणमात्रं प्रत्युपयोगित्वव्यवस्थापनेन प्रामाण्यं प्रति कारणत्वानभ्युपगमात् ।

नापि तृतीयचतुर्थौ, सन्देहविपर्ययोरनुपदं निराक्रियमाणत्वात् । तस्माद बोधकत्वमात्रमप्रामाण्यकारणमवशिष्यते इत्यभिप्रेत्येदमुच्यते—**विप्रतिसिद्ध-मिति** । उच्चार्यमाणः शब्दो यदि स्वार्थं बोधयति, न बोधयतीति मिथो विरुद्धमुच्यते इत्येतदेव स्फुटयति—**अवबोधयतीत्यादिना** । ब्रवीति—स्वार्थमवबोधयति—स्वार्थबोधस्य निमित्तं भवति, स्वार्थबोधनिमित्तस्यैव शब्दस्य तादृशार्थबोधं प्रत्यनिमित्तत्वमुच्यते इति विप्रतिषिद्धमिदम् । प्रमाणे विप्रतिषेधमुक्त्वा, प्रमेयेऽपि तद्दर्शयति चोदनायां सत्यामिति । 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इति वाक्येन अग्निहोत्रात्स्वर्गो भवति इति गम्यते । तत्कथमुच्यते नाग्निहोत्रात्स्वर्गो भवतीति ? यस्माद् वाक्याद् योऽर्थो न प्रतीयते, तत एव स प्रतीयते इति विप्रतिषिद्धमित्याह—**असन्तमर्थ-मिति** । ननु नाबोधकत्वनिमित्तं वितथत्वमुच्यते, येनैवं विप्रतिषेधः स्यात्, किन्तु सन्दिग्धार्थविषयकबोधनिमित्तकत्वप्रयुक्तम् । तथा च प्रमाणान्तर-संवादाभावात्तत्र संशयो जायते अग्निहोत्रात्स्वर्गो भवति वा नवेत्याशंक्य निराकरोति—**न चेत्यादिना** । सन्देहबोधकपदाभावात् शब्दस्य सांशयि-कत्वस्वभावानङ्गीकारात् सन्देहाभावप्रदर्शनायाभिलापेन तदाकारं स्पष्ट-यति—**भवति वेति** ।

न च सन्देहं विनास्य मिथ्यात्वमित्याह—**न चेति** । न च माभूत्सन्देहादस्य मिथ्यात्वं, विपर्यबोधकत्वात्तु मिथ्यास्यादित्याशङ्क्याह—**यो हि जनित्वेति** । यथा शुक्तिशकले जायमानमिदं रजतमितिज्ञानमुत्तर-भाविना नेदं रजतमिति ज्ञानेन बाध्यते, एवं वेदवाक्याज्जायमानं ज्ञानं केनचिद्विज्ञानेन बाध्येत, तदा मिथ्या स्यात् । किन्तु प्रकृते बाधकज्ञाना-भावादबाधितमेव तज्ज्ञानमिति कथमस्य मिथ्यात्वम् । मिथ्याज्ञानप्रसरस्थलं दर्शयति—कालान्तरे इति । कालान्तरे कूटकार्षापणादिप्रतीतौ, पुरुषान्तरे जाततैमिरिकद्विचन्द्रादिप्रतीतौ, अवस्थान्तरे पीतशङ्खादिप्रतिभासे, देशान्तरे शुक्तिरजतादिज्ञाने भवति बाधक प्रत्यय इति, ततः तेषां मिथ्यात्वम् । न चेदं क्वचिद्विपर्येतीत्याह **न चैवेति** । उपसंहरति–तस्मादिति ।

**भाष्यम्—योहि जनित्वा प्रध्वंसते नैतदेवमिति, स मिथ्याप्रत्ययः । नचैष कालान्तरे पुरुषान्तरे अवस्थान्तरे देशान्तरे वा विपर्य्येति तस्माद-**

**वितथः। यत्तु लौकिकिकं वचनम्, तच्चेत्प्रत्ययितात्पुरुषादिन्द्रियविषयं अवितथमेव तत्। अथाप्रत्ययितादनिन्द्रियविषयं वा तत् पुरुषबुद्धि प्रभवमप्रमाणम्। अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्।**

वैदिकवाक्यापेक्षया लौकिकवाक्ये वैषम्यं दर्शयति—**यत्त्विति**। अयं भावः। शब्दे तावत्स्वतो दोषो नास्ति, किन्तु पुरुषदोषसंक्रमात् शब्दो दुष्यति इति पुरुषस्यैवापराधो न शब्दस्येत्याह **तच्चेत्प्रत्ययितादिति**। तथा भूतमतथाभूतं वा यथा दृष्टार्थं यो वदति स प्रत्ययित इति। इन्द्रियविषयमित्यपि तस्यैव विशेषणम्। इन्द्रियमित्युपलक्षणं प्रमाणान्तरस्यापि, एवं चेन्द्रियविषयमित्यनेन प्रमाणान्तरमूलकमित्युच्यते। तथा च प्रमाणान्तरमूलकं यत्प्रत्ययितवाक्यं, तत् प्रमाणमेवेति तद्दृष्टान्तेनाम्नायाप्रामाण्यसाधनमसंगतं, दृष्टान्तस्य साध्यविकलत्वात्।

प्रत्ययितभिन्नः—अप्रत्ययितः, अनिन्द्रियविषयमित्यपि तस्यैव विशेषणं तथाचासम्भवत्प्रमाणान्तरमूलं यदप्रत्ययितवाक्यं तत्पुरुषदोषात्दुष्टमिति तेन नित्यनिर्दोपापौरुषेयवाक्यस्य नाप्रामाण्यं साधयितुं शक्यते दृष्टान्तासिद्धेरिति।

यत्तु यथावस्थितार्थदर्शित्वं, यथादृष्टार्थवादित्वमित्युभयं प्रत्ययित शब्देन गृह्यते, यथादृष्टार्थवादिन एव प्रत्ययितार्थत्वे शुक्तिशुकलं रजतं पश्यतस्तदनुसारेणेदं रजतमिति वदतोऽपि यथादृष्टार्थवादितया तदीयवाक्यस्यापि प्रामाण्यापत्तिः। एवं यथादर्शित एव वा तदर्थत्वे सत्यरजत ज्ञानवतो भ्रमादिदं रङ्गमिति प्रयुञ्जानस्य यथादर्शितया प्रत्ययितपदेन ग्रहणे रजतपरतदीयरङ्गवाक्यस्य च प्रामाण्यं स्यादिति, यथादर्शितं यथा वादित्वमित्युभयं प्रत्ययितपदेन गृह्यते। इन्द्रियविषयमिति तु नात्रविशेषणम्, किन्तु पृथगेव कोटिः, एवं चानाप्तवाक्यमतथाभूतमपि श्रोतुरिन्ि यविषयभूतमिति तत्प्रमाणमुच्यत इति व्यवस्थापितम्। तदसत्। उदाहरणप्रत्युदाहरणयोर्मिथो विरोधो न, ग्रन्थव्याघातात्। तथाहि भवन्मते यथादर्शित्वं यथावादित्वमित्युभयं सम्भूय प्रामाण्यकारणमिन्द्रियविषयमिति तु पृथगेव प्रामाण्यकारणम्। तथा चानयोरेकैकस्य प्रत्युदाहरणे मिथोविरोधः पूर्वस्य प्रत्युदाहरणमनाप्त वाक्यं, तत्रापि इन्द्रियविषयत्वेन प्रामाण्याङ्गी-

कारादिन्द्रियविषयमित्यस्योदाहरणमेतज्ज्ञातमित्यैकस्मिन्नेव वाक्ये व्याख्याभेदेन प्रामाण्याप्रामाण्ययोः स्वीकारात् । एवमिन्द्रियविषयमित्यस्य प्रत्युदाहरणमनिन्द्रियविषयमाप्तवाक्यं दृष्टसत्यवादित्वेन प्रमाणात्वेनोदाहृतं तदेवानिन्द्रियविषयत्वेनाप्रमाणत्वेनोदाह्रियते इति स्पष्ट उदाहरणप्रत्युदाहरणयोर्विरोध इति । किं च इन्द्रियविषयमित्यस्य यदि दृश्यमानार्थं विषयक बोधजनकं वाक्यमित्यर्थः स्वीक्रियते, तदा चानाप्तस्यापि न निखिलं वाक्यमप्रमाणं व्यवहारानुपपत्तेः, किन्तु यदैन्द्रियकार्थं, तत्प्रमाणम्, अन्यदप्रमाणमित्येवाभ्युपेयम् । तदा अनिन्द्रियविषयमित्यस्य श्रोतुरनुपलभ्यमानार्थविषयकं वाक्यमिति व्याख्येयं स्यात् । एवं च **अशक्यं हि पुरुषेण ज्ञातुम् ऋतेवचनाद**ि( भा. पृ. १५ )ति भाष्यं व्याकुप्येत, श्रोतृवर्गानुपलभ्यमानस्यापि वैदेशिकार्थजातस्य वक्त्रा ज्ञातुं शक्यत्वात् । नहि उपलभ्यमानमेवार्थं प्रतिपादयन् वक्ता कृतकार्यो भवति, अज्ञातार्थबोधकप्रयोजनकत्वाच्छब्दस्येतीन्द्रियविषयमनिन्द्रियविषयमित्येतदुभयं सम्भवत्प्रमाणमूलासम्भवत्प्रमाणमूलपरतयैव व्याख्येयम् । अत एवा**शक्यं** हि तदितिभाष्यं स्वरसतः संगच्छते । असम्भवत्प्रमाणान्तरमूलकं हि वचनं विना उपायान्तरेण ज्ञातुमशक्यमिति भावः ।

प्रत्ययः सञ्जातोऽस्येति प्रत्ययितः तदस्य संजातमि(५.२.३६)तीतजन्तः सत्यमिथ्योभयसाधारणज्ञानापरपर्यायः प्रत्यय इति नैतेन सत्यवादीगृह्यते किन्तु यथादृष्टार्थवाद्येवेति भावः । प्रत्ययितपदार्थे एवेन्द्रियविषयमित्यपि विशेषणमेवं चैतदुभयं सम्भूय प्रामाण्यलक्षणैक्यम् ।

ननु वाशब्दोपादानस्वारस्यात् पृथक् पृथगेव लक्षणं, न समुच्चितमिति वाच्यम् । निपातानामनेकार्थत्वेन प्रकृते समुच्चयार्थकस्यैव स्वीकारात् । अनिन्द्रियविषयं वेति प्रत्युदाहरणवाक्ये प्रत्ययितत्वेन्द्रियविषयत्वयोः सम्भूय कारणत्वेपि एकैकवैककल्येन प्रत्युदाहरणद्वये विकल्पस्यावश्यकत्वात् । तथा हि सत्यवादिनि अपि अशक्तिके यद्यस्य दर्शनशक्तिर्नास्ति, प्रत्यक्षाद्यभावात्तत्राप्यप्रामाण्यम् । एवं शक्येऽप्यर्थे मिथ्यावादिति पुरुषे अनाश्वासादेवाप्रामाण्यम् । न हि द्रष्टुमशक्येऽर्थे वचनं विनोपायान्तरेणाऽर्थाधिगतिः सम्भवति । तदाह **अशक्यं हि तत पुरुषेण ज्ञातुमृते वचनादिति ।**

यदि कश्चित् सर्वज्ञः स्यात्, तर्हि चोदनामन्तरेणापि धर्माधर्मौ-जानीयादिति, चोदनैव धर्मे प्रमाणमित्यवधारणमसंगतं स्यात्। अतः सर्वज्ञनिराकरणपरमिदम् भाष्यमिति केचित्। तन्न अशक्यं हि तदिति वाक्यघटकतदोऽतीन्द्रियार्थपरामर्शितया तत्रैव ज्ञानोत्पत्तेर्निराकार्यत्वात्, न सर्वत्राप्रस्तुतत्वात्।

किञ्च षड्भिः प्रमाणैः सर्वं जानानश्चोदनैव धर्मं जानीयादिति, तत्सिद्धौ न चोदनाप्रामाण्यावधारणप्रतिज्ञाभङ्गः इति नासौ निराकार्यः।

एकेनैव प्रमाणेन सर्वं पश्यन् सर्वज्ञो भवति इति कल्पना तु प्रतिज्ञा विरोधित्वादशक्यत्वाच्च निराकार्या। नहि चक्षुषा गन्धमजिघ्रन्नविकलकरणः कश्चन एवं कल्पयितुमर्हति प्रतिनियतविषयत्वात् प्रमाणानाम् इदानीमिव पुरापि करणानां स्वभावो नियत एवेति, न किञ्चिदेतत्।

एतेनैदानीन्तनपुरुषस्येदृशप्रत्यक्षासम्भवेऽपि प्राक्तनपुण्यकर्मणावतीर्ण-स्याप्रतिहतज्ञानशक्तेः पुरुषधौरेयस्य बुद्धादेर्दिव्यदृष्टिजनितः सर्वविषय-कोपलम्भः सम्भवतीति निरस्तम्। इदानीमिव पुरापि प्रमाणस्वभावविपर्या-सानङ्गीकारात्।

नन्विदानींमपि प्राणिभेदेन सातिशयम् प्रत्यक्षमुपलभ्यते। तथाहि आलोकोपकरणसहितमेवचक्षुरस्मदादिप्रत्यक्षं जनयति, मार्जारस्तु आलोक-सन्निकर्षं विनापि तमसि पदार्थान् पश्यति। सम्पातिनामा च गृध्रराजः योजनशतव्यवहितामपि दशरथनन्दनसुन्दरीं ददर्शेति श्रूयते रामायणे। सोऽयम् दर्शनातिशयः कुत्रचिन्निरतिशयमतिशयं गमयति, यत्र चास्य परः प्रकर्षः, ते योगिनः, दर्शनस्य च परोऽतिशयः सूक्ष्मव्यवहित विप्रकृष्टभूत-भविष्यदादिविषयत्वमिति योगिज्ञानस्य सर्वविषयकत्वं नानुपन्नमिति चेत् न ?

अतिशयस्य स्वविषये दर्शननाद्धर्मस्येन्द्रियाविषयत्वेन तत्र तदतिशय—कल्पनायां प्रमाणाभावात्। अन्यथा गन्धग्राहिणा घ्राणेन रूपस्यापि दर्शनं स्यात्। न चैतत् सम्भवति तेषामितरेन्द्रियनिर्माणवैयर्थ्यापत्तेः। न च रूपवतो घटादे र्नीरूपस्य रूपस्य स्थूलस्य केशादेश्च प्रत्यक्षदर्शनान्नप्रत्यक्षे विषयनियम इति धर्मविषयकत्वमस्य सम्भवतीति वाच्यम्। वर्तमानविषय-

कत्व नियमस्य प्रत्यक्षे स्वीकृतत्वेन भविष्यति धर्मे तत्प्रवृत्तेरयोगात् । इन्द्रियलिङ्गादयः षडेव ज्ञानहेतवः, तत्रेन्द्रियस्य वर्तमानमात्रविषयतया तदुत्पन्नज्ञानस्यापि तन्मात्रविषयकत्वं, न भविष्यद्धर्मविषयकत्वं नतरां-सर्वविषयकत्वमिति । एवं लिङ्गाधीनानुमानादेरपि न धर्मविषयकत्वं धर्म-स्यालौकिकत्वेन तत्र लिङ्गग्रहणासम्भवादत एव नैषां सर्वविषयकत्वमपि सर्वत्र लिङ्गादेरसम्भवात् असर्वज्ञस्य परिचयासम्भवाच्च ।

ननु यथा शाक्यैर्बुद्धस्य सर्वज्ञत्वं कल्प्यते, तथा मीमांसकै र्वेदस्यापौरुष-यत्वं कल्प्यते इति द्वयोः कल्पनाया निष्प्रमाणकत्वात् सर्वज्ञत्वकल्पनायां कः प्रद्वेषो भवताम् । न खलु कश्चित् प्रद्वेषः । किन्तु सर्वज्ञत्वकल्पनायान्न किञ्चित्प्रमाणं पश्यामः प्रत्यक्षस्य वर्तमानमात्रग्राहितयाऽतीते तदसम्भवात् । सम्भवे तु विप्रतिपत्तिरेव न स्यात् लिङ्गादेरभावान्नानुमानादिप्रसङ्गः प्रत्युत विपरीतमेवानुमानं सम्मवति । अतीतः कालः सर्वज्ञत्त्वाभाववान् कालत्वादेतत् कालवत् । बुद्धो न सर्वज्ञः पुरुषत्वात् अस्मादादिवत् ।

अन्योन्याश्रयाच्चागमोऽपि न तत्र प्रामाण्यं समश्नुते, तस्य सर्वज्ञत्वे तदीयागमप्रामाण्यं तदीयागप्रामाण्ये च तस्य सर्वज्ञत्वम् । पुरुषान्तरप्रणीतागम-वशेन तत्सिद्धिस्तु न तत्र मूलप्रमाणाभावेन तादृशागमानां सुतराम-प्रमाणात्वात् । नित्यागमस्य च भवद्भिरनङ्गीकारात् सर्वज्ञः सर्वविदित्याद्या-गमस्तु अर्थवादः । शरीरिपुरुषप्रतिपादने तदनित्यत्वप्रसङ्गात् । नित्यागमा-भ्युपगमे तु तेनैवधर्मप्रतिपादनसम्भवान्न सर्वज्ञत्वकल्पना अर्थवतो ।

यत्तु कश्चिदाह माभूत् सर्वज्ञः, धर्मज्ञस्तु भविष्यति ।

तदुक्तं तैरेव

कीटसंख्यापरिज्ञानं । तस्य नः क्वोपयुज्यते ।
"दूरं पश्यतु मा वाऽसौ तत्त्वमिष्टं तु पश्यती(प्र. वा. )ति

प्रमाणमप्यनुमानम् । चैत्यवन्दनादिधर्मप्रतिपादकं बुद्धवाक्यं प्रमाणम् तद्वाक्यत्वात् सर्वक्षणिकमित्यादि वाक्यवतृ । दृष्टार्थे तदीयवाक्यप्रमाण्य दर्शनादतीन्द्रियार्थेऽपि तत् कल्पनमुचितमतएव वेदप्रामाण्यरिरक्षयिषया मन्त्रायुर्वेदप्रामाण्य वच्चतत्प्रामाण्यमाप्तप्रामाण्यादित्यभिहितंनैयायिकैरिति ।

तन्न । ऐन्द्रियकार्थे तद्वाक्यप्रामाण्यस्वीकारेपि अतीन्द्रियार्थे तत्कल्पनायां प्रमाणाभावात् ।

सप्रतिसाधनत्वं च हेतोः बुद्धवाक्यमप्रमाणम् अप्रमाणमूलकत्वाच्चैत्यवन्दनवत् । बुद्धो न सर्वज्ञ इतिमद्वाक्यं प्रमाणं मद्वाक्यत्वाद् वह्निरुष्णइति मदीयवाक्यवत् इति । असर्वज्ञत्वं प्रमितं बुद्धवाक्ये साधयितुं शक्यं, सर्वज्ञत्वं तु न क्वापि केनचित् प्रमाणेन प्रमितमिति तन्न बुद्धवाक्ये साधयितुं शक्यं, साध्यचाप्रसिद्धेः । न चाहं सर्वज्ञ इति बुद्धोक्तौ प्रमाणम् उद्धतवादित्वापत्तेः । न चेदानीन्तन पुरुषस्य बुद्धः सर्वज्ञ इत्यविच्छिन्नस्मरणदर्शनात्तदुपपत्तये तदानीन्तनैः पुरुषैस्तत्प्रमितमिति कल्प्यत इति वाच्यम्, एतादृशस्मरणे प्रमाणाभावात् । प्रत्युत विपरीतस्मरणदर्शनात् इह वटे यक्ष इतिवन्निर्मूलस्मरणस्यापि सम्भवाच्च ।

अपि च बुद्धं सर्वज्ञं जानानोऽपि सर्वज्ञः स्यात्, अन्यथा तदीयज्ञानतद्विषयापरिज्ञाने स तं तथा तथं जानीयादित्यनेकसर्वज्ञताकल्पनापत्तिः असर्वज्ञस्यायं सर्वज्ञ इति ज्ञानासम्भवादिति न सर्वज्ञतायां प्रमाणं, नतरां च तदीयागमस्य प्रामाण्यम् । स्वयूथ्यद्वेषेण लाभपूजाख्यातिकामनया च शास्त्रप्रणयनं न वीतरागस्य बुद्धस्य शोभते, निर्व्यापारश्च न शक्नोति शास्त्राणि प्रणेतुमस्यामी अज्ञानसंशयाश्छेत्तव्याः, अयं सिद्धान्तो ग्राहयितव्य, इमे तदुपाया इति साध्य-साधन-फलानां यावद्विकल्पप्रत्ययो न भवेत्तावत्तदनुकूलवाक्यप्रयोगो न सम्भवति ।

न च निर्विकल्पप्रत्यक्षेण निखिलं जगदवलोकयतो बुद्धस्यैतादृश विकल्पसम्भवः बुद्धदेशनायास्तच्छिष्यप्रणीतत्वे सुतरामप्रामाण्यम्, तेषामसर्वज्ञत्वात् । न च तस्य सान्निध्याद् कुड्यादिभ्योपि देशनाः निस्सरन्ति शिष्येभ्यस्तन्निस्सरणे कानुपपत्तिरिति वाच्यम् । श्रद्धाजडं प्रत्येतादृशवाक्योपयोगसम्भवात् ।

किञ्च कुड्यादिभ्यस्तन्निस्सरणे सुतरामनाश्वासः । एतेन अनावृतज्योतिः पुरुषः स्मर्यते इति विनैवेन्द्रियं स्वत एव सर्वं जानाति शरीरेन्द्रियाद्यावृतस्तु इन्द्रियादिद्वारा किञ्चिदेव जानाति इति, विदेहस्य स्वाभाविकं सर्वत्रिषयकज्ञानमिति मतं निरस्तं, प्रमाणाभावात् । मुक्तागमस्यैव प्रमाणत्वे

अन्योन्याश्रयः । मुक्तस्यापि सर्वज्ञत्वे तदीयागमः प्रमाणं, तत्प्रमाणत्वे च मुक्तस्य सर्वज्ञत्वमिति, विदेहस्य शब्दोच्चारणौपयिकेन्द्रियार्थाद्यभावादागम-प्रणयनासम्भवः । शरीरिणस्त्वसर्वज्ञत्वान्न तत्प्रणीतागमे विश्वासः ।

इदानीं मुक्तः सर्वज्ञो यदि कश्चित् दृश्येत, तदा एतदनुसारेण पूर्वंतनोऽपि मन्तव्यः स्यात् । न चेदानीं तादृशः क्वचिदनुभूयते इति, किमनुसारेण तथा–कल्पनायै श्रद्धा स्यात् ।

यदपि च वेदविदेकदेशिमतम् एवमानुपूर्वीको वेदो नित्य एव नास्त्यस्य कश्चिज्जनयिता, किन्तु प्रजापतिरेव पूर्वमार्षेण प्रत्यक्षेणामुं ज्ञातवान् तदुपदेशाच्चान्येऽपि महर्षयोऽधिजग्मुरेनमिति, तदपि न शब्दोच्चारण-मन्तरा तदानुपूर्वीज्ञानस्येदानीमिव, पुराप्यसम्भवात् । अन्यथा इदानीं धर्मादिरप्रत्यक्षत्वेऽपि प्राक्काले तत्प्रत्यक्षत्वमपि कल्पनीयं स्यात् । एवमिदानीं कस्यचित्सर्वज्ञत्वाभावेऽपि प्राक्काले तत्कल्पनाप्रसक्तिः स्यादिति, दृष्टविरो-धात्सर्वज्ञादिनिरासवदयमपि पक्षो निराकर्तव्य एव, पुरुषदोषोपरागाद प्रामाण्यापत्तिरन्यथा स्यात् । तद्वचने विश्वासाभावाच्च । इदानीमिव पुरापि पुरुषाणां मिथ्यावादित्वसम्भवाच्च ।

किंचैवमस्यागमप्रतिभासः स्वप्नज्ञानवन्निर्हेतुको मिथ्या स्यात् । किंचेदानीन्तनपुरुषापेक्षया प्रजापतेरुच्चारणमन्तरा शब्दज्ञानं जातमित्य तिशयः कल्पनीयः स्यात् । तदनु आगमस्य नित्यतामुधैव कल्पिता । यदि तु प्रजापतेः स्मरणं कल्प्यते, तदानुभवं विना स्मरणानुत्पत्त्येदानीं तदभावाद-निमित्तं स्मरणं कल्पेत प्रलयपूर्वकालानुभवस्य चिरातीतत्वेन तेनाविकल-ग्रन्थराशेरविस्मरणासम्भवश्च । प्रजापतेरिव शाक्यादीनामपि ग्रहणसम्भवेन तन्निरासानौचित्यात्, धर्मस्यातीन्द्रियत्वात् शब्दस्य चैन्द्रियकत्वात् न तुल्यतेति ति चेत् ? न । अनुच्चारितशब्दस्याप्यतीन्द्रियत्वेन शाक्यादि साम्यात् पुरुष-सर्वज्ञत्वकल्पनायाम् अर्थप्रत्यायने पुरुषः स्वतन्त्रः स्यात् । अस्मिन् तु पक्षे न कस्यापि स्वातन्त्र्यम् शब्दस्यार्थप्रत्यायने पुरुषापेक्षा, पुरुषस्यापि शब्दस्य रूपपरतन्त्रतेन्युभयोरपि पारतन्त्र्यम् स्यात् ।

न च पूर्वपूर्वपुरुषानुसारेणोत्तरपुरुषाणां वेदाधिगम इति पारतन्त्र्यम् तवापीति वाच्यम् । एकपुरुषाधीनत्वे तेन तत्त्वतो दृष्टम् । अन्यथा वेति संश-

यसम्भवेन स्वतः प्रामाण्यहानिः स्यात् । अनेकपुरुषाधीनत्वे तादृशसंशयाभावान्न दोषः ।

किंच दीर्घकालान्तरितानेकदुरूहपदार्थस्मरणानुत्पत्त्या स्वयं कृत्वा विश्वासार्थमेवं वदति । स्मृतोऽयम् न मयाकृत इति शङ्कया तत्र प्रेक्षावतामपि विश्वासापत्तेः । अनेकपुरुषस्मरणाभ्युपगमे तु एकेन विकृतस्यापि परैर्यथा वदवधारणात् पारतन्त्र्यं निवर्तते । एकस्य प्रतिभानं तु कृतकादविशिष्टम् । एवं च वेदे नैकः सम्प्रदायप्रवर्तकः अपि तु वहव एव । ननु जैमिनीयानामपि अपौरुषेयत्वकल्पना निष्प्रमाणा प्रमाणविरुद्धा च, नहि, कस्यचिद् वाक्यस्यापौरुषेयत्वं लोके दृश्यते । तथा चोक्तम् भो भगवन्तः सभ्याः क्वेदं दृष्टम् क्व वा श्रुतम् । लोके यद्वाक्येषु पदानां रचना नैसर्गिकी भवति । यदि स्वाभाविकी वेदे पदानां रचना भवेत्, पटे हि हन्त तन्तूनां कथं नैसर्गिकी न सेति चेत् ? न । यतो यथेदानीन्तनाः पुरुषा न वेदस्य कर्तारः, किन्तु अध्येतारस्तथा प्राक्काले पि न केचन कर्तार इति, क्व दृष्टविरुद्धकल्पनाऽस्माकम् इति, चोदनैव धर्मे प्रमाणं नान्यदिति भावः ।

ननु वुद्धादेरतीन्द्रियार्थज्ञानाभावेऽपि वचनान्तरेण विज्ञाय चैत्यवन्दनादिधर्मदेशना स्यादित्याशङ्क्य निराकरोति भाष्ये अपरस्मादिति ।

**भाष्यम्—अपरस्मात्पौरुषेयात् वचनात्तदवगतमिति चेत् तदपि ते नैव तुल्यम्, नैवं जातीयकेषु अर्थेषु पुरुषवचनं प्रामाण्यमुपैति जात्यन्धानामिव वचनं रूपविषयेषु । नन्वविदुषामुपदेशो नावकल्प्यते । उपदिष्टवन्तश्च मन्वादयः, तस्मात् पुरुषात् सन्तो विदितवन्तश्च यथा चक्षुषा रूपमुपलभ्यत इति दर्शनादेवावगतम् ।**

यथा स्ववचनेनातीन्द्रियार्थोपदेशो न सम्भवति, तदर्थापरिज्ञानादेवं वचनान्तरमपि पौरुषेयम् नातीन्द्रियार्थे प्रमाणमिति, तेनाप्युपदेशो न प्रामाणिकः । यथा जन्मान्धस्योपायाभावात् रूपज्ञानं न सम्भवतीति तदुपदेशस्तदशक्य एवं पौरुषेयवाक्येन धर्मोपदेशो न शक्यसम्पादनः तदर्थज्ञानाभावात् । न च तेषामतीन्द्रियार्थज्ञाने किंचित्प्रमाणमस्तीतिभावः ।

ननु तदुपदेशान्यथानुपपत्तिरेव तत्र प्रमाणमित्यभिप्रायेण **नन्वविदुषामिति** । अयम्भावः यदि विदुषां मन्वादीनां धर्मविषयकमध्यक्षं न स्यात्

तर्हि तेषां धर्मविषयकोपदेशो न स्यात् । अस्ति च तेषां धर्मविषयकोपदेश इति, तदुपदेशान्यथानुपपत्तिरूपाऽर्थापत्तिरेव धर्मप्रत्यक्षे प्रमाणं तदनङ्गीकर्तृमते अनुमानम्प्रमाणम् । तथा हि—मनुर्धर्मदर्शी तदुपदेष्टृत्वात् यो यदुपदेशी स तद्दर्शी । यथा वैद्यः । तत्तद्रोगप्रशमकौषधस्य उपदेष्टा तथा चायं धर्मस्य तस्मात्तद्दर्शी । न हि रूपदर्शनासमर्थस्य रूपोपदेशः सम्भवति, रूपोपदेशदर्शनात्तु तस्य रूपदर्शनसामर्थ्यम् ततोऽर्थादापद्यते, अनुमीयते वा तस्माद्धर्मोपदेशात्तेषां तद्दर्शित्वमर्थापत्त्यानुमानेन वा निश्चीयते । न च विप्रलम्भकादिवाक्यवत् प्रेक्षावतां तदनुपादेयमेवाप्रमाणत्वादिति वाच्यम् महाजनपरिगृहीतत्वेन प्रामाण्याङ्गीकारादित्याह **तस्मादिति** । परिहारभाष्यम् उपदेशा इति ।

**भाष्यम् । उच्यते । उपदेशा हि व्यामोहादपि भवन्ति । असति व्यामोहे वेदादपि भवन्ति ।**

अयमभिप्रायः उपदेशो न विद्वत्तया व्याप्तः, परप्रतारणाय अजानतोप्युपदेशदर्शनात् । अत एवात्मख्यातिपूजालाभाय शाक्यग्रन्थे धर्मदेशनाव्याजेनानेकविध उपदेशः । तथा च नार्थापत्तिः, अन्यथाप्युपपत्तेः । तद्दर्शनं विनापि वालोन्मत्ततादिवदुपदेशः सम्भवति । अनुमानपक्षे विप्रलम्भकादिवाक्ये व्यभिचार इति भावः ।

नन्वेवं तर्हि स्मार्तधर्मवोधकमन्वादि वाक्यानामपि प्रामाण्यं न स्यादित्याशङ्क्याह—**असति व्यामोह इति** । अयमभिप्रायः—स्मार्तधर्मोपदेशस्य मूलभूतं तदीयं प्रत्यक्षं न सम्भवति धर्मस्यातीन्द्रियत्वात् किन्तु वैदिकवचनं तन्मूलं वेदादेवाधिगम्य लोकोपकाराय महर्षयो मन्वादयो धर्ममुपदिष्टवन्त इति वेदमूलकत्वात्तेषामुपदेशः प्रामाणिकः ।

येषां स्मार्तधर्माणां मूलभूताः श्रुतयः इदानीं नोपलभ्यन्ते, तत्र मतभेदो वहुविदाम् ।

**ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्**इ(कु० २-३)त्युक्त दिशा बुद्धिमान्द्यादालस्यादिदोषाच्चाध्येतृणामभावात् ताः श्रुतय उच्छिन्ना इदानीं नोपलभ्यन्ते । स्मार्तधर्मस्य प्रवर्तका मनुप्रभृतयो महर्षयः अनेकविधासु शाखासु अवश्यानुष्ठेयान् धर्मान् अवलोक्य साध्यसाधनेतिकर्तव्यता

निरूपणपुरःसरमनायासेनैकत्र बोधाय स्मृतावुपनिबबन्धुः। ततः 'अक्के चेन्मधु विन्देते' तिन्यायेनाल्पपरिश्रमसाध्यस्मार्तग्रन्थाध्ययने विद्वान्सः प्रावर्तिषत इति, तन्मूलभूताः श्रुतयोऽध्येतुरपराधादुच्छिन्ना इति केचित्।

अन्ये तु शाखाच्छेदे दृढतरप्रमाणाभावात् स्मार्तधर्ममूलभूताः श्रुतयो नित्यानुमेया एव। अत एव स्तुतिनिन्दार्थवादै र्मूलभूतश्रुतिकल्पनं साधु सङ्गच्छते इत्याहुः।

प्रकाशादौ पराक्रम्येदमभिहितमिति तत्रैव द्रष्टव्यम् विस्तरभीतेरेतदर्थनिरूपणाय न प्रायतिषि। बौद्धादिवाक्यानां प्रत्यक्षश्रुतिविरुद्धत्वान्नतैर्मूलभूतवेदानुमानभिति। न तेषामतीन्द्रियार्थे प्रामाण्यम्। एवं च यथा पीतः शङ्खइति प्रत्यक्षाभावात् पीतशङ्खप्रत्ययो निश्चयात्मको जातः प्रतिष्ठितः च पश्चात् दोषावधारणेन वाध्यते। एवं वौद्धवाक्यादर्थनिश्चयोजातः प्रतिष्ठितश्च। पश्चादतीन्द्रियार्थदर्शनोपायाभावादपौरुषेयवाक्यमूलकत्वाभावाच्च बाध्यते इति तद्वाक्यानामप्रमाण्यमेव।

यद्वा प्रमाणान्तरमूलकत्वावधारणं विना बुद्धादिवाक्याज्जातोऽपि निश्चयो द्रागेव विलीनोऽनुत्पन्नसमो भवति। यथापरप्रतारणाय विप्रलम्भकादि यदा वाक्यमुच्चारयति, तदैव ज्ञातदोषस्य पुरुषस्य तदीय वाक्यार्थे प्रमाणाभावनिर्णयात्ततो जातोऽपि बोधः प्रतिष्ठितो न भवति। तस्मिन्नेव काले पश्यति श्रोतुरविशेषकरत्वान्नष्टसमो भवति इति तदीयवाक्ये प्रामाण्याग्रहः तथा बुद्धादिवाक्यश्रवणवेलायामेव तत्र मूलापरिज्ञानात्तदर्थबोधस्याप्रतिष्ठितत्वात्तद् वाक्यप्रामाण्यसम्भावनापि न भवति। आतमख्याति पूजालाभार्थलोकधन्धनार्थमेवायम् वदति, नैवमयमर्थस्तात्विक इत्याह **अपि च पौरुषेयाद् वचनादिति भाष्यम्।**

**भाष्यम्—अपि च पौरुषेयाद्वचनात् पुरुपो वेद इति भवति प्रत्ययः। न एवमयमर्थं इति। विप्लवते हि खल्वपि कश्चित् पुरुषकृताद् वचनात् प्रत्ययः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति।**

पौरुषेयवाक्यात् तादृशार्थवोधमेववक्तु र्निश्चिनोति श्रोता, नेदृगेवायमर्थं इति। तथा पौरुषेयवाचां मूलान्तरावधानादेव प्रामाण्यम्, अन्यथाऽतीन्द्रियार्थे तद्विषयकज्ञानाभावे तद्विषयकशब्दरचनायाः कर्तुमशक्यत्वात्। अपौरुषेयवा-

चान्तु पुरुषनिमित्तत्वाभावेन स्वार्थे मूलापेक्षाविरहात्स्वतः प्रामाण्यमितिभावः । प्रत्ययपदेन साधारणं ज्ञानं विवक्ष्यते, न निश्चयः तस्यार्थे प्रतिष्ठितत्वात् । पौरुषेयवचनादर्थे ज्ञानमात्रं जायते, न यथार्थज्ञानमिति नार्थसिद्धिरनेनेति भावः ।

ननु न वाक्येन तन्मूलभूतार्थज्ञानमनुमातुं शक्यते, अशक्त्यादिना अन्याभिधित्सयाऽन्यप्रयोगदर्शनेन व्यभिचारात् । किं च पूर्वमर्थज्ञानं, ततो विवक्षा, ततो वाक्यप्रयोग इत्येव क्रमदर्शनाद्वाक्यार्थज्ञानापेक्षया अन्तरङ्ग विवक्षाया एवानुमानं न सम्भवति व्यभिचारात्, प्रागेव तु तदर्थज्ञानानुमानम् घटाभिधित्सया भ्रमादिना पटप्रयोगेण व्यभिचारादिति चेत् ? आप्तवाक्याभिप्रायपरत्वाद्भाष्यस्य । तथाचाप्तवाक्ये तन्मूलभूतार्थज्ञाने न व्यभिचारः । यथार्थवक्तुरेवाप्तत्वात् तत्तद्वाक्यापेक्षया प्रयोक्तुराप्तत्वमेव अशक्त्यादिनोच्चारित वाक्यापेक्षया न तस्याप्तत्वमेकान्ततः आप्तत्वन्तु भीमाग्रजेप्यशक्यमिति न पाणिपिहितं प्रेक्षावताम् । अनाप्तवाक्याभिप्रायेणाह भाष्ये **विप्लवते हीति** विप्लुतिः भ्रान्तिः, संशयो वा । पुरुषकृतात् पौरुषेयाद्वचनात् द्वाक्यात् प्रत्ययः—तन्मूलभूतवाक्यार्थ ज्ञानं तद्विवक्षा वेति तदर्थः । तथा च न वाक्यमात्रे मूलभूत वाक्यार्थ ज्ञानावधारणम्, अपितु आप्तवाक्ये । तत्र च न व्यभिचारः । एवं च वाक्यसामान्ये न तन्मूलभूतार्थज्ञानावधारणं सामर्थ्यमाप्तवाक्ये, अनाप्तवाक्ये तदपवाद इत्युभयाङ्गीकरणं पौरुषेयवाचां प्रामाण्यमप्रामाण्यं चोभयं समर्थितं भवति । आप्तवाक्ये मूलावधारणात्प्रामाण्यमनाप्तवाक्ये तदवनवधारणादप्रामाण्यम् वाक्येन मूलभूतार्थं ज्ञानानुमानं न साक्षात् अपि तु प्रणालिकया । तथाहि वाक्यार्थप्रत्ययः पदपदार्थरचनाधीनः, रचना च विवक्षाधीना, विवक्षा च ज्ञानाधीना, अन्वयव्यतिरेकाभ्यां रचनायां विवक्षाधीनत्वावगमात् । विवक्षान्तरेण रचनान्तरदर्शनात् प्रणालिकया मूलज्ञानजन्यैव रचनेति युक्तं कार्यभूतरचनातः मूलज्ञानानुमानम् । एवं च वाक्यार्थावधारणम् अनुमानमेव, न शाब्दं, वाक्येनार्थनिश्चयोऽपि न साक्षात्, किन्तु वक्तृज्ञानद्वारैवेति ।

अपि च रोगशान्तये औषधं भुञ्जानं प्रति कश्चित् पृच्छति किमर्थमिदं भुङ्क्षे, स ब्रवीति नाहं जानाभि, किन्तु स वैद्यो जानाति, स एवं कर्तुं

मामुपादिक्षदिति लोकव्यवहारदर्शनाद् वक्तृज्ञानाद् वक्तृज्ञानद्वारैव शब्देनार्थनिर्णयो न साक्षादिति गम्यते ।

नन्वेवं वक्तृज्ञानद्वारा अर्थनिर्णयाङ्गीकारे शब्दस्यार्थाप्रत्यायकतया-वाचकत्वमेव न स्यात् । न चार्थाप्रत्यायकस्य वाचकत्वं लोकवेदयोः सम्भवतीति वेदप्रामाण्यमेव न स्यादेवं शब्दार्थाप्रतीतौ मूलज्ञानानुमानमपि कथमिति चेत् न । भावानववोधात्। न वयं शब्दस्य प्रत्यायकत्वं निराकुर्मः । शब्दाः श्रवणमात्रेण व्युत्पन्नस्य समीचीनेऽसमीचीने वार्थे धियं जनयन्त्येव, किन्तु शब्दादर्थज्ञाने जातेऽपि पुरुषदोषानुप्रवेशशङ्कया यावन्मूलज्ञानं न जायते, तावत्तत्र संशयात्तस्याप्रतिष्ठितत्वम्, मूलज्ञानावधारणानन्तरं तस्य समीचीनत्वनिर्णये तत्सन्देहनिराकरणात्ततोजायमानो बोधः प्रतिष्ठितो भवतीति युक्तं निश्चयस्य वक्तृज्ञानाश्रयत्वम् ।

यद्यपि अर्थज्ञानं विना वक्तृविशिष्टार्थज्ञानं न संभवति, विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वादिति । विशिष्टार्थज्ञानात्पूर्वमेवार्थप्रत्ययः, तथापि अर्थप्रत्ययस्य सत्यमिथ्यासाधारण्यात्प्रामाण्यनिर्णायकत्वानभ्युपगमेन वक्तृविशिष्टार्थज्ञानस्यैव प्रामाण्यनिर्णायकत्वेन पूर्वभावित्वम्, अर्थनिर्णयस्य च तदुत्तरभावित्वमिति पौरुषेयवाचां पुरुषबुद्धिनिमित्तं प्रामाण्यमित्यतीन्द्रियार्थे बुद्धादिवाक्यस्य न प्रामाण्यं तदर्थज्ञानाभावादिति भावः ।

न चैवं वेदेऽप्रामाण्याशङ्का । अत्र वक्तुरभावेन तद्धीनिमित्तकप्रामाण्यस्य तत्र शङ्कितुमप्यशक्यत्वात्, किन्तु पदार्थद्वारा एव प्रामाण्यमित्याह—न **तु वेदवचनस्य मिथ्यात्त्वे** इति । पुरुषबुद्ध्यपराधेन लौकिकवाचामप्रामाण्यम्, अपौरुषेयवाचां पुरुषबुद्ध्यपराधासम्भवान्नाप्रमाणत्वम् । शब्दस्य वक्तृज्ञानानुमापकतया तत्रैव तद्व्यापारस्वीकारेण तज्ज्ञाने एव शब्दानां प्रामाण्यं नार्थसद्भाव इति मते बुद्धादिवाक्यानामपि स्वविवक्षितार्थे प्रामाण्यादप्रामाण्यस्य क्वचिदपि वाक्येऽसिद्ध्या तदापादनं वेदवाक्ये अयुक्तम् । तत्र प्रामाण्यविरहात् । लौकिकवाक्ये यदि अप्रामाण्यं न सम्भवति त्वन्मते, तर्हि वेदवाक्ये कथं तदाशङ्का, यदि च लौकिकवाक्यानां वक्तृज्ञाने प्रामाण्यम्, अर्थसद्भावेत्वप्रामाण्यम्, एवं वेदवाक्यस्यापि अर्थसद्भावे अप्रामाण्यं, वक्तुरभावात्तत्राप्यप्रामाण्यमेवेत्यभिप्रायः तदा वैदिक वाक्यानां

अर्थसद्भावे एव व्यापारस्वीकारेणाविषये वक्तृज्ञानेऽप्रामाण्यसाधने सिद्धसाधनं लौकिकवैदिकवाक्ययोः पौरुषेयत्वापौरुषेयत्वाभ्यां स्वभावभेदात्। वेदस्य वक्तुरभावात्तज्ज्ञाने प्रामाण्यस्य वक्तुमशक्यतया सद्भावे एव प्रामाण्याङ्गीकारात्तत्राप्रामाण्ये न किञ्चित् प्रमाणमिति वा तात्पर्येण।

**ननु वेदवचनस्य मिथ्यात्वेतिभाष्यम्**—

ननु प्रमाणाप्रमाणोभयविधलौकिकवाक्ये वाक्यत्वं दृश्यते, तस्यैव वेदेऽपि दर्शनाद् वेदवाक्यमपि लौकिकवाक्यवदप्रमाणं स्यादित्याशङ्कते **सामान्यतो दृष्टमिति** भाष्यम्।

**भाष्यम्—ननु सामान्यतो दृष्टं पोरुषेयं वचनं वितथमुपलभ्य वचनसास्याादिदमपि वितथमवगम्यते। न। अन्यत्वात्। नहि अन्यस्य वितथभावे अन्यस्य वैतथ्यं भवितुमर्हति अन्यत्वादेव। नहि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति।**

न चाप्रामाण्ये वक्तृदूषणं प्रयोजकमुक्तं न तु वाक्यत्वमिति वाक्यत्वहेतुकस्तदाक्षेपो न युक्त इति वाच्यम्। अप्रामाण्यं प्रति दूषणस्य प्रयोजकत्वाभिधानेपि वाक्यत्वस्य अत्राप्रयोजकत्वानभिधानात्तत्रापि प्रयोजकत्वाभिमानेन दूषणोपन्यासात्।

अस्तु वा लौकिकवाक्ये किञ्चिदप्रामाण्यप्रयोजकं वाक्यत्वं तत्र वर्तते। एवं चात्रापि वाक्यत्वदर्शनान्मिथ्यात्वं स्यादित्यभिप्रायेण तथाभिधानम्। तथाचेदृशः प्रयोगः वेदवाक्यमप्रमाणं वाक्यत्वाल्लोकवाक्यवदिति। अत्रदूषणमाह भाष्ये **न अन्यत्वादिति**। लौकिकवाक्यापेक्षया वैदिकवाक्यस्यान्यत्वात्। व्यभिचारं ग्राहयति न हीति।

न चान्यत्वादिति समाधानमयुक्तम्, पक्षदृष्टान्तयोर्भेदस्यानुमानानुगुणत्वात्। नहि पर्वतो वह्निमान् धूमान्महानसवदित्युक्ते महानसस्य पर्वतान्यत्वाभिधानेनानुमितिप्रतिरोधो जायते इति चेत्? सत्यम्। भाष्यस्यायमभिप्रायः पौरुषेयवाचामर्थज्ञाने एव प्रामाण्यान्नार्थतथात्वे, **एवमयं पुरुषो वेदेति** भाष्योक्तेः, एवञ्च वेदवाक्यानामप्रामाण्यसाधने लौकिकवाक्यं न दृष्टान्तः, साध्यविकलत्वात्, लौकिकवाक्यानामपि प्रामाण्याङ्गीकारात्। यदि वक्तृज्ञानद्वारा अर्थांशेऽपि लौकिकवाक्यानां

प्रामाण्यमभ्युपेयते, तदा समीचीनार्थकवाक्ये व्यभिचारः। नहि वाक्यमात्रमप्रमाणमिति केनाप्यङ्गीकर्तुं शक्यते। अथातीन्द्रियार्थकत्वे सति वाक्यत्वादित्युच्यते, तर्हि यत्रैकस्मिन् विषये वाक्यद्वयं मिथो विरुद्धं श्रूयते, यथेन्द्रोऽस्ति इत्येकेनोक्तं, परेण इन्द्रो नास्तीत्युक्तं तत्रैकमवश्यं सत्यार्थम् परस्परविरोधे प्रकारान्तराभावात्तथा चात्रैव व्यभिचारः। वस्तुतस्तु एतयोरन्यतरस्यास्तु सत्यत्वं, तावतापि प्रामाण्यं न सम्भवति, उभयोरपि अतीन्द्रियार्थकत्वेन मूलप्रमाणासत्त्वात्। तस्माद्वक्ष्यमाणान्येव दूषणानि।

भाष्यमित्थं योजनीयम्-परेण हि सामान्यतो दृष्टं वक्तव्यत्वेन प्रतिज्ञातं, ततोऽन्यदिदं तदाभासम्, अनैकान्तिकहेतुत्वात्।

अथवा एवं भाष्याशयः सर्वत्रैव सामान्यानुमाने विपक्षो हेतुरहितो भवति। यथा पर्वतो वह्निमान् धूमादित्यादौ विपक्षे जलह्रदे धूमो न वर्तते, प्रकृते प्रमाणवाक्यं विपक्षः, तत्रापि वाक्यत्वं वर्तते इत्यनैकान्त्यान्नानुमानम्। अन्यत्वादित्यस्य अनाप्तवाक्यापेक्षयाऽऽप्तवाक्यस्यान्यत्वा त्ततो भिन्नत्वादित्यर्थः।

यद्वा लौकिकवाक्यस्य मिथ्यात्वप्रयोजकं दुष्टत्वं, सत्यत्वप्रयोजकं चादुष्टत्वं, तयोरन्यत्वान्नदुष्टवाक्यस्य मिथ्यात्वदर्शनाददुष्टवाक्यस्यापि मिथ्यात्वमापादनीयम् तयोर्भिन्नत्वादित्यर्थः।

अत्रैव दृष्टान्तमाह **नहि देवदत्तस्येति**। स्पष्टार्थम्।

यद्वा प्रमाणस्यापि स्वविषयये वक्तृज्ञाने प्रमाणमेवेति साध्यविकलो दृष्टान्त इत्याह-नहि **अन्यस्येति**। अयमर्थः अर्थांशे वाक्यस्य मिथ्यात्वेऽपिज्ञानांशे न तस्य मिथ्यात्वमित्याह नहि अन्यस्येति।

यद्वा यथा लौकिकवैदिकवाक्ययोर्वाक्यत्वसाम्येऽपि लौकिकत्वं वैदिकत्वं चेति मिथोविरुद्धं धर्मद्वयं वाक्यत्वेन सह विकल्पेन व्यवतिष्ठते क्वचिल्लौकिकत्वसमानाधिकरणं वाक्यत्वं तथा प्रमात्वाप्रमाणत्वयोरेकत्र विकल्पेन व्यवस्थित्या किञ्चिद्वैदिकं वचनं प्रमाणं किञ्चिच्चाप्रमाणं भविष्यति इत्याशङ्क्याह नहीति। नहि वाक्यत्वेन सह वर्तमानं वैदिकत्वमप्रमाणत्वेनापि सह वर्तितुमर्हति अन्यत्वादेवेति सुगमम्।

यद्वा अयम् भाष्यार्थः लौकिकवाक्यस्य सामान्यतोऽप्रमाणस्यापि दर्शनेन वैदिकवाक्यस्यापि न तद्वदप्रमाणत्वं, किन्तु प्रमाणत्वमेव दोषविरहाद् बाधविरहाच्च समीचीनप्रत्यक्षवद्। यत्खलु ज्ञानसाधनं सदोषं, बाधसहितं वा तदेवाप्रमाणं। यथा भ्रान्तपुरुषप्रत्यक्षवाक्यादि, अतोऽन्यत्वाद् निर्दोषत्वाद् बाधरहितत्त्वाच्च वेदवाक्यस्य नाप्रामाण्यं, नहि अन्यस्य दोषबाधसहितस्य भ्रान्तादि वाक्यस्याप्रामाण्यमिति, अन्यस्य दोषादिरहितस्यापौरुषेयस्य वेदवाक्यस्य वैतथ्यं भवति, अन्यत्वादेव। अपौरुषेयत्वं दोषादि रहितत्वं च साधयिष्यते। ज्येष्ठत्वादुपजीव्यत्वात् प्रत्यक्षमनुमानापेक्षया प्रवलमिति, वलवति प्रत्यक्षे सति तद्विरुद्धमनुमानं कथमुदयमासादयेदित्यभिप्रायेणाह। **अपि च पुरुषवचनसाधर्म्यादिति।**

**भाष्यम्—अपि च पुरुषवचनसाधर्म्याद् वेदवचनं वितथमित्यनुमानमपि प्रत्ययादेव गम्यते प्रत्यक्षस्तु वेदवचनेन, नचानुमानं प्रत्यक्षविरोधि प्रमाणं भवति।**

अनाप्तवाक्यसाधर्म्येण वेदस्य वैतथ्यानुमानं न सम्भवति, वलवता वेदवाक्यजन्यप्रत्यक्षात्मकज्ञानेन विरोधात् इत्यर्थः।

नन्विदमसङ्गतम्। नहि अत्र प्रत्यक्षानुमानयो र्विरोधसम्भावना वर्तते। तथा वेदवाक्येन प्रत्यक्षज्ञानाजननात्, वाक्यार्थेन सममिन्द्रियसन्निकर्षाभावात्। न च वाक्यार्थेन सममिन्द्रियासन्निकर्षेऽपि शब्देन सह श्रोत्रेन्द्रिय सन्निकर्षात् शाब्दप्रत्यक्षस्यैवात्र प्रत्यक्षपदेन ग्रहणमिति वाच्यम्। भिन्नविषयत्वेनाविरोधितया तस्यानुमानवाध्यत्वासम्भवात्। अत्यन्तासतोप्यर्थस्य शब्देन भानाङ्गीकारात्। अथ शाब्दबोधात्मकज्ञानस्य प्रत्यक्षत्वमुच्यते घटः प्रत्यक्ष इतिवत्तदप्ययुक्तम्। स्वमते ज्ञानप्रत्यक्षत्वानभ्युपगमात् अनुमानगम्यत्वात्तस्येति चेत्? न। प्रत्यक्षशब्दस्य साधर्म्याल्लक्षणया शाब्दबोधात्मक ज्ञानपरत्वात्। प्रत्यक्षसाधर्म्यं च शाब्दबोधे पूर्वोत्पन्नत्वात् दृढ़त्वात् स्वतः प्रामाण्यात् परतः प्रामाण्याभावाच्च। वैदिकवाक्यश्रवणसमनन्तरजायमानशाब्दबोधविषयाविश्वासनिबन्धनोत्तरजातवेदवाक्यवैतथ्यानुमानापेक्षया प्रकृतवाक्यार्थबोधस्य पूर्वोत्पन्नत्वात् वैतथ्यानुमानाभासापेक्षया दृढ़त्वात्

स्वतः प्रामाण्यादिना च गुणवृत्त्या यत्प्रत्यक्षशब्दः शाब्दज्ञाने एव प्रयुक्त इति भावः ।

अथवा प्रत्यक्षपदं मुख्यार्थकमेव, अप्रामाण्यकारिणीभूतौ संशयविपर्ययौ निरस्तौ इति । ज्ञानाभावनिमित्तकवैतथ्यानुमानमवशिष्यते । ततश्च ज्ञानाभावपरमेव भवदीयवैतथ्यानुमानम् । तदसंगतम् भवतां मते ज्ञानप्रत्यक्षत्वाभ्युपगमात् केवलं मीमांसका एव ज्ञानमनुमेयमिति ब्रुवते, नान्ये इति, भवतां प्रत्यक्षविरुद्धा प्रतिज्ञा वेदवाक्याद् भवतामपि ज्ञानोत्पत्तिरभिमता, अन्यथा अवोधकत्वादेवाप्रमाण्यशङ्का स्यात् । वैतथ्यानुमानं च परिशेषाद्ज्ञानाभावविषयकमिति तत एव ज्ञानं तदभावश्चेत्युभयाभ्युपगमे स्पष्ट एव भवतां प्रतिज्ञाविरोधः ।

विशेषविरुद्धो वा हेतुरनेन प्रदर्श्यते । भवतां मते यत्र वाक्ये मिथ्यात्वं तत्र वाधज्ञानमिति वाधज्ञानसहितमेव वाक्यत्वं मिथ्यात्वव्याप्यमिति तादृशमेव वाक्यत्वमन्यत्रापि मिथ्यात्वं गमयेत्, नान्यादृशम् । प्रकृते वाधदर्शनस्य वक्तुमशक्यतया न तद्धीमिथ्यात्वसिद्धिः । अस्मिन् पक्षे प्रत्ययशब्दः शाब्दबोधात्मकज्ञानपरतया गौणो वोध्यः । गौणहेतवश्च पूर्वं प्रदर्शिता एव ।

**भाष्यम्—तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः । एवं तर्हि श्रेयस्करो जिज्ञासितव्यः किं धर्मजिज्ञासया । उच्यते । य एव श्रेयस्करः स एव धर्मशब्देनोच्यते । कथमवगम्यताम् । यो हि यागमनुतिष्ठति, तं धार्मिक इति समाचक्षते । यश्च यस्य कर्ता स तेन व्यपदिश्यते । यथा पाचकः लावक इति । तेन यः निःश्रेयसेन पुरुषं संयुक्तनक्ति स धर्मशब्देनोच्यते । न केवलं लोके, वेदेऽपि यज्ञेन यज्ञमयजन्तदेवाः तानिधर्माणि प्रथमान्यासन्नितियजति शब्दवाच्यमेव धर्मं समामनन्ति ।**

**तस्माच्चोदनालक्षणः श्रेयस्कर इति** भाष्यम् । ननु उपक्रमोपसंहारयोरैक्याय येन शब्देनोपक्रमस्तेनैव शब्दनोपसंहारस्यौचित्येन को धर्मः कथं लक्षण इति भाष्ये धर्मशब्देनोपक्रान्तस्य तेनैव शब्देनोपसंहारस्य युक्ततया श्रेयस्करशब्देनोपसंहारे कोभिप्रायो भाष्यकृत इति चेत् । अयमभिप्रायः पदार्थधर्मः पक्षधर्म इत्यादिप्रयोगानुसारेण वृत्तिमत्तात्पर्येणापि धर्मशब्दप्रयोगादनेकार्थक-

तया कस्य ग्रहणमित्यपेक्षायां यः श्रेयस्करः स एव धर्मशब्देनात्र ग्राह्यो, नान्य इति सूचनायेदृशोपसंहारः ।

कः श्रेयस्कर इत्यपेक्षायां यागादिरेव श्रेयस्कर इति लोकव्यवहारेण दर्शयति—**यो यागमनुतिष्ठतीति भाष्यम्** । ननु कथमेवं विज्ञायते यागकर्तृत्व निबन्धन एव याज्ञिके धार्मिक शब्दप्रयोगो, न तज्जन्यापूर्वान्तः करण-वृत्त्यादिनिबन्धन इति चेत् ? इत्थम् यदि लोकः परान्तःकरणवृत्त्यपूर्वादिं पश्येत्, तदा तन्निबन्धनधार्मिकपदप्रयोगस्तत्र स्यादपि, किन्तु न तज्जानाति । न चाज्ञातप्रवृत्तिनिमित्तकः शब्दः लोकेन प्रयुज्यते इति यागादिनिमित्तक एव धार्मिकपदप्रयोगो, न हेत्वन्तरनिबन्धन इति, श्रेयस्कर एव धर्मो, नापरः । यत्र कर्मणि यस्य नाधिकारः, तस्य नासौ श्रेयस्कर इत्यनधिकारि शूद्रानुष्ठितयागादेर्न धर्मत्वं । 'चित्रया यजेत पशुकामः' इत्यादिश्रुत्या चित्रादियागानुष्ठायिनां पश्वादिफलप्रदर्शनात् पश्वादिफलकानां चित्रादीनामेव धर्मत्वमवगम्यते ।

वेदेऽपि यागधर्मयोः सामानाधिकरण्यदर्शनाद् यागस्यैव धर्मत्वमिति दर्शयितुमाह भाष्ये—**यज्ञेन यज्ञमित्यादि** । न च यागधर्मशब्दयोर्लिङ्गवचन-भेदात् कथं सामानाधिकरण्यं समानलिङ्गवचनकयोरेव सामानाधिकरण्यौ-चित्यादिति वाच्यम् ।छान्दसत्वात् । छन्दसि लिङ्गवचनयोर्व्यत्ययस्य "बहुलं छन्दसी"तिदर्शनात् ।

मतान्तराभिमतधर्मस्वरूपनिराकरणमेवमवधेयम्—सांख्याः यागानुष्ठान-जन्यमनोवृत्तिविशेषं धर्ममाहुः । शाक्यास्तु चेतसो ज्ञानस्य ज्ञानान्तरजन्यां वासनां धर्ममूचुः । आर्हतास्तुकायारम्भकान् परमाणून् पुद्गलान् धर्मम-भिदधुः । वैशेषिकास्तु आत्मनो विशेषगुणं धर्मं प्राहुः । एकदेशिनश्च अपूर्वं धर्ममूचुरिति । एतेषु सर्वेषु पक्षेषु लोके धर्मशब्दप्रयोगो न दृष्ट इति नैषां धर्मत्वम्, लोकप्रयोगविरोधात्, चोदनातः तेषां श्रेयस्साधनत्वानवगमाच्च ।

ननु अन्तःकरणवृत्त्यादीनां श्रेयस्साधनत्वाप्रतीत्या मास्तु तेषां धर्मत्वं, अपूर्वस्य तु "तेनापूर्वं कृत्वा नान्यथे"ति वक्ष्यमाणतया श्रेयःसाधनत्वं प्रतीयते एवेति, तस्य कथं न धर्मत्वमिति चेत् ? न । अश्रुतत्वात् । नहि यजेत स्वर्गकाम इति वाक्ये न यागस्वर्गयोरन्तराले साध्यसाधनभावेनापूर्वन्नाम

किञ्चित् प्रतीयते, यागस्वर्गयोरेव तेन रूपेण प्रतीयमानत्वात् । अन्यथा यागे श्रुतस्य स्वर्गसाधनत्वस्य स्वर्गे श्रुतस्य यागसाध्यत्वस्य हानिः, श्रुतेऽपूर्वे यागसाध्यत्वस्य स्वर्गसाधनत्वस्य च कल्पना स्यात् । साध्यसाधनभावस्वरूपानङ्गीकारे प्रकारान्तरेणापूर्वसिद्धिरेव न सम्भवति, प्रमाणाभावात् । र्तिह अपूर्वानङ्गीकारे एभिरपूर्वं कृत्वेतिग्रन्थस्य कथं संगतिरिति चेत् ? इत्थम्— अपूर्वं हि यागादिनिष्ठा फलस्य सूक्ष्मावस्था शक्तिरङ्कुरस्थानीया, न स्वतन्त्रं नामापूर्वं किञ्चिदित्यर्थः । ननु भवतु यागादिनिष्ठा शक्तिरेवापूर्वं, तावतापि कथं न तत्र धर्मशब्दप्रयोग इति चेत् ? न । शक्तिषु लोके धर्मशब्दप्रयोगादर्शनात् । सर्वेषु पदार्थेषु शक्तयः सन्त्येव । यथा वह्न्यादिषु दाहादिशक्तय:, तासु च शक्तिसामार्थ्यादय एव शब्दाः प्रयुज्यन्ते, न धर्मशब्दः अन्यथा वह्न्यादिषु दाहानुकूलशक्तिदर्शनात्तत्तात्पर्येणापि धर्मशब्दप्रयोगः स्यात् । न च दहनधर्मा वह्निरिति प्रयुज्यत एव लोके, तस्यार्थान्तरपरत्वात् । अन्यथा धार्मिको वह्निरित्यपि स्यादितिः, श्रेयःसाधनयागादिरेव धर्म इति । अत्र भाष्यन्निगदव्याख्यातमिति न तदर्थनिरूपणमपेक्ष्यते ।

चोदनालक्षणस्यैव धर्मलक्षणत्वसम्भवात् अर्थग्रहणं व्यर्थमित्याशङ्क्य तत्प्रयोजनप्रदर्शनायाह—भाष्ये उभयमिहेति ।

**उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्चेति कोऽर्थः यो निःश्र्यसाय ज्योतिष्टोमादिः कोऽनर्थः यः प्रत्यवायाय श्येनो वज्रः इषुरित्येवमादिः । तत्र अनर्थः उक्तो माभूदिति अर्थग्रहणम् ।**

**कथं पुनरसौ अनर्थः, हिंसा हि सा साच प्रतिषिद्धेति कथं पुनरनर्थः कर्तव्यतयोपदिश्यते । उच्यते नैब श्येनादयः कर्तब्या विज्ञायन्ते, यो हि हिंसितुमिच्छेत्, तस्यायमभ्युपायः इति हि तेषामुपदेशः श्येनेनाभिचरन् इति समामनन्ति न अभिचरितव्यम् इति ।**

अर्थः निःश्रेयसौपयिकः ज्योतिष्टोमादिः, अनर्थः प्रत्यवायफलकः श्येनादिः । एतदुभयं चोदनालक्षणं, चोदनया तदुभयं गम्यते इत्यर्थः । तत्रा**नर्थः श्येनादि धर्मलक्षणं माभूदित्यर्थग्रहणमिति ।** ननु क्रियाप्रवर्तकवाक्यस्यैव चोदनापदेन ग्रहणमिति पूवोक्त्या निषेधवाक्यविषयाणां हिंसादीनां चोदनालक्षणत्वाभावादेव तद् व्यावृत्तिः । एवं निषेधविधीनां निवार-

कत्वकल्पनेऽपि 'न हिंस्यान्न पिवेदि'त्यादीनां हिंसा सुरापाननिवारणमेव प्रतीयते। निवारणं च प्रवृत्तिप्रतिबन्धकौदासीन्यव्यतिरेकेण नान्यत्। औदासीन्यं च तत्र प्रवृत्यभावादेव सम्पद्यते इति नैषां क्रियाविशेषप्रवर्तकत्वम्। एवं निषेधविधिस्वीकारेऽपि हिंसापानाद्यभाव एव विधेयः, सोपि हिंसादिनिवृत्त्यैवसिद्धः, न क्रियान्तरमपेक्ष्यते यदपेक्षया चोदनात्वं प्रसज्येत। ततश्चोदनापदेनैवानर्थस्य श्येनादे र्व्यावृत्त्या तदर्थमर्थपदोपादानप्रयोजनाभावादुभयमनेनेति भाष्यमसंगतम्। एवं कोऽनर्थ इति प्रश्ने श्येनाद्युदाहरणमपि न साधु, श्येनस्य 'श्येनेनाभिचरन् यजेते'ति वाक्यविहितत्वेनानर्थत्वाभावात्। न च विहितस्य प्रतिषेधः समुपपद्यते, व्याहतत्वेनाप्रामाण्यापत्तेः।

नन्व''तिरात्रे षोडशिनं गृह्णाती''त्यनेन विहितस्य षोडशिग्रहणस्य 'नातिरात्रे षोडशिनं गृह्णाती'त्यनेन प्रतिषेधदर्शनादत्रापि तथा किन्न स्यादिति चेत्? वैषम्यात्तु षोडशिग्रहणे एवाभिनिविशते, अन्यथा तद्वैयर्थ्यापत्तेः। प्रकृते तु 'माहिंस्यादि'ति सामान्यशास्त्रं यागवहिर्भूतभूतहिंसाप्रतिषेधेन सावकाशमिति, यागाङ्गभूतहिंसाविषये विशेषशास्त्रेण श्येनादिना प्रतिरोधान्न प्रवर्तते, अन्यथा विधिनिषेधयोरेकत्र समावेशापत्तौ षोडशिग्रहणस्येव श्येनादेरपि अनर्थत्वं न स्यात्। तथा च श्येनादेरनर्थत्वकथनमर्थपदेन तद्व्यावर्त्तनं च भाष्योक्तमसंगतं स्यात्।

यदपि 'कथं पुनरसौ अनर्थः' इति प्रश्ने हिंसा हि सा, सा च प्रतिषिद्धेत्युक्तम्। तदपि न। प्राणवियोगानुकूलभावनाया हिंसायाः साधनं श्येनादि कृपाणवत्, नतु स्वतस्तस्या हिंसात्वमिति हिंसाफलकः श्येनस्ततो भिन्नः।

यदपि कथंपुनरनर्थः कर्तव्यतयोपदिश्यते इति प्रश्ने, नैव श्येनादयः कर्तव्यतया विज्ञायन्ते, किन्तु यो हिंसितुमिच्छेत्तस्यायमुपायः इति हि तेषामुपदेशः, श्येनेनाभिचरन् यजेतेतिकर्म षष्ठ्या विधेयत्वमुक्तम्। तदपि व्याहतम्। नैव श्येनादय इति विधेयत्वनिराकरणमसंगतम्। श्येनस्याविधाने विधेयान्तरस्यादर्शनादस्याविधायकत्वापत्तेः। रागतः प्राप्तस्य फलस्य सर्वत्राविधेयत्वात्। न च फलमनूद्येतिकर्त्तव्यतांशोऽनेन विधीयतामिति वाच्यम्। यथा फलानुरागवशादविहितेऽपि तत्साधने विधिव्यापारं विना

पुंसां प्रवृत्तिः तथा तद्धेतुतयेतिकर्त्तव्यतांशेऽपि तदुपपत्तौ तदंशे विधेयत्वाङ्गीकारानौचित्यात् । फलार्थिनः साधनांशे इव इतिकर्त्तव्यतांशेऽपि प्रवृत्तेः सूपपाद्यत्वात् ।

किंच एवं सति सर्वत्र साधने विधेयत्वानभ्युपगमे ज्योतिष्टोमादेरपि अविधेयत्वापत्तौ को धर्म इति प्रश्ने, **'यो निःश्रेयसाय ज्योतिष्टोमादिरि'ति** भाष्यमसङ्गतं स्यात्, एषामपि फलसाधनत्वेनैवोपदेशात् । प्रत्युत अग्नीषोमीयपशुहिंसाद्वारा निषेधविधेः प्रसरादनर्थत्वमेव स्यात् ।

किं च शत्रुवधमुद्दिश्य श्येनादीनामविधाने तेषां तदङ्गत्वमेव न स्यात् । तथा तदङ्गानामपि साधनाङ्गत्वं न स्यात् । अविहितस्य फलतत्साधनाङ्गत्वाभावात् ।

न **च नैव कर्तव्यतया विज्ञायन्ते** इति भाष्ये कृत्यप्रत्ययदर्शनेन साध्यतया विधेरनभ्युपगमेपि साधनतया विधानस्यानिराकरणात्तदंशे विधेरनुज्ञानेन विरोधाभावान्न श्येनादीनां शत्रुबधसाधनताहानिरिति वाच्यम् । विहिते निषेधशास्त्राप्रवृत्तेः । प्रवृत्तेरनौचित्येन श्येनादीनामनर्थवत्त्वेन प्रत्युदाहरणासंगतेस्तदवस्थत्वात् । सर्वत्र साधनत्वेनैव विधानमुपलभ्यते, न साध्यत्वेन, फलस्याविधेयत्वादिति सत्यम् ।

भाष्यं तर्हि एवं व्याख्येयम्—क्रियाप्रवर्तकवाक्यस्यैव चोदनापदेन ग्रहणे इदं भाष्यमसंगतं भवतीति प्रवर्त्तकं निवर्तकं चोभयविधं वाक्यं चोदनापदेन ग्राह्यम् । क्रियायाः प्रवर्तकमित्युक्तिस्तूदाहरणार्था । यथा क्रियाप्रवर्तकं वाक्यं चोदना, तथा तन्निवर्तकमपीत्यर्थः । अन्यथा अनर्थव्यावृत्ति-प्रयोजनपरार्थपदोपादानमसङ्गतं स्यात् । अर्थान्वितचोदनातात्पर्येण वा तथोक्तिः । एवं च विधिनिषेधयोरुभयोश्चोदनात्वेन विधिरूपया चोदनया ज्योतिष्टोमादीनां धर्मत्वं, निषेधरूपया चोदनया च निषेध्यानां श्येनादीनामनर्थत्वं लक्ष्यते इति उभयोश्चोदनालक्षणत्वं सम्यगेव । तथा च विधेयानामेवार्थत्वं न निषेध्यानामिति अर्थपदेनैषां व्यावृत्तिर्युक्तैव ।

ननु यथापरिग्रहाय धर्मः सूत्रितः, तथा परिहाराय अधर्मः किन्न सूत्रितः । नहि अविज्ञातः परिहर्तुं शक्य इति चेत् ? उच्यते—धर्मविपरीतोऽधर्म इति विधेयस्यार्थत्वे प्रतिपादिते, निषेधस्य तद्विपरीतस्यानर्थत्वं अर्थात्सिद्ध्यतीति

न पृथक् तदुक्तिः । तावतापि श्येनस्यानर्थत्वोदाहरणमसङ्गतम् । विहितत्वादिति चेत् ? सत्यम् । स्वरूपेण श्येनस्यानर्थत्वाभावेऽपि शत्रुबधरूपफलगतानर्थत्वोपचारादनर्थत्वम् । फलगतानर्थत्वस्य साधने आरोपादित्यर्थः । श्येनशब्दस्यैव वा फले शत्रुबधे लक्षणा । तथा च श्येनपदलक्ष्यस्य शत्रुबधस्यानर्थत्वमुच्यते इति, न विरोधगन्धः ।

एतच्च भाष्यकारेणैव स्पष्टीकृतम् । श्येनफलम् अनर्थः न श्येनः श्येनादिस्वरूपस्यानर्थत्वे **हिंसा हि सेति** ग्रन्थसङ्गतिर्न स्यात् । श्येनादीनां विधेयत्वेनानर्थत्वानुपपत्तेः । अन्यथा कस्यचित्तत्र प्रवृत्तिर्न स्यात् । नहि अनर्थाय कस्यचित्प्रवर्तितुमर्हति ।

यथा तु विधिरेव चोदना, तदा इदं भाष्यमेवं व्याख्येयम् । यथा हिंसा साधनत्वेन श्येनादिर्विधीयते, तथा ज्योतिष्टोमादिसाध्यत्वेन स्वर्गादिर्विधीयते इति साधनवत् साध्यमपि विधेयमेव । फलं हि द्विविधम्-अर्थोऽनर्थश्च । तत्र स्वर्गादिरर्थः अप्रतिषिध्यमानत्वात्, हिंसादिरनर्थः, ''मा हिंस्यादि''ति शास्त्रान्तरेण प्रतिषिध्यमानत्वात् । न च विहिताया हिंसायाः कथं प्रतिषेधः, **जानात्येवासौ मया कर्तव्यमुपायं तु न वेदेति**भाष्येण तस्य ''लिप्सार्थलक्षणे''(४-१-२)ति सूत्रेण च फलस्याविधेयत्वप्रतिपादनात् श्येनादिविधिना फलांशो मा हिंस्यादिति सामान्यशास्त्रेण प्राप्तस्य निषेधस्यानिवारणात् अभिचारविषये प्रवर्तमानः प्रतिषेधः फलांशेऽनिवारणात्तदंशेऽनर्थत्वं बोधयति । न श्येनादौ अभिचारविधिना तत्र सामान्यशास्त्रप्रवृत्तिप्रतिरोधात् ।

भाष्यं त्वेवं योजनीयम् उभयं चोदनया लक्ष्यते साध्यं साधनञ्च । साध्यमपि द्विविधमर्थोऽनर्थश्च । कोऽर्थ इत्यत्रार्थशब्देन साधनं लक्ष्यते किं साधेनमित्यर्थः । उत्तरमाह ज्योतिष्टोमादिः । कोऽनर्थ इत्यत्रानर्थपदं फलपरं, तथा च कोऽनर्थफलकः श्येनादिः । तथा चानर्थफलकश्येनादिव्यावृत्तये अर्थग्रहणं कृतम् ।

अर्थसाधनत्वमुक्तम् श्येनादेर्धर्मत्वमधर्मत्वं वा किमपि नोक्तम् । **कथं पुनरनर्थः कर्तव्यतयोपदिश्यत** इति भाष्यम् । यः कर्तव्यतयोपदिश्यते, श्येनादिर्नासौ अनर्थः, यश्चानर्थः हिंसा, नासौ कर्तव्यतयोपदिश्यते इति नेदं

चोद्यं युक्तमिति वाच्यम्। भावानवबोधात्। उभयं चोदनालक्षणमिति श्रवणात् साधनवत्फलस्यापि विधेयत्वाभिमानात्। **नैव श्येनादयः कर्तव्या इति भाष्यम्।**

ननु पूर्वोक्तदिशा फलस्यैव विधेयत्वं प्रसक्तमिति, तदेव सिद्धान्ते निराकरणार्हं, न श्येनादिः। तत्र तस्याप्रसक्तेर्विधेयत्वेन निषेधासम्भवाच्चेति चेत्।

सत्यम्। एवं सति भाष्यं भित्वा व्याख्येयम्—नैवेति। एकं वाक्यमस्यायमर्थः अनर्थः कर्तव्यतया नैवोपदिश्यते, अपि तु श्येनः कर्तव्यतयोपदिश्यते। स च नानर्थः। यश्चानर्थः फलं, स न कर्तव्यतयोपदिश्यते इति तद्भावः। कर्तव्येति प्रश्नवाक्यघटकतव्यप्रत्ययो न साध्यत्वतात्पर्येण प्रयुक्तः। तथा सति उत्तरवाक्येऽपि तदर्थकस्यैवाङ्गीकर्तव्यत्वापत्तौ प्रश्नोत्तरयोरसाङ्गत्यापत्तेः। कथमनर्थः साध्यतयोपदिश्यते इति शङ्का न युज्यते; अनर्थत्वसाध्यत्वयोः विरोधाभावात्। सुरापानादेरनर्थस्यापि साध्यत्वदर्शनात् तन्निराकरणमपि न सङ्गच्छते तस्यामसाध्यत्वप्रदर्शनासम्भवात्। प्रश्नवाक्ये तव्यप्रत्ययेनानर्थस्य कथं विधेयत्वमिति शङ्का सम्भवति, उत्तरवाक्येनानर्थस्य विधेयत्वं न प्रतिपाद्यते, किन्तु श्येनादेः। न चासौ अनर्थः इति, अनर्थस्यैव विधेयत्वं निराकार्यम्। अत एव "श्येनेनाभिचरन् **यजेत**" **इति हि समामनन्ति** इति भाष्यकारेणोक्तम्। अभिचरन्निति लट्स्थानिकशतृप्रत्ययप्रदर्शनेनाभिचारस्याविधेयत्वं सूचितम्। **तेषामुपदेश** इत्यनेन श्येनादेर्विधेयत्वं सूचितम् विध्युपदेशयोः पर्यायत्वात्। न हि अविहितस्योपदेशः अप्रयोजनत्वात् इति, फलस्यैव विधेयत्वमाशङ्क्य निराकृतं न साधनस्येति स्फुटमेव प्रतीयते। श्येनादय इत्यादिपदेनेतिकर्तव्यतायाः अपि संग्रहः। एवं च साधनेतिकर्तव्यतांशद्वये "माहिंस्यादि"ति निषेधशास्त्रं न प्रवर्तते एव, तस्याविधेयत्वादिति, तदेवानर्थस्य प्रत्युदाहरणम्।

यत्तु साधनेतिकर्तव्यतांशयोरपि हिंसायां निषेधशास्त्रं प्रवर्तते इति, तस्यापि अनर्थत्वमिति। तत्तुच्छम्।

ननु लौकिकहिंसावदग्नीषोमीयादि हिंसाप्यनर्थ इति चेत्? न। लौकिकहिंसायां "माहिंस्यादि"तिनिषेधेनानर्थत्वबोधनेऽपि अग्नीषोमीयहिंसायां

निषेधशास्त्राप्रवृत्त्या अनर्थभावे प्रमाणाभावात्, प्रत्यक्षादेस्तत्रासामर्थ्यात् ।

न च लौकिकहिंसायामनर्थत्वज्ञानात् हिंसासामान्येनात्रापि तदाशङ्का-स्यादिति वाच्यम् । तत्र निषेधमूलकानर्थत्वनिश्चये अपि प्रकृते तदभावेन सन्देहानुपपत्तेः ।

अथ पशुवधवन्धनादिक्लेशं पश्यतोऽनुमानं भवति—एतादृशं दुःखं कर्तुः स्यादिति चेत् ? न । नेदानीं कर्तुर्दुःखानुपलम्भात् सुखस्यैवोप-लम्भाच्च कालान्तरेऽपि तदेवानुमेयं, न तद्विपरीतं, प्रमाणाभावात् । अनुमानप्रयोगश्चेत्थम् । हिंसा स्वविषयगतफलसमानफलदात्री क्रियात्वाद् दानक्रियावत् । यथा दानक्रिया सम्प्रदेये तादृशं सुखं जनयति । तथा हिंसापि स्वविषये पश्वादौ हिंस्यमाने यादृशं दुःखं जनयति, कालान्तरे सापि हिंसकस्य तादृशमेव दुःखं जनयिष्यति इत्यनुमानेन वैदिकहिंसाया अपि अनर्थहेतुभावो निर्णीयत इति चेत् ?

न । अगम्यागमनसुरापानादिक्रियायां व्यभिचारात् । नहि एतादृशी क्रिया तादृशं फलं जनयति इति केनापि वक्तुं शक्यम् । तथा सति तत्प्रति-षेधस्यैवासाङ्गत्यापत्तेः ।

अपि च हेतुरपि विरुद्धः प्रायश्चित्तादौ दुःखनिवृत्तये गोदानविधा-नात् । न हि तत्र सम्प्रदानस्य क्षीरपानादिजन्यं सुखमिव सुखं भवति दातुः, प्रमाणविरोधात् । संप्रदानापेक्षया दातुः सहस्रगुणफलस्मृतेः, दृष्टान्तस्य साध्यवैकल्याच्च । दानक्रियायां सिषाधयिषितदुःखविरहात् पक्षसपक्षयोः साध्यभेदात् सपक्षे संप्रदानतुल्यवलत्वव्याप्तो हेतुः । पक्षे तु हिंसाकर्मफलतुल्य-फलत्वमिति नानुमानप्रणाली ।

यदि सपक्षवत्पक्षेऽपि सुखमेव साध्यते, तदा विरुद्धो हेतुः दुःखसिषा-धयिषया प्रयुक्तेन हेतुना सुखसाधनात् ज्योतिष्टोमहिंसा सुखकरी विहितत्वात् जपहोमादिवत् । अपि च जपहोमादिभ्यः परपीड़ानुग्रहयोरभावात्तेषाम-फलत्वमेव स्यादिति, शास्त्रैकवेद्ययोर्धर्माधर्मयोरनुमानावतारानौचित्यम् । शास्त्रं विहाय परपीड़ानुग्रहमूलकानुमानेन धर्माधर्मयोर्व्यवस्थापनेऽगम्यागम-नादौ भूयान् धर्म एव स्यात्, परपीड़ाया अभावेन अनुग्रहस्य च सत्त्वात् हृदयक्रोशनमपि निष्कारणम् । हृदयक्रोशनेनाधर्मः, तेन हृदयक्रोशनमित्य-न्योन्याश्रयश्च ।

अन्ये तु नाग्नीषोमीयहिंसायामनर्थहेतुत्वमनुमानेन ज्ञाप्यते, येन पूर्वोक्तदूषणगुणाज्ज्ञापकप्रमाणविरहः शक्येत वक्तुं, ''माहिंस्यादि''ति शास्त्रमेवात्रप्रमाणम् । शास्त्रं हि पदार्थस्य यादृशी शक्तिरस्ति, तस्य तादृशीं शक्तिं ज्ञापयति । यथा वह्निरुष्णः, जलं शीतं, नहि स्वातन्त्र्येण कस्यचिच्छक्तिं जनयति, अपनयति वा । नहि कृशानुः शीतल इति शतकृत्वोऽपि वचने स तथा भवति । किन्तु स्वयमेव तदात्मनः प्रामाण्यात्प्रच्यवते । एवं हिंसायां सतीमेव प्रत्यवायजनशक्तिं ''माहिंस्यादि''ति शास्त्रं ज्ञापयति लोकानुजिघृक्षया व्युत्पन्नस्येति, लौकिकहिंसावदग्नीषोमीयहिंसायामपि तदेव प्रमाणम् इत्याहुः ।

तत्तुच्छम् । यतः शास्त्रं ज्ञापकमेव, नोत्पादकमित्यविवादम् । किन्तु विशिष्य शक्तिं ज्ञापयति, न समान्यतः । अन्यथा ब्राह्मणानामिव शूद्राणामपि सुरापानादे र्निरयनिपातनिदानत्वापत्तेः । वैश्यस्तोमादे र्विप्रराजन्ययोः फलसाधनत्वापत्तेश्च । दर्शपूर्णमासयोरन्यदापि करणप्रसङ्गाच्च, सायं प्रातर्विहितस्याग्निहोत्रस्य मध्याह्नेऽपि करणप्रसङ्गाच्च ।

ननु वैश्यस्तोमादेरधिकारिविशेषं निर्दिश्य विधानात्फलम्, मा हिंस्यादित्यनेन तु अविशिष्य हिंसामात्रस्यानर्थत्वज्ञापनादग्नीषोमीयहिंसायामपि तत्प्रसज्यत एवेति वाच्यम् । विशेषशास्त्रेणा''ग्नीषोभीयं पशुमालभेते''त्यनेन विरोधिना यज्ञाङ्गहिंसातो व्यावर्तमानस्य निषेधशास्त्रस्य तदनङ्गहिंसायामेव व्यवस्थापितत्वात् तत्रैवानर्थत्वं व्यवस्थितं, न यज्ञाङ्गहिंसायामित्यङ्गीकारात् । यदप्युक्तं **पदार्थशक्तिर्व्यवस्थितेति** । तदपि न वलवीर्यविपाकादि जननक्षममपि भोजनं अनातुरस्य सुखमिति, किमातुरस्यापि तथा कल्पयितुं शकयम् । फलांशे न विधिः रागादेव तत्र प्रवृत्त्युपपत्तेः विपरीतदर्शनात् । यदि भोजनं कर्तृभेदाद्भिन्नं, नैकं, तदा यागाङ्गत्व-तदनङ्गत्वोपाधिभिस्तद्भेदः प्रकृतेऽपि न दण्डवारित इति तुल्यम् । अन्यथा क्रियात्वेनैकफलकत्वाभ्युपगमे अश्वमेध ब्रह्महत्ययोस्समानफलकत्वापत्तिः । यागत्वेन भेदाभ्युपगमे तु सर्वेषां यागानां यागत्वेनैकत्वापत्तौ सोम-चित्रादियागानामविशेषफलकत्वापत्तिर्दुर्वारैव स्यात् । यदि यागव्यक्तिभेदात् फलभेद इत्युच्यते, तदा प्रकृतेऽपि हिंसाव्यक्तिभेदात् फलभेद इत्यात्रापि दृष्टिर्दीयताम् ।

ननु सुहृद्भावेनैतत् पृच्छामि विहिताऽपि हिंसा कुतो नाऽनर्थे, लोकवत् वेदेऽपि हिंस्यमानपशोः क्लेशसाम्यात्, विशेषान्तरस्यादर्शनादिति चेत् ?

सत्यम् । धर्माधर्मयोश्शब्दैकसमधिगम्यतया वैदिकहिंसायामनर्थं बोधकविधेरदर्शनात्, "माहिंस्यादि"ति निषेधशास्त्रप्रवृत्तेरत्र निवारितत्वात्, अग्नीषोमीयं पशुमालभेतेति हिंसाबोधकविधेरत्र दर्शनात् ।

किञ्च पुरुषार्थत्वे हिंसाया अनर्थत्वं स्यादपि प्रकरणात्तु क्रत्वर्थत्वमेव तस्या अवसीयते । क्रत्वर्थत्वे क्रतूपकार एवाऽनया संपाद्यते । तदुपकारश्च हृदयाद्यवदानद्वारा दृष्टार्थो व्रीह्यवघातवत् न प्रोक्षणादिवददृष्टार्थः । अन्यथाऽर्थफलस्यानर्थफलकत्वं, क्रत्वर्थस्य पुरुषार्थत्वम्, संस्कारस्यार्थकर्मत्वम्, दृष्टार्थस्यादृष्टार्थत्वमिति चतुष्टयं प्रमाणविरुद्धं कल्पनीयं स्यात् । एवञ्च यागाङ्गहिंसायां नाऽनर्थत्वम्, किन्तु तदनङ्गहिंसायामेवेति, फलगतानर्थतात्पर्येण श्येनादीनामनर्थत्वम् तदनङ्गहिंसातात्पर्येणेति बोध्यम् ।

यत्तु साधनवत् फलांशोऽपि विधेयः चोदनालक्षणत्वात्, भावनान्तर्गतत्वादिति । तत् तुच्छम् । उद्देश्यविधया शत्रुबधस्य चोदनार्थत्वेऽपि विधेयत्वाभावात् । नहि सर्वस्य प्रवर्तकवाक्यार्थस्य विधेयत्वनियमः, किन्तु यत्र प्रवर्तकवाक्यश्रवणं विना पुरुषो विहिते कर्मणि प्रवर्तितुं नार्हति, तस्यैव विधेयत्वमित्येव नियमः । फलस्य तुरागविषयतया स्वतः पुरुषप्रवर्तकेत्वम् न तत्र प्रवर्तकतया चोदनापेक्षेति, फलांशे न विधिःरागादेव तत्र प्रवृत्त्युपपत्तेः किन्तु साधनेतिकर्त्तव्यतांशयोरेव, क्लिष्टं कर्मेति न्यायेन तत्र विधिमन्तरा प्रवृत्त्यनुपपत्तेः । तस्मात् सिद्धं श्येनस्य स्वरूपेण धर्माधर्मोभयानात्मकत्वं, शत्रुबधस्यानर्थत्वेन तदुपचारतया श्येनस्याधर्मत्वम् ।

ननु न केवलं यागाङ्गहिंसायामनर्थत्वमनुमानेनैवोच्यते, अपि तु आगमेनापि ।

तथा हि "श्रेयान् **द्रव्यमयाद् ज्ञानयज्ञः परन्तप** गी० ४ अ०

विधियज्ञाज्जपयज्ञो **विशिष्टो दशभिर्गुणै**" (म० २-८२) रित्याद्यागमः द्रव्ययज्ञापेक्षया ज्ञानयज्ञस्य प्राशस्त्यं हिंसाभावनिवन्धनमेव वोधयति ।

तथा

मन्त्रवर्णोऽपि "यत्पशुर्मायुमकृतोरोवायद्भिराहते।

अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस"।

इति संज्ञपनादेनो दर्शयति इति चेत्? न। हिंसाबोधक प्रत्यक्षश्रुतिबलादेवं विधागमानामर्थवादत्वाङ्गीकारस्यौचित्यात्। अन्यथा तत्र संज्ञपनादिबोधकश्रुतीनामप्रामाण्यापत्तेरित्यलमनल्पजल्पितेन। **नन्वशक्तमिदं सूत्रमिति—भाष्यम्।**

**भाष्यम्—नन्वशक्तमिदं सूत्रमिमावर्थावभिवदितुम्। चोदना लक्षणो धर्मः, नेन्द्रियादिलक्षणः अर्थश्च धर्मः, न अनर्थइति। हीदं वाक्यं, तदेवं सति भिद्यते। एकम् उच्यते—यत्र वाक्यादर्थोऽवगम्यते तत्रैवम्। तत्तु वैदिकेषु न सूत्रेषु, अन्यतोऽवगतेर्थे सूत्रम् एवमर्थमिदमित्यवगम्यते। तेन च एकदेशः सूत्र्यते इति सूत्रम्। तत्र भिन्नयोरेव वाक्ययोरिमावेकदेशावित्यवगन्तव्यम्। अथवा। अर्थस्य सतश्चोदना लक्षणस्य धर्मत्वमुच्यते इति एकार्थमेवेति।**

ननु चोदना लक्षणो धर्मोः, न प्रत्यक्षादिलक्षणः। तथा अर्थो धर्मः, नानर्थः इत्येतदर्थद्वयबोधनसामर्थ्यं नैकवाक्यस्येत्यभिप्रायेण शङ्कते **नन्वशक्तमिति**। न च पौरुषेयवाक्येषु प्रमाणान्तराधिगतार्थेषु अनुवादकतया वाक्यभेदो न दोषाय विशेषतश्च सूत्रेषु सूत्राणामनेकार्थसूत्रं च न स्वभावस्य गुणत्वादिति वाच्यम्। एषामपि प्रमाणान्तरानधिगतवैदिकार्थज्ञापकतया वेदतुल्यत्वात्। ततश्च वैदिकवाक्यवत्सूत्रेष्वपि वाक्येभेदो दोष एव इति चेत्? सत्यम्। श्रोतुरप्रतीतार्थकत्वे, वक्तुः प्रतीतार्थकतया अपूर्वार्थाभिधानाभावेन संक्षेपविवक्षया वाक्यभेदस्यायुक्तत्वाभावात्। अर्थद्वयप्रतिपादनमेकेन सूत्रेण सम्भवति। अत एव परिसंख्यापक्षे सति सम्भवे वाक्यभेदादिदोषवर्जनमुक्तं संगच्छते। असम्भवे तु वाक्यभेदः सूत्रेष्ववगन्तव्य इत्यभिप्रायेणाह-**उच्यत** इति भाष्यम्। भाष्यस्यार्थः यत्र वाक्यादपूर्वोर्थःप्रमाणान्तरानधिगतोऽर्थः प्रतीयते, तत्र वाक्यभेदो दोषः, सकृदुच्चरितस्य वाक्यस्यार्थद्वयबोधजननसामर्थ्यानङ्गीकारात्; शब्दबुद्धिकर्मणां विरम्य व्यापारा-

भावात् । "सकृदुच्चरितः सकृदेवार्थं गमयती"त्यभियुक्तोक्तेः एकस्मादेव वाक्यादर्थद्वयबोधाभ्युपगमे अर्थनिर्णयो न स्यात्, सर्वत्र तात्पर्यनिर्णायकप्रकरणाद्युपस्थितेरसम्भवात् । अन्यतो वेदवाक्यादवगतार्थेषु सूत्रेषु वाक्यभेदो न । यतः सूत्रं न स्वातन्त्र्येण धर्माधर्मयोर्लक्षणं ब्रूते, पौरुषेयवाक्यत्वेन तद्ग्रहणसामर्थ्याभावात् । किन्तु वेदवाक्यात्तयोर्यादृशं लक्षणमवगतं, तादृशमेवानुवदति वह्वर्थसूचकत्वात्सूत्रस्येत्याह **तेनेति** । एकदेशः चोदनालक्षणोऽर्थो धर्म इति सूत्र्यते, नेन्द्रियादिलक्षणो नानर्थ इत्यपरोंऽशः अर्थाद् गम्यते इति । तदपि वाक्यभेदेन सूचयति लौकिकवाक्ये तस्यादोषत्वादिति भावः ।

ननु सूत्रकारस्यावगतार्थत्वेपि श्रोतॄणामनवगतार्थतया वाक्योच्चारणस्य परार्थकतया श्रोत्रपेक्षयाऽज्ञातज्ञापकत्वात्सूत्रेपि वाक्यभेदो दोष एवेत्याह-**भाष्ये भिन्नयोरेवेति** ।

अयमभिप्रायः-अर्थद्वयबोधनाय सूत्रं द्विरावर्तनीयं चोददालक्षणो धर्म इत्येकं सूत्रम्, अर्थो धर्म इत्यपरं सूत्रं पूर्वसूत्रेऽर्थग्रहणमुत्तरसूत्रसिद्धत्वादनुवादः । एवमुत्तरसूत्रे चोदनालक्षणमनुवादः, उत्तरसूत्रसिद्धत्वात् विध्यनुवादाभिप्रायेण तन्त्रोच्चारितस्य धर्मपदस्य पर्यायेणोभाभ्यां सम्बन्धः । एवं विध्यनुवादतात्पर्येणार्थद्वयबोधने वाक्यभेदो न दोषः, विधेयार्थद्वयतात्पर्येण तस्य दोषत्वात् ।

तथा चेदृक् सूत्रार्थः—यश्चोदनालक्षणः, स धर्म इति चोदनालक्षणमनूद्य, धर्मो विधीयते । ततः योऽयं धर्म, सोऽर्थ एव, नाऽनर्थ इति ।

नन्वेवमर्थाभ्युपगमे अर्थो धर्म इति वाक्ये चोदनापदस्यासम्बन्धात् अचोदनालक्षणस्यापि अर्थस्य धर्मत्वं स्यात् । एवमुत्तरसूत्रे चोदनालक्षण इत्येतावन्मात्रोक्त्या चोदनालक्षणस्यानर्थस्यापि धर्मत्वं स्यादिति चेत् ? न । अन्वितार्थकयोरेव परस्परसम्बन्धाभ्युपगमात् न केवलयोः । उत्तरसूत्रे चोदनालक्षणस्यैव धर्मत्वकथनात्, अर्थो धर्म इति पूर्वसूत्रेपि तादृशार्थक एव धर्मपदसम्बन्ध इति नानर्थस्य धर्मत्वं परस्परसाहचर्यादिर्थात्मक एव चोदनालक्षणो धर्म इति सिद्धम् । अर्थोपि चोदनालक्षणविशिष्ट एव धर्मः, नेन्द्रियादिलक्षण इति सिद्धम् ।

समाधानान्तरंभा०—अयमर्थः योर्थः स धर्म इत्यर्थात्मकं चोदनालक्षणं विशिष्टमनूद्य धर्मत्वविधानेऽपि वाक्यभेदः स्फुट एव । योऽर्थः चोदनालक्षण इत्यनुवादकं वाक्यं, स धर्म इति विधायकमिति विध्यनुवादाभ्यां वाक्यभेदे सिद्धे किं कल्पान्तरानुसरणेनेतिचेत् ?

तन्त्रेणोच्चरितस्य धर्मपदस्य वाक्यद्वये सम्बन्धस्वीकारेण वाक्यभेदस्य कथञ्चित्परिहर्तुं शक्यत्वात् । चोदनालक्षणमनूद्य धर्मत्वविधौ अनर्थस्यापि श्येनादेश्चोदनालक्षणसम्भवात् तस्य धर्मत्ववारणाय अर्थग्रहणमावश्यकम् । धर्ममनूद्य चोदनालक्षणविधौ तु अर्थात्मकस्यैव धर्मस्य प्रसिद्धया व्यावर्तकाभावादनर्थकमर्थग्रहणमिति चेत् ? सत्यम् । अस्मिन्पक्षे नित्यानुवादार्थकतया नार्थग्रहणवैयर्थ्यम्, एतद्भावे चोदनालक्षणो धर्म इत्येतावन्मात्रं सूत्रं स्यात् । तथा सति यश्चोदनालक्षणः, स धर्म इत्यपि वचनव्यक्तिः स्यात् । एवं च चोदनालक्षणस्यानर्थस्यापि धर्मत्वं प्रसज्येत इति, तद्व्युदासाय अर्थग्रहणम् । अर्थग्रहणे कृते तु योऽर्थोः, स चोदनालक्षण इति वचनव्यक्तये नित्यानुवादोऽर्थशब्दः प्रयुज्यते ।

ननु यदि ईदृशी वचनव्यक्तिः, तर्हि कथं भाष्यकारेण अनर्थ उक्तौ माभूदित्यर्थग्रहणं कृतमित्युक्तम् । अयमभिप्रायो भाष्यकारस्य—अर्थपदस्य विशेषणत्वं विनापि तदुपादानसामर्थ्यादिवानर्थस्य धर्मत्वप्रापकतादृशवचन व्यक्तिर्न भवति इति तदुपादानस्यानर्थनिवृत्तिः फलमित्यभिप्रेत्यानर्थो धर्म इत्यभिहितं भाष्यकारेण । एवं च वचनव्यक्तिविशेषपरिग्रहार्थोऽर्थशब्द इति भाष्याभिप्रायः ।

प्रमाणवचनव्यक्त्याश्रयणे प्रमाणलक्षणस्यादौ निवेश उपपद्यते, तत्प्रतिज्ञानात् । स्वरूपवचनव्यक्त्याश्रयणे तु धर्मस्वरूपपरं भेदलक्षणमेवादौ क्रियेत । न च तथाऽकरोत् । तस्मात्सूत्रकारस्यैषैव वचनव्यक्तिरभिप्रेतेत्यन्ये ।

अर्थस्य ज्योतिष्टोमादेश्चोदनालक्षणस्य धर्मत्वमुच्यते योऽर्थश्चोदनालक्षणः स धर्म इति वचनव्यक्तेरिति भाष्यार्थः । वस्तुतस्तु एवं रीत्यार्थाभ्युपगमे विध्यनुवादाभ्यां वाक्यभेदापत्तिस्तदवस्थैवेति पूर्वोक्तपरिहार एव साधीयान् ।

**इति शाबरभाष्य-व्याख्यायां कल्पकलिकायां (चोदनाविवरणम्) धर्मलक्षणाधिकरणम्**

## अथ निमित्तपरीष्ट्यधिकरणम्

**सूत्रम्—तस्य निमित्तपरीष्टिः ॥ ३ ॥**

**भाष्यम्—उक्तमस्माभिः चोदना निमित्तं धर्मस्य ज्ञानमिति तत्प्रतिज्ञामात्रेणोक्तम्, इदानीं तस्य निमित्तं परीक्षिष्यामहे । किं चोदनैवेति अन्यदपीति तस्मान्न तावन्निश्चीयते चोदनालक्षणोऽर्थोधर्म इति । तदुच्यते ।**

ननु चोदनालक्षणोर्थो धर्म इति प्रतिज्ञाते तदुपपादकहेत्वभिधानमेवाकाङ्क्षितत्वादुचितमिति, तदुपेक्ष्य धर्मनिमित्तपरीक्षाप्रतिज्ञा असंगतेति चेत् ? न । प्रमाणस्वरूपयोरविशेषेण प्रतिज्ञानात्कस्य प्रतिज्ञाभागस्य सदौत्पत्तिक सूत्राभ्यां हेतुरभिधीयते इति विशिष्य निर्णयाभावात्, स्पष्टप्रतिपत्तये अस्मिन्पादे चोदनाख्यधर्मनिमित्तस्य परीक्षणं प्रतिज्ञायत इत्यभिप्रायात् ।

अयं सूत्रार्थः तस्य धर्मस्य ज्ञाने यन्निमित्तं चोदनेति, तत्परीष्टिः परीक्षा कर्तव्येति । इषुगतावित्यस्माद्धातो''रिषेरनिच्छार्थस्ये''ति युचि ''परेर्वे''ति क्तिन् युचो विकल्पस्मरणाद् युज्विधौ पर्येषणेति रूपं, क्तिन्विधौ तु परीष्टिरिति रूपं सिद्ध्यति । परिपूर्वकादीक्षधातोः क्तिनि आगमशास्त्रस्यानित्यत्वाभ्युपगमादिडभावे स्कोरितिकलोपे ष्टुत्वे परीष्टिरिति सिद्धम् । परीक्षणं परीष्टिरित्यर्थः । तस्य धर्मविषयकतत्त्वज्ञानस्य यन्निमित्तं कारणं चोदनाख्यं तस्य परीष्टिः परीक्षा । युक्तिपूर्वकसाधकतर्ककलापैः विचारः कर्तव्य इत्यन्ये । तथा च तस्येत्यनेन न धर्मस्य ग्रहणं, किन्तु तज्जानस्य, ज्ञानं प्रत्येव चोदनाया निमित्तत्वात् । अत एव चोदनानिमित्तं धर्मस्य ज्ञानमितिभाष्ये उक्तम् । ज्ञापकार्थकनिमित्तपदाश्रयणे तु तस्य धर्मस्य ज्ञापकं यच्चोदनेति, तत्परीष्टिरित्यर्थोपि संगच्छते । परन्तु ज्ञानपदोपादानं भाष्ये निर्बीजं स्यात् ।

प्रतिज्ञामात्रेणोक्तमिति । नन्विदमयुक्तं **चोदना हि भूतमित्यादिना** हेतूनां तत्र प्रदर्शितत्वादिति चेत्, न । सूत्रकारेण तन्नाभिहितमिति,

तत्तात्पर्येणैतद्भाष्यसंगतेः। सूत्रकृता प्रतिज्ञामात्रेण धर्मस्य ज्ञानं चोदनानिमित्तमित्युक्तम्। तत्र हेतुर्नोक्त इत्यर्थः।

अथवा भूताभिधानसामर्थ्यप्रतिपादनद्वारा प्रदर्शनतात्पर्येणैव भाष्यकृता चोदना हि भूतमित्याद्युक्तं, न प्रतिज्ञातार्थसाधनप्रदिदर्शयिषया इति, स्वतात्पर्येणाप्येतद्भाष्यं साधु संगच्छते।

अन्यदपीति। प्रत्यक्षाद्यपीति यावन्निमित्तपरीक्षणं न क्रियते, हेत्वादिप्रदर्शनेन तावच्चोदनैव निमित्तमिति न निश्चीयते, प्रतिज्ञामात्रेणार्थसिद्धेरदर्शनाद् "एकाकिनी प्रतिज्ञाहि प्रतिज्ञार्थं न साधयेदि"त्यभियुक्तोक्तेरिति भावः।

**इति कल्पकलिकायां शाबरभाष्यव्याख्यायां तृतीयं निमित्तसूत्रविवरणं निमित्त परीष्ट्यधिकरणं सम्पूर्णम्।**

**चतुर्थं धर्मे प्रत्यक्षाद्यप्रामाण्याधिकरणम्।**

सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धि-जन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्॥ ४॥

**भाष्यम्—इदं परीक्ष्यते प्रत्यक्षं तावदनिमित्तम्। किं कारणम्। एवं लक्षणकं हि तत्। सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धि जन्म तत्प्रत्यक्षम्। सति इन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धिर्जायते तत्प्रत्यक्षम् भविष्यंश्च एषोऽर्थो न ज्ञानकालेऽस्तीति। सतश्चैतदुपलम्भनम् नासतः।**

प्राचीन वृत्तिकारेण भवदासेन 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमि'त्येतत्पर्यन्तमेकं सूत्रं कृत्वा प्रत्यक्षलक्षणपरतया व्याख्यातम्। अनिमित्तं विद्यमानोपलम्भत्वादित्यपरं सूत्रं मत्वा पूर्वसूत्रलक्षणलक्षितं प्रत्यक्षं धर्मं प्रत्यनिमित्तं, प्रत्यक्षस्य विद्यमानोपलम्भत्वात् धर्मस्य च भाव्यत्वादित्यर्थकतया व्याख्यातमिति।

तन्न। सूत्रकारस्याजिज्ञासितार्थाभिधायित्वप्रसङ्गात्। पूर्वसूत्रे प्रतिज्ञाद्वयी कृता चोदनैव प्रमाणं, सा च प्रमाणमेवेति, तयोरेकत्राप्यंशे इदं न संगच्छते। प्रत्यक्षलक्षणं न प्रक्रान्तं, येन तन्निरुक्तेरवसरः स्यात्। अपि च प्रत्यक्षस्यैव विशिष्य लक्षणं किमिति कृतं अनुमानादेरपि सत्त्वात्।

तेषामपि लक्षणकरणमावश्यकम् । न च तानि प्रमाणान्येव न सम्भवन्तीति इति वक्तुं शक्यं, प्रमाणत्वेनाङ्गीकारात् ।

न वा प्रत्यक्षेऽन्तर्भवन्ति, येन प्रत्यक्षलक्षणेनैव संगृहीतानि भवेयुः । न च प्रत्यक्षलक्षणनिरूपणानन्तरं तत्पूर्वकत्वात्तेषां पृथक् लक्षणं विनापि ज्ञानं भवेदिति, न तल्लक्षणकरणापेक्षेति वाच्यम्, तेषामवान्तरलक्षणस्वरूपादि-परिच्छेदाय तदावश्यकत्वात् । लोकप्रसिद्धत्वाद् न तल्लक्षणापेक्षेति तु न सत्, प्रत्यक्षस्यापि लोकप्रसिद्धतया तल्लक्षणस्याप्यनपेक्षितत्वापत्तेः ।

अपि च बहूनां प्रमाणानामेकतमस्यैव लक्षणकरणे प्रमाणान्तरस्य लक्षणकरणे सूत्रकारस्याशक्तिर्वा बोधिता स्यात्, प्रमाणान्तरेऽनभिमतिर्वा सूचिता स्यादन्यथा एकस्यैव लक्षणप्रणयनमयुक्तं स्यात् । सम्पूर्णसूत्रस्यैक-वाक्यत्वसम्भवे वाक्यभेदकल्पनाया अप्ययुक्तत्वम्, लक्षणस्यातिव्यापकत्वञ्च दोषः । स्मरणस्याप्येवंविधत्वात् । किं वा स्वप्नज्ञानं विहाय सर्वत्र विभ्रमे लक्षणातिव्याप्तिस्तेषामपि अधिष्ठानेन्द्रियसन्निकर्षजत्वात् ।

ननु न येन केनचिदिन्द्रियसंप्रयोगो विवक्षितः, किन्तु यद्विषयकं ज्ञानं जायते, तेनेन्द्रियसन्निकर्षोऽभिमतस्तथा चेदं रजतमित्याभासे नातिव्याप्ति-स्तस्य रजतेन्द्रियसन्निकर्षजत्वाभावाभावादिति चेत् ? न । सत्सम्प्रयोगस्ये-दृशार्थकत्वाभावात् । न चेदृशार्थलाभाय तत्सतोर्व्यत्यासः कार्यः, तत्सम्प्रयोग इति । सत् प्रत्यक्षमिति । ततश्च प्रत्यक्षं द्विविधं सत्, आभासं च । आद्यमेव प्रमाणत्वेनेष्टम्, तत्संप्रयोगजं प्रत्यक्षं प्रमाणम्, अन्यसम्प्रयोगजमाभासम् । यथा शुक्तौ इदं रजतम् ।

ननु ज्ञानमात्रे विषयेन्द्रियसन्निकर्षस्य हेतुतया विशेषणोपादानमन्त-रापि येन केनचिदर्थेनेन्द्रियसन्निकर्षस्य स्वत एव लाभे सत्सम्प्रयोगस्य सार्थक्याय ग्राह्यविशेषणत्वमेवाङ्गीक्रियते । एवं च यद्विषयकं ज्ञानं, तेनैवे-न्द्रियसन्निकर्षो वाच्यस्तथा चाभासे नातिव्याप्तिरित्यपि न । शुक्तिशकला-देरपि सत्त्वादाभासस्यापि सत्सम्प्रयोगजत्वेनापरिहारात् । नहि शब्दसार्थक्याय वाच्यार्थकल्पनं सम्भवति, स्वप्नादिज्ञानव्यावर्तनाय तत्सार्थक्याच्च ।

यत्तु धर्मं प्रत्यनिमित्तत्वबोधनाय प्रत्यक्षलक्षणानुवादः । तदपि न । पुरोवर्तिन एवानुवादत्वेन प्रकृते तदभावात् । नहि यत् सतीन्द्रियसम्प्रयोगे

१०

ज्ञानं ज्ञायते, तत्प्रत्यक्षं प्रतीयतामिति वचनव्यक्तिः, किन्तु लोकप्रसिद्धस्य प्रत्यक्षस्य सत्सम्प्रयोगजन्यत्वात् विद्यमानोपलम्भनत्वम्, अतो भाविनि धर्मे अनिमित्ततेति वचनव्यक्तिरेव साधीयसी ।

ननु **प्रत्यक्षमनिमित्तमेवंलक्षणकत्वा**दितिभाष्योक्त्या लक्षणानुवादः स्फुट एव प्रतीयते इति चेत् ? न। भावानवबोधात् । न प्रत्यक्षस्वरूपलिलक्षयिषया तत्स्वरूपोक्तिः अपितु धर्मं प्रति अनिमित्तत्वमित्येतद्बोधनाय, कुतः ? एवं लक्षणकत्वात्, किन्तल्लक्षणं ? विद्यमानोपलम्भनत्वं, कुतो विद्यमानोपलम्भनत्वम् सत्संप्रयोगजत्वात् । तथा च सत्सम्प्रयोगजत्वहेतुकविद्यमानोपलम्भनत्वं प्रत्यक्षस्य धर्मः । अतः प्रत्यक्षं धर्मं प्रत्यनिमित्तमिति तद्भावः । सत्सम्प्रयोगजत्वसिद्धिः कुतः ? अत्र प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् । विद्यमानोपलम्भनत्वं च सत्सम्प्रयोगजत्वात् सत्सम्प्रयोगजत्वञ्च प्रत्यक्षत्वादिति त्रयः प्रयोगा बोध्याः ।

ननून्नतमेघदर्शनेन भविष्यति वृष्टिरित्यनुमानेपि मेघेन्द्रियसम्प्रयोगजत्वस्य सत्त्वेनातिव्याप्तिरिति चेत् ? न । सच्छब्दस्य वर्तमानार्थकतया सत्सम्प्रयोगसमानकालिकस्य ज्ञानहेतुतया विवक्षणेन प्रकृते तदभावेन दोषविरहात् । लिङ्गज्ञानमुत्पाद्य विरतव्यापारे इन्द्रिये पश्चाल्लिङ्गज्ञानेनानुमितिर्जायते इति अनुमितिकाले इन्द्रियव्यापारस्यासत्त्वान्न वर्तमानत्वमिति भावः ।

नन्वेवं भवदासमतेप्यनुमानेऽतिव्याप्तिर्वारयितुं शक्यते, सन्संप्रयोगः सत्संप्रयोगः इति विग्रहाभ्युपगमेन सदर्थस्य विषयाविशेषणतयेन्द्रियसन्निकर्षस्यैव विशेषणत्वस्वीकारेण भविष्यद्वृष्ट्यनुमाने सन्निकर्षस्याविद्यमानत्वादिति चेत् ? न । तेन हि सता सम्प्रयोगः सत्सम्प्रयोग इति विग्रह प्रदर्शनात् । ग्राह्यविशेषणतयैव सच्छब्दार्थस्य व्यवस्थापितत्वात् । यदि तु तन्मतेपि सदर्थस्य सम्प्रयोगविशेषणत्वं परित्यज्य, ग्राह्यविशेषणत्वमेवाङ्गीक्रियते तदा पीतः शङ्ख इत्याद्याभासेऽतिव्याप्तिः स्फुटैव ।

ननु लोकप्रसिद्धप्रत्यक्षानुवादेन धर्मम्प्रति अनिमित्तत्वमेव विधीयते, धर्मम्प्रति प्रत्यक्षमनिमित्तम्, अप्रमाणं, विद्यमानोपलम्भनत्वात् विद्यमानार्थग्राहित्वात् । धर्मश्च न वर्तमानः, यजेतेत्यादिवाक्येन त्रिकालानवच्छिन्नस्यैव धर्मस्य बोधनात् । तर्हि लक्षणाभिधानस्य किम्प्रयोजनमिति चेत् ? इदं प्रत्यक्षं धर्मम्प्रत्यनिमित्तं विद्यमानोपलम्भनत्वादित्यत्र यदि कश्चिद् हेत्व-

सिद्धिमुद्भावयेत्, तत्र विद्यमानोपलम्भनं कुतः? तदा एवं वक्तव्यम्। विद्यमानोपलम्भनं प्रत्यक्षं सत्संप्रयोगजत्वात्, सत्सम्प्रयोगजत्वस्याप्यसिद्धिशङ्कायां, तदपि प्रत्यक्षत्वेन साधनीयम्। सत्सम्प्रयोगजं प्रत्यक्षं, प्रत्यक्षत्वात्। एवं च प्रत्यक्षं न धर्मग्राहि प्रत्यक्षत्वादस्मदादिप्रत्यक्षवत्। न च प्रत्यक्षमात्रस्य पक्षत्वाभ्युपगमे तदतिरिक्ते हेतोरवृत्तेर्दृष्टान्तासिद्धिः, अस्मदादिप्रत्यक्षस्य धर्मम्प्रत्यनिमित्तत्वसाधने सिद्धसाधनं चेति चेत्? न। योगिप्रत्यक्षस्यैव पक्षीकरणात् निश्चितसाध्यसाधनवत एव दृष्टान्ताङ्गीकारेणास्मदादिप्रत्यक्षस्यैव दृष्टान्तत्वसम्भवात्। एवञ्चोक्तानुमानेषु योगिप्रत्यक्षस्य पक्षत्वात् अस्मदादिप्रत्यक्षदृष्टान्तेन साधनात् न दृष्टान्तासिद्धिः, न वा सिद्धसाधनम्।

अत्र सत्संप्रयोगजत्वप्रत्यक्षत्वयोर्व्याप्तिः स्फुटैव। लक्षणपक्षे यथानुमानादिलक्षणं कुतो न कृतम्, तथा धर्मम्प्रति अनिमित्तत्वप्रतिपादनेऽपि अनुमानादीनामनिमित्तत्वं कुतो न दर्शितमित्याक्षेपो न युक्तः। प्रत्यक्षपूर्वकत्वादनुमानादेः प्रत्यक्षनिवृत्तौ नानुमानादेरवकाशः। धर्मस्याप्रत्यक्षत्वे तन्निरूपितव्याप्तेर्दृष्टान्तस्य चाग्रहणात्। लक्षणपक्षे प्रत्यक्षलक्षणेनानुमानादिलक्षणस्यागतार्थत्वात् न प्रत्यक्षलक्षणवदन्यस्यापि लक्षणस्य निरुक्तौ पर्य्यनुयोगः सम्भवति। अनिमित्तत्वप्रतिपादने तु प्रत्यक्षस्यानिमित्तत्वकथनादेवान्येषां अनिमित्तत्वं ज्ञायत एवेति, न पृथक् तदुक्तिः।

ननु सत्सम्प्रयोगजत्वस्याभासेपि सत्त्वेन तस्यापि प्रत्यक्षत्वापत्तिः, नहि प्रत्यक्षलक्षणमुच्यते येनातिव्याप्तिराभासे दीयेत। किन्तु धर्मं प्रत्यनिमित्तं प्रत्यक्षम्, एवंलक्षणकत्वात्। लौकिकप्रत्यक्षस्यैवं लक्षणकत्वमस्त्येव। यदि आभासस्यापि एवंलक्षणकत्वमस्ति तदा तदपि धर्मम्प्रत्यनिमित्तमेवेति न कश्चिद् दोष इति।

शाक्यास्तु शरीरेन्द्रियाद्यावरणावृत एव जीवोऽल्पज्ञो भवति, इन्द्रियादिसम्बन्धादेव जानाति, निर्मुक्तदेहाद्यावरणस्स्वत एव सर्वं स्थूलं सूक्ष्मं व्यवहितं विप्रकृष्टं सन्निकृष्टं पश्यति इति, धर्माधर्मौ अपि पश्यत्येवेति विद्यमानोपलम्भत्वं योगिप्रत्यक्षस्यासिद्धमित्याहुः।

तन्निराकरणाय सूत्रकारेण प्रत्यक्षमात्रस्य विद्यमानोपलम्भत्वमुच्यते। एवं च योगिप्रत्यक्षं न धर्मग्राहकं प्रत्यक्षत्वादस्मदादिप्रत्यक्षवद्।

यद्वा धर्मो न प्रत्यक्षः अनागतत्वाद् भविष्यद्वृष्टिवत् । तथा च नाश्र-यासिद्धिरपि, न वास्मदादिप्रत्यक्षमादाय सिद्धसाधनम् । विशिष्य धर्मस्य प्रत्यक्षत्वाभ्युपगमेन नार्थान्तरमितिद्योतनाय लोकप्रसिद्धं सत्संप्रयोगजत्वं विद्यमानोपलम्भसाधनार्थमाह जैमिनिः ।

ननु लौकिकप्रत्यक्षेऽस्तु एवमेव, भावनाप्रकर्षजं योगिविज्ञानन्तु अविद्यमानोपलम्भनमपि स्यादिति, तत्र तदसिद्धमिति चेत् ? न । लौकिकप्रत्यक्षस्य तद्विपरीतस्वभावकल्पनानौचित्यात् । योगिप्रत्यक्षं विद्यमानोपलम्भनं प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदित्यनुमानसम्भवाच्च । विद्यमानोपलम्भनन्तु सत्सम्प्रयोगजत्वेन पूर्वोक्तदिशावसेयम् । तैलधारावदविच्छिन्नस्मृतिसन्ततिरेव भावना । सा चानुभूतविषया भवति । धर्मश्च न शव्दातिरिक्तप्रमाणेनानुभूत इति, कथं तद्भावना ।

एवमेव वैशेषिकाभ्युपगतं प्रातिभं ज्ञानं निरसनीयम् । ते हि भावनाप्रकर्षजं योगिज्ञानं धर्ममपि गृह्णन्तीत्याहुः । अपि च तन्मते अस्मदादिज्ञानमपि क्वचिदनागतविषयकं प्रमाणं श्वो मे भ्राताऽगन्तेत्यत्र तैर्दर्शितम् ।

यदाहुः । "नानर्थजं न सन्दिग्धं न वाधविधुरीकृतम् ।
न दुष्टकारणं चेति प्रमाणमिदमिष्यताम्" ।

क्वचिद् वाधकयोगादस्तु तदप्रमाणता, किन्तु यत्रापरेद्युर्भ्राता आगतः तत्र किमुत्तरम् ।

ननु भाविज्ञानविषयस्य भ्रात्रागमनस्य तदानीमसत्त्वेनार्थजत्वाभावात्कथं तस्य प्रामाण्यमिति चेत्?उच्यते । यदीदृशं ज्ञानं भ्रात्रागमनं वर्तमानत्वेन गृह्णीयात्, स्यादप्रमाणम्, भावित्वेन गृह्णत् ज्ञानं विषयावाधात्कथं न प्रमाणम् । भवतु प्रमाणं तावतापि इन्द्रियार्थसन्निकर्षजत्वाभावात् कथं प्रत्यक्षमिति न शङ्क्यम् । मनःसन्निकर्षेण तस्य जायमानत्वात् । न च वाह्ये वस्तुनि तस्य स्वातन्त्र्याभावात् कथमेतत् ? सुरभि चन्दनमित्यादौ चाक्षुषविषयचन्दनविशेषणीभूतगन्धादेर्नासाव्यापारं विनापि मनसा ग्रहणवत् प्रकृतेऽपि सम्भवात् । न वर्तमानमात्रग्राहित्वं प्रत्यक्षस्येति अस्मदादिप्रातिभज्ञानवद् भविष्यति धर्मे योगिनां प्रत्यक्षं प्रमाणं सम्भवतीति न चोदनैव तत्र प्रमाणमिति संक्षेपः ।

तन्न । पाणौ कति वराटकाः सन्तीत्यादाविवाभासस्यापि दर्शनेना-प्रमाणत्वात् । नहि क्वचित्काकतालीयन्यायेन विषयावाधदर्शनमात्रेण तज्जातीयज्ञानमात्रस्य प्रामाण्यं कल्पयितुं शक्यं, बहुलं व्यभिचारदर्शनात् । अतः योगिनामपि प्रातिभं ज्ञानमनागते न प्रमाणं, लिङ्गाभासजत्वात् इति, विद्यमानोपलम्भसाधनौपयिकं सत्सम्प्रयोगजत्वं व्याख्यातम् ।

यद्वा धर्मो न प्रत्यक्षः, भावित्वाद् भविष्यद्वृष्ट्यादिवदित्यादौ अनागतार्थविषयकयोगिप्रत्यक्षे भविष्यत्वस्य व्यभिचारनिरासाय सत्सम्प्रयोगजत्व-विशेषणमुक्तं सूत्रकारेण । तथा च योगिनां तादृशप्रत्यक्षे प्रमाणाभावान्न व्यभिचारः ।

ननु भाविनो धर्मस्याप्रत्यक्षत्वोपपादनेऽपि उत्पन्नस्य तस्य प्रत्यक्षत्वं स्यादेवेति चेत् न । यागादेः फलसाधनरूपेणैव धर्मत्वाङ्गीकारेण यागानुष्ठानसमये भाविनः फलस्यासत्त्वेन तत्साधनत्वग्रहस्य वक्तुमशक्यतया यागानुष्ठानोत्तरं फलसद्भावदशायां साधनीभूतयागादेः चिरविनष्टतया धर्मिणोऽभावेन तत्साधनत्वग्रहस्य सुतरामशक्यत्वात् । अपूर्वं धर्मं इति वादिनां मतेऽपि न प्रत्यक्षम्, अन्यथा प्रत्यक्षप्रमाणपूर्वकत्वापत्त्या तस्य स्वरूपप्रच्युतिरेव स्यात् । फलजननशक्तिरेव यागधर्मं इति मतेऽपि प्रत्यक्षं तत्रासम्भवि सर्वशक्तीनामप्रत्यक्षत्वात् । तथा च योगिनां प्रत्यक्षं न धर्मविषयकं विद्यमानोपलम्भत्वादस्मदादिप्रत्यक्षवदिति सिद्धम् । एवं प्रत्यक्षत्वादित्यपि वोध्यम् ।

यत्तु सदसतोः सम्बन्धानर्हतया असतेन्द्रियसम्प्रयोगासम्भवेन सता सम्प्रयोग इति सत्पदोपादानमन्तरापि सामर्थ्यादेव लब्धे तदुपादानमनर्थकम् । यदाह–"सदित्यसद्व्युदासाय न नियोगात् संगंस्यते ।

सम्प्रयोगो हि नियमात् सत एवोपपद्यते" इति । प्र०वा०प्र० परि०

तदसत् सूत्रार्थानवबोधात् । नह्यत्र तृतीया तत्पुरुषः, किन्तु कर्मधारयः । संश्चासौ सम्प्रयोगश्चेति । तथा च वर्तमानार्थकसच्छब्दोपादानादेवाऽतीतानागतादिविषयकं योगिनां प्रत्यक्षं निराक्रियते, नान्यथेति तदुपादानमावश्यकम् ।

न च सत्सम्प्रयोग इति निमित्तसप्तम्यैव सम्प्रयोगस्य वर्तमानत्वं लभ्यते, अतीतानागतयोर्निमित्तत्वासम्भवात् कार्यनियतपूर्ववर्त्तित्वस्य तत्त्वात् । भिन्नकालिकयोर्निमित्तनैमित्तिकभावाभावात् किं सत्पदोपादानेनेति चेत्, । न

भविष्यत्सम्प्रयोगाद् भविष्यदर्थविषयकं योगिज्ञानं जायते इत्येतन्निरासाय तदावश्यकत्वात् । अन्यथा अतीते अनागते वेत्यपि भ्रान्तिः स्यात् । संशब्दः सम्यगर्थः, प्रयोग इन्द्रियाणामर्थेषु व्यापारः । तथा च सम्प्रयोगोपादानं दुष्टप्रयोगवारणाय, तेन दुष्टकरणानां शुक्तौ इदं रजतमित्याद्याभासज्ञानजनकानां व्युदासः ।

सता सम्प्रयोग इति भवदासव्याख्यायां सम्प्रयोगस्य सकलसम्बन्धपरत्वेन व्याख्यातत्वादाभासे अनुमानादौ चातिव्याप्तिः स्फुटैवेतीन्द्रियव्यापारतया व्याख्यातम् । तथा चादुष्टेन्द्रियव्यापाराभावान्न तत्र दोषलेशः ।

बौद्धास्तु सम्प्रयोगशब्दं व्याप्तिपर्यायं जानन्तः श्रोत्रचक्षुषोरप्राप्यकारित्वाल्लक्षणमव्यापकमाहुः, तदतिस्थवीयः । चक्षुषः प्राप्यकारित्वात् । ननु अप्राप्यकारि चक्षुः सान्तरग्रहणात् पृथुतरग्रहणाच्च सान्तरस्य विप्रकृष्टदेशस्थितस्य पदार्थस्य ग्रहणात्, अत एव दूरे ग्रामं पश्यामीति प्रत्यय उपपद्यते । चक्षुषः प्राप्यकारित्वे तु इदं न संगच्छेत । ग्राहकेण चक्षुषा दूरत्वाभावात् । यथा समीपस्थितं वस्तु चक्षुःसम्बद्धं, तथा दूरस्थमपीति वैलक्षण्यानुपपत्त्या अप्राप्यकारित्वमेव युज्यते इति चक्षुरप्राप्तिकृतमेव दूरत्वम् । तथा च तैरुक्तम् "रूपोपलब्धिसंवर्त्तकेन कर्मणा तत्तृष्णापूर्वकेण चक्षुरभिनिर्वृतमतोरूपोपलब्धेः कारणं भवति" । अस्यार्थः, रूपसाक्षात्कारसम्पादकेन तदिच्छापूर्वकानुष्ठितेन प्राक्तनकर्मणा चक्षुरुत्पन्नम्, अतो रूपसाक्षात्कारकारणम् । न चालोकसहकृतस्यापि कृष्णसारस्य चक्षुषः दूरस्थेन प्राप्तिरिति, सान्तरग्रहणात् अप्राप्यकारि चक्षुः ।

अपरे तु चक्षुरप्राप्यकारि सान्तरग्रहणात् । यन्नैवं तन्नैवम् । यथा घ्राणम् । पृथुतरग्रहणाच्च स्वल्पस्य चक्षुषः महति सेनावनादौ सर्वतः संयोगो न भवितुमर्हति, द्व्याश्रयस्य संयोगस्य परिच्छिन्नवृत्तिकत्वात् घटाकाशसंयोगवत् । दिग्देशग्रहणादपि चक्षुषोऽप्राप्यकारित्वम् । प्राप्यकारित्वे तु दिग्देशव्यपदेशो न स्यात् घ्राणादिवत् । सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणाच्च । यथा गन्ता दूरं चिरेण अदूरमचिरेण प्राप्नोति, तथा चक्षुषः प्राप्यकारित्वे स्वस्थानाददूरस्याविलम्बेन दूरस्थस्य विलम्बेन प्राप्तिः स्यात् । तथा च शाखाचन्द्रमसोस्तुल्यकालोपलब्धिर्न स्यात् । नहि समीपस्थे मन्दगतिर्दूरस्थे शीघ्रगति-

रिति कल्पयितुं शक्यते, प्रमाणाभावात् । यथोक्तं दिङ्नागेन—

"सान्तरं ग्रहणं न स्यात् प्राप्तौ ज्ञानेऽधिकस्य च,
अधिष्ठानाद्बहिर्नाक्षं तच्चिकित्सादियोगतः,
सत्यपि च बहिर्भावे न शक्तिविषये क्षणे,
यदि च स्यात्तदा पश्येदप्युन्मील्य निमीलनादिति" ।

सत्सम्प्रयोगजत्वमेवासिद्धं विषये सम्प्रयोगाभावादित्याहुः,

तन्न । सान्तरग्रहणादित्यस्य कोऽर्थः । सान्तरस्याऽप्राप्तस्य ग्रहणं, किम्वा सान्तरेण ग्रहणमिति । तत्र नाद्यः । अप्राप्यकारि अप्राप्तग्रहणादिति प्रतिज्ञातार्थाविशेषात् । न द्वितीयः सान्तरेण ग्रहणमित्यत्रान्तरपदार्थानिरुक्तेः आकाशादेरचाक्षुषत्वात् अभावस्य चास्वातन्त्र्यात् रूपवतो द्रव्यस्य व्यवधायकत्वात् न चान्यागतिरिति, रिक्तं वचः सान्तरग्रहणादिति । तस्मात् शरीरापेक्षया निरन्तरं सान्तरं च भवति । यच्छरीरेन्द्रियादिसम्बद्धं तन्निरन्तरं, तदसम्बद्धं तु सान्तरम्, नेन्द्रियप्राप्त्यप्राप्तिनिमित्तके ते । यच्छरीरेन्द्रियोभयसम्बद्धं तन्निरन्तरं, यत्तु शरीरासंबद्धं केवलेन्द्रियसम्बद्धं तत्सान्तरमिति । हेत्वन्तरमुक्तं सान्तरग्रहणं नाप्राप्यकारित्वे नियामकमिति न चक्षुरप्राप्यकारि ।

यदपि पृथुतरग्रहणादिति । तदप्यसंगतं सम्बन्धमात्रेण ह्रस्वस्य महतो वा ग्रहणात् । शरीरावधिनिमित्तत्वाद् दिग्देशस्यान्यथोपपत्तेः शाखाचन्द्रमसोस्तुल्यकालग्रहणस्य चानभ्युपगमादेव निरासः । अतिसूक्ष्मतया क्षणभेदस्यानाकलनम् उत्पलपत्रशतव्यतिभेदनवदिति मिथ्याप्रत्यय इति । विस्तरस्त्वन्यत्र द्रष्टव्यः । तस्मात्प्राप्यकारि चक्षुरिन्द्रियत्वाद् घ्राणादिवत् । कस्यचिदिन्द्रियस्य प्राप्यकारित्वानभ्युपगमे तु एवमनुमानम्—सर्वमिन्द्रियं प्राप्यकारि करणत्वात् वाश्यादिवदिति बोध्यम् । चक्षुः प्राप्यकारि इन्द्रियत्वात् त्वगादिवत् ।

ननु कृष्णसारस्य, कर्णशष्कुल्यवच्छिन्नाकाशस्य च शरीरे एव दर्शनाद्विषयदेशप्राप्त्यनुमानं दृष्टविरुद्धत्वान्नोत्पत्तुमर्हति इति चेन् ? न । आहंकारिकत्वादिन्द्रियाणामतिसूक्ष्मतया दर्शनानर्हत्वेन तादृशानुमानस्य प्रत्यक्षविरुद्धत्वाभावात् इति सांख्याः । ननु गोलकादीनामेवेन्द्रियत्वं, तत्रैव चिकित्सया तदुपकारदर्शनादिति, न । अधिष्ठेयस्येन्द्रियस्योपचिकीर्षया

अधिष्ठानोपचारकरणात् । अत एव नेत्रोपकाराय चरणोपचारः संगच्छते । देशान्तरोपचाराद्देशान्तरे उपकारो न दृष्टविरुद्ध इति भावः। तथा चाधिष्ठानावच्छिन्नस्यैवेन्द्रियस्य दीपप्रभावद्वहिर्गमनं सूपपादम् । शुद्धस्नेह-दानेन प्रभागतातिशयवदधिष्ठानोपचारेण विषयगतस्येन्द्रियमरीचेः उपकारः सम्भवति । दीपप्रभावदेव निरन्तराधिकग्रहणमपि समर्थनीयम् । यथा स्वल्पोऽपि दीपः प्रभा द्वारा सेनावनादि स्वतोधिकपरिमाणं प्रकाशयति एवं लघ्वपि गोलकं स्वमयूखसन्तानद्वारा स्वाधिकपरिमाणं पश्यतीति किमत्रानुपपन्नम् ।

न च वृत्तिनिर्गमनाङ्गीकारे सुदूरमपि गत्वा किन्नार्थं प्रकाशयतीति शङ्क्यम् । कार्यगम्यत्वात्तदुपपत्तेः । दीपप्रभावत् ग्रहादिप्रत्यक्षे दूरगमनस्येष्ट-त्वाच्च । प्रत्युत त्वन्मते एव एष दोषः इन्द्रियाणामसम्बद्धानामेवार्थ-प्रकाशकत्वाङ्गीकाराद्, दूरसूक्ष्म-व्यवहित-विप्रकृष्टार्थानामसंवद्धत्वाविशेषात् अखिलप्रकाशापत्तेः। अधिष्ठाननाशेपि विषयगतेनेन्द्रियेणार्थप्रकाशोद्भावनं तु मन्दमतेरेव शोभते । यथा प्रदीपप्रणाशे तत्प्रभा प्रसादोदरगतापि नश्यति, तद्वदिन्द्रियनाशे तत्प्रभापीति न कश्चिद्विशेषः । प्रदीपविधाने तद्रश्मिसंकोचाद् वहिर्देशाप्रकाशवदिन्द्रियपिधानेऽपि तद्रश्मिसंकोचात्तद्वारार्थोपनयाभावान्न विषयप्रकाश इति समः समाधिः ।

न च तर्हि अधिष्ठानान्तर्गतमेवेन्द्रियमिति लोकानुभवविरोध इति वाच्यम् । सर्वगतस्यात्मनः शरीरपरिच्छिन्नानुभववदेतस्यापि भ्रमत्वाङ्गी-कारात् । अतः शरीरापेक्षया, गोलकापेक्षया वा विच्छिन्ने विच्छेदबुद्धिः शब्देप्ययमेव न्यायः सांख्यानामिति ।

स्वमते शब्दस्य विभुद्रव्यत्वात् श्रोत्रदेशे एव तद्ग्रहणम् इन्द्रियाणा-माहंकारिकत्वे तत्त्वान्तरत्वे वा न प्रमाणम् । किन्तु भौतिकत्वमेवैषां । तथा हि रूपप्रत्यक्षहेतुत्वादालोकवत् तैजसं चक्षुः दीपप्रभावदेव ह्रस्वदीर्घग्रहणमिति न शङ्कालेशः । एवं घ्राणादीनां भौतिकत्वं स्पष्टमन्यत्रेति नेह प्रतन्यते । श्रोत्रं दिङ्मयमिति शब्दाधिकरणे व्यक्तीभविष्यति ।

ननु "सत् संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मे"ति प्रत्यक्षलक्षणसूत्रे अव्यवहितान्वयानुरोधेन पुरुषस्य सम्प्रयोगे सति इन्द्रियाणां वुद्धिजन्मेत्यर्थः

प्रतीयते । एवं च पुरुषसम्प्रयोगस्य प्रत्यक्षहेतुत्वमिन्द्रियेषु ज्ञानोत्पादश्चैतदुभयं न संगच्छते नित्यस्य विभोः पुरुषस्य सर्वदा सर्वविषयसम्प्रयोगादव्यावर्त्तकतया विशेषणत्वासम्भवात् इन्द्रियाणां पुनरचेतनतया तत्र बुद्ध्युत्पत्तेः शङ्कितुमशक्यत्वात् इत्यत आह सतीति । तथा च सतीन्द्रियार्थसम्प्रयोगे पुरुषस्य या बुद्धिरितिव्यवहितान्वय एव स्वीकार्यः, ननु तथाहि अहं गौर इत्यादिप्रतीतिसाक्षिकस्य लोकप्रसिद्धस्य शरीरस्य पुरुषपदेन ग्रहणे तस्याचेतनतया तत्र बुद्धेरुत्पादासम्भवेन शङ्का तदवस्थैव चिद्रूपस्यात्मनो ग्रहणे तु ज्ञानजन्मना तस्य विकारित्वापत्तौ क्षीरादिवदनित्यत्वापत्तिः । तथा चोक्तम्—

"बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाऽविकृतिरात्मा यं प्रमातेति न युज्यते । प्र. म. पृ. १०९ :
तथा—वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः । प्र. वा. ।
इति चेत् ।

न । पुरुषस्य वक्ष्यमाणत्वात् ज्ञानक्रियादिविकारेणानित्यत्वस्य दृष्टान्ताभावेन वक्तुमशक्यत्वात् । प्रत्युत सुवर्णादिदृष्टान्तेन विकाराभ्युपगमेऽपि अनित्यत्वाभावः सुपरिहरः ।

बुद्धिजन्मेति किं बुद्धेरतिरिक्तं जन्म, किम्वा अनतिरिक्तम् । आद्ये-वैशेषिकवत् कार्यसमवाय एव वाच्यः । तस्य नित्यतयेन्द्रियसम्प्रयोगजत्वाभावेनाप्रत्यक्षत्वापत्तिः । अन्त्ये तदुपादानं पुनरुक्तमिति चेत् । जायमानतात्पर्येणात्र जन्यशब्दप्रयोगात् जायमानाबुद्धिरित्यर्थः ।

ननूत्पत्तेर्बुद्धिस्वरूपत्वे तदुपादानमफलमिति पुनः स एवाक्षेपः, तदतिरिक्तत्वे तु सा नित्या, अनित्या वा । आद्ये तन्नित्यतया बुद्धेर्नित्यत्वापत्तौ सत्सम्प्रयोगहेतुकत्वोपादानमसंगतं स्यात् । अन्त्ये तु तस्या अपि उत्पत्त्यन्तरकल्पना प्रसक्तौ अनवस्थाप्रसङ्ग इति चेत् ? न । कारणावस्थाविशेषरूपायास्तस्याः स्वीकारेणादोषात् । यादृशकारणावस्थानन्तरं कार्योत्पादः, तादृशीकारणावस्थोत्पत्तिरिति, न तस्यानित्यत्वमिति, तत्सम्प्रयोगजत्वसिद्धिः ।

नन्वस्थिरत्वाद् बुद्धेर्व्यापारान्तरासत्त्वेनार्थप्रकाशनरूपकार्यकारणत्वं न सम्भवतीति चेत् ? न । जन्मरूपव्यापारस्य सत्त्वेन तस्या निर्व्यापारत्वा-

भावात् । करणत्वं प्रमाणत्वं च निर्बाधम् । जायमानविशेषणाद्भूतादिव्यावृत्तिः, तेन सत्सम्प्रयोगहेतुकभूतादिबुद्धेर्न प्रत्यक्षत्वम्, वैशेषिकमतानुसारेण कारणसमवायात्मकोत्पत्तेः अभिव्यक्तिस्वीकारेण तद्वारैव प्रमाणप्रमेयफलभावः शक्योपपादनः ।

**भाष्यम्—बुद्धिर्वा जन्म वा सन्निकर्षो वेति नैषां कस्यचिदवधारणार्थमेतत्सूत्रम् । सति इन्द्रियार्थसम्प्रयोगे नासति इत्येतावदवधार्यते अनेकस्मिन्नवधार्यमाणे भिद्येत वाक्यम् ।**

**बुद्धिर्वा जन्मवासन्निकर्षोवेति** भाष्यम् । अयमभिप्रायः । बुद्धेर्जन्मनोऽतिरिक्तत्वमिति पक्षे, बुद्ध्युपादानीभूतकारणसमवायस्य अनतिरिक्तत्वमिति पक्षे जायमानाया बुद्धेः सन्निकर्षस्य विषयेन्द्रियसम्बन्धादेर्वा एषां मध्ये कस्यचिदवधारणार्थमेतत्सूत्रं न, एतस्यैव प्रत्यक्षत्वं नापरस्येति, प्रमाणत्वेनावधारणे वाक्यभेदापत्तेः । किन्तु धर्मम्प्रति अनिमित्तत्वमेवोच्यते । प्रत्यक्षत्वेनाभिमतस्य सर्वस्य धर्मम्प्रति निमित्तत्वं न सम्भवति विद्यमानोपलम्भनत्वात् प्रत्यक्षस्य, धर्मस्य च भाव्यत्वादित्यर्थः । सूत्रे बुद्धिरित्युपलक्षणं, न सत्सम्प्रयोगजबुद्धिमात्रस्य प्रत्यक्षप्रमाणत्वम् । किन्तु इन्द्रियसंयोगादिरपि प्रत्यक्षं प्रमाणं तथा हि अर्थेन्द्रिय संयोगस्य, इन्द्रियमनःसंयोगस्य, आत्ममनःसंयोगस्य । आत्मा मनसा सम्प्रयुज्यते, मन इन्द्रियेण इन्द्रियमर्थेनेत्येतत्त्रितयसंयोगस्य च मतभेदेन प्रमाणत्वमेतज्जनितस्य ज्ञानस्य फलभावः । यथा पाककरणानां काष्ठानां पाकौपयिकक्रियाश्रयत्त्वात्करणत्वं, तद्व्यापारसाध्यत्वाच्चोदनस्य फलत्वं, तथा प्रमेयघटादिज्ञानोत्पत्त्यनुकूलव्यापाराश्रयत्वादेषां कारणत्वं प्रमेयज्ञानस्य च फलत्वं, करणत्वादेव चैषां प्रमाणत्वम् ।

नन्विन्द्रियादीनामप्रत्यक्षत्वान्नैषां व्यापारवत्वं ज्ञातुं शक्यमिति चेत् ? न । स्वप्नादौ असतीन्द्रियव्यापारे ज्ञानानुत्पादात्, सति चोन्मीलनादौ ज्ञानोदयदर्शनादन्वयव्यतिरेकाभ्यां व्यापारवत्वस्यावगन्तुं शक्यत्वात् । न चेन्द्रियार्थसन्निकर्षस्य प्रमाणत्वे स्पर्शवद् द्रव्यनिष्ठे रूपेऽपि त्वक्संयुक्तस्पर्शवद्द्रव्यसमवायस्य सत्त्वात् स्पर्शस्येव रूपस्यापि त्वाचप्रत्यक्षत्वापत्तिरिति वाच्यम् । अर्थे तदिन्द्रियग्राह्ययोग्यताया निवेशात् । तथा य योग्यार्थेन्द्रियसन्निकर्षस्यैव हेतुत्वम् । रूपे त्वग्योग्यताया विरहात्तादृशसन्निकर्षस्य

सत्त्वेपि न क्षतिः। अत एवेन्द्रियादिप्रमालक्षणेऽपि रूपादौ नातिव्याप्तिः। अन्यथा तादृशसन्निकर्षस्य रूपे सत्त्वात् त्वाच प्रत्यक्षत्वापत्तिर्दुवारा स्यात्। यत्तु एतद्दोषवारणाय ज्ञानमेव प्रमाणं वाच्यमित्युक्तं। तन्न। प्रमाणनिष्पत्ताविव फलनिष्पत्तावपि विषये तदिन्द्रियग्राह्ययोग्यनाया निवेशाद् रूपे त्वगिन्द्रिययोग्यताया विरहेणैव क्षतिविरहात्। अन्यथा इन्द्रियार्थसम्बन्धस्य प्रमाकरणत्वपक्षेऽप्ययं दोषः स्यात्। पूर्वोक्तरीत्या त्वक्सम्बन्धस्य रूपे सत्त्वात्।

ननु प्रत्यक्षे अक्षाणामिवार्थस्यापि हेतुत्वात्तदुभयनिमित्तकस्यान्यतरेण व्यपदेशसम्भवेऽपि "सत्सम्प्रयोग" इति सूत्रे प्रत्यक्षशब्दवत् प्रत्यर्थस्यापि व्यपदेशः किं न सूत्रकृता कृतः। अन्यतरस्यैव प्रयोगे बीजाभावादिति चेत्? न। अर्थस्य निखिलज्ञानसाधारणतयेन्द्रियस्य च तदसाधारणकारणत्वात् असाधारणकारणहेतुकश्च व्यपदेशो न्याय्य इति, प्रत्यक्षशब्देन व्यपदेशः।

अथवा "उभयोर्जायमानो लभतेऽन्यतरतो व्यपदेशमि"ति न्यायेन प्रत्यक्षप्रत्यर्थशब्दयोः प्रसक्तावपि प्रत्यक्षशब्देनैव सूत्रे व्यवहारः। नहि अशेषपर्यायशब्देनैकदा व्यवहारो युक्तियुक्तः। अर्थबोधमात्रप्रयोजनपरत्वाच्छब्दप्रयोगस्य एकेन शब्देनार्थे बोधिते प्रयोजनाभावादेव न पर्यायान्तरप्रयोगप्रसङ्गः। यथा डित्थडवित्थयोर्मातरं डित्थमातेति व्यपदिशन्नाभियुज्यते डवित्थमातेति किं नोच्यते तद्वत्प्रकृतेऽपि प्रत्यक्षप्रत्यर्थशब्दयोः प्रसक्तावपि प्रत्यक्षशब्देनैव व्यवहारे नानुयोगः कर्तुं शक्यते प्रत्यर्थशब्देन व्यवहारः सूत्रकृता किन्न कृत इति। अथवा प्रत्यक्षोपाधिनिबन्धनः प्रत्यक्षशब्दः तत्रासाधारणमिन्द्रियमेव, नार्थस्तस्यज्ञानमात्रसाधारण्यादित्यभिप्रायेण प्रत्यक्षपदप्रयोग इति।

तत्रेन्द्रियप्रमाणपक्षे प्रमाणफलयोर्विषयैक्यं स्पष्टमेव। इन्द्रियाणि अर्थे व्याप्रियन्ते, ज्ञानं च तं विषयीकरोति। न चात्ममनःसंयोगस्यात्मसमवेतत्वेन ज्ञानस्य च विषयाश्रितत्वेन वैयधिकरण्यादात्ममनःसन्निकर्षप्रमाणपक्षो न युक्त इति वाच्यम्। ज्ञानस्य तादृशसंयोगस्य चात्मसमवेतत्वेन वैयधिकरण्याभावात् किन्तु कारणान्तरापेक्षया एकार्थसमवायित्वेन प्रकृष्टत्वादस्यैव प्रमाणत्वं, न कारणान्तरस्येति।

ननु तथापि इन्द्रियमनःसंयोगादेः समानविषयत्वाभावात्कथं प्रमाणत्व-

मिति चेत् इत्थम् । फलकरणभावः समानाधिकरणानामेवेति न नियमः अन्यथा पाककाष्ठयोः फलकरणभावो न स्यात्, तयोर्वैयधिकरण्यस्य स्पष्टत्वात् । पाको हि तण्डुलमाश्रयते, काष्ठं च चुल्लीम्, अतो भिन्नाधिकरणयोरपि फलकरणभावः स्वीकार्यः । न च काष्ठानि तण्डुले व्याप्रियन्ते पाकश्च तत्रैवेति व्यापारद्वारा पाककाष्ठयोरस्त्येव सामानाधिकरण्यम् । एवं तर्हीन्द्रियमनःसंयोगादेरपि व्यापारद्वारा सामानाधिकरण्यं न केनापि वारितमिति सन्तोष्टव्यमिति । इन्द्रियादिप्रमाणपक्षे फलं विषयैक्यं च समर्थितम् ।

इदानीं ज्ञानप्रमाणपक्षे तदुपपाद्यते—विशेष्यज्ञानं विशेषणज्ञानपूर्वकं भवति, विशेष्यज्ञानं फलं विशेषणज्ञानं प्रमाणं, व्यापारद्वारा विशेषणज्ञानं विशेष्ये वर्तते । विशेष्यज्ञानं, तु तत्र विषयत्वेनेति—तयोः सामानाधिकरण्यम् । यदा तु विशेषणमात्रप्रमितिः, तदा अनिश्चयात्मकं पूर्वमालोचनात्मकं ज्ञानं जायते, तदुत्तरं निश्चयात्मकं ज्ञानं जायते इति लोकप्रसिद्धानुभवेन निश्चयात्मकं ज्ञानं फलम्, अनिश्चयात्मकं प्रमाणमिति ।

यदा तु आलोचनमात्रं ज्ञानं जायते, न तदुत्तरं निश्चयात्मकं ज्ञानं, तदा अर्थप्रकाशसद्भावेऽपि उपेक्षाज्ञानवदालोचनस्य न प्रमाणत्वमिति, न तत्र फलप्रमाणभावः ।

एवं यदा विशेष्यज्ञानमात्रं जायते, न विशेषणादि ज्ञानं तदा हानोपादानोपेक्षाज्ञानानि फलम् । उपकारादिस्मरणमेव वा फलमित्यत्र विशिष्य नाग्रहः ।

यत्तु बौद्धाः विषयैक्यसमर्थनाय ज्ञानस्यैवैकस्य फलप्रमाणभावमाचक्षते । तदसत् । भेदे सत्येव फलकरणभावव्यवहारस्य लोके दर्शनेन तद्विरुद्धकल्पनायां प्रमाणाभावात् ।

न च भेदवद् विषयैक्यस्यापि लोकव्यवहारसिद्धतया सत्यपि भेदे तदाश्रयणे लोकविरोधस्तदवस्थ एवेत्यगत्या विषयैक्ये एव तदादरः समुचितः । अतएव खदिरव्यापारेण पलाशे न च्छिदेत्युपपद्यते इति वाच्यम् । विनिगमकाभावेन स्वरूपभेदे एव तत्कल्पनाया युक्तत्वात् । अत एव परशुना छिदेति लोकव्यवहारः, अन्यथा परशुश्छिदेत्यपि व्यवहारः स्यात् । तथा च विषयैक्य—स्वरूपभेदयोरन्यतराश्रयणे इन्द्रियादिप्रामाण्यरक्षणाय स्वरूप-

भेदस्वीकार एवोचितः ।

किञ्च यत्र परशुर्व्याप्रियते, तत्रैव च्छिदेति व्यापारद्वारा विषयैक्यसमर्थनान्नातिप्रसक्तिरिति प्रमाणव्यवस्थापि सूपपद्यते, अन्यथा एकस्यौपचारिकत्वं स्यादिति नैयायिकाः ।

यदपि—

विषयाकार एवास्य प्रमाणं तेन मीयते ।
स्वसंवित्तिः फलं चास्य तद्वये ह्यर्थनिश्चयः ।।

अस्यार्थः—इदं नीलमिदं पीतमित्यादि ज्ञानं सर्वानुभवसिद्धम् । तत्र नीलादेरर्थस्य ज्ञानेन प्रकाशो न भवितुमर्हति, प्रकाश्यप्रकाशकयोर्वैयधिकरण्यात् । ज्ञानमान्तरं विषयो नीलादिर्बाह्य इति, विषयप्रत्यक्षाय नीलादिविषयः ज्ञाने स्वाकारमर्पयति, विषयारोपितं स्वाकारं विज्ञानं गृह्णाति । अत एव नीलाकारज्ञानमिति व्यवहारः । अन्यथा ज्ञानस्य निराकारतया विषयाकारव्यवहारो दुर्घटः स्यात् । एवं च नीलादिविषयारोपितो विज्ञानाकारोऽर्थव्यवस्थापकत्वात्प्रमाणं, नीलादिज्ञानं च प्रमितिः, नीलादिर्बाह्यविषयः प्रमेयः । तथा च स्वस्वाकारनिबन्धनः प्रमाणप्रमितिव्यवहार एकस्मिन् ज्ञाने उपपद्यते इति श्लोकार्थः । अस्य ज्ञानस्य विषयाकारो विषयारोपिताकारः प्रमाणं यतः, तेन विषयाकारेण नीलादिविषयः प्रतीयते । अतस्तत् प्रमाणं, नीलादिविषयसंवित्तिरस्य प्रमाणस्य फलं, तद्द्वये प्रमाणसंवित्तिद्वये अर्थनिश्चयः इति सौगता आहुः । तदपि न । संवित्तिरूपफलस्य ज्ञानविषयत्वेन, प्रमाणस्य विषयाकारस्य नीलादिप्रमेयविषयकत्वेन, फलप्रमाणयोर्विषयभेदापातात् स्वविषयकसंवित्तेः शून्यवादे निराकरिष्यमाणत्वाच्च ।

निखिलबाह्यपदार्थापलापिनो योगाचारास्तु विनैव बाह्यपदार्थं स्वप्नादौ यथा अनादिविश्ववासनावशाद् विविधविषयाकारं ज्ञानं जायते, तथा जागृदवस्थायामपि भिन्नाकारं ज्ञानं जायते इति, न ज्ञानाकारभेदाय वाह्यविषयस्वीकारावश्यकतेति, वाह्यविषयं विनैव वासनावशाज्जायमाननीलपीतादिविषयाकारः प्रमेयं, स्वाकारः प्रमाणम्, स्वसंवित्तिः फलम् ।

यथाहुः—

"यदाभासं प्रमेयं तत्प्रमाणफलते पुनः ।
ग्राहकाकारसंवित्योस्त्रयं नातः पृथक् कृतम् ।।" इति ।

तदसत् । प्रमाणत्वेनाभिमतो यो ज्ञानाकारः, स संवित्तेरन्यः, न वा । आद्ये तदतिरिक्तपदार्थानभ्युपगमव्याघातः विज्ञानातिरिक्तवस्तुनोऽभाव इति हि तेषां सिद्धान्तः । नातः पृथग् इत्युक्तिरसङ्गता च । तद्वत्पदार्थान्तराभ्युपगमापत्तिश्च । अन्त्ये संवित्ति-स्वाकारयोरभेदात्कथं फलप्रमाणभावव्यवस्था । किञ्च स्वाकारो ज्ञातः प्रमाणं, अज्ञातो वा । आद्ये न तावत्स्वयमात्मानं गृह्णाति, एकत्र कर्तृकर्मविरोधात् । नहि यस्यां क्रियायां यत्कर्म, तदेव तस्यां क्रियायां कर्तृ इति सम्भवति स्वस्कन्धारोहणापत्तेः । ज्ञानान्तरगम्यत्वकल्पनायां ज्ञानान्तरस्याप्यज्ञातस्य परिच्छेदकत्वाभावादेकत्र कर्तृकर्मविरोधेन स्वपरिच्छेदकत्वस्याप्यभावेन तत्परिच्छेदाय पुनर्ज्ञानान्तरकल्पनायामनवस्थाध्रौव्यम् ।

किं च त्वन्मते न ज्ञानान्तरेण ज्ञानग्रहणं सम्भवति, ज्ञानस्य स्वाकारमात्रग्राहित्वनियमाङ्गीकारात् । न च ज्ञानान्तरं ज्ञानान्तरस्याकारः सम्भवति, इति, प्रमाणस्वरूपासिद्ध्या प्रमेयस्य विषयाकारस्याप्यसिद्धिरेव ।

ननु यथा भवन्मते ग्राहकाभावात्सुखादीनां स्वसंवेद्यत्वं, मन्मते स्वाकारस्य स्वसम्वेद्यत्वमेवेष्टमिति, ग्राहकान्तरं विनापि तत्सिद्धिरिति चेत् ? न । अस्मन्मते सुखादेः स्वसंवेद्यत्वानभ्युपगमात् । सुखं हि समवायेनात्मनि, तत्र स्वसंयुक्तसमवायेन सन्निकर्षेण मनसैव तद् गृह्यते इति, न तत्सिद्धौ प्रमाणाभावो येन स्वसंवेद्यत्वकल्पना तत्र स्यात् इति ।

ननु वेदान्तिनां मते सामान्यविषयकमेव प्रत्यक्षं, दृष्टस्वलक्षणसामान्यमिति वादिनां सौगतानां मते विशेषविषयकमेव प्रत्यक्षमिति ग्राह्यविशेषस्य व्यवस्थितत्वादत्र सूत्रे तदनुपादानाल्लक्षणं न्यूनमिति चेत् ? ग्राह्यविशेषनिवेशप्रयोजनविरहेणाऽत्र तदनुपादानात् । विशेषः सामान्यं वा यदि योग्यमिन्द्रियसिद्धं स्यात्, तदा प्रत्यक्षम्, अन्यथा तु नेत्येतावन्मात्रेणाभीष्टसिद्धौ ग्राह्यविशेषप्रवेशस्यानौचित्यात्-इति । सौगतानां मते कल्पनापोढमभ्रान्तं प्रत्यक्षम् । तच्चतुर्विधम् इन्द्रियजम्, इन्द्रियजसमनन्तरप्रत्ययोद्भूवं, मानसं,

सर्वचित्तचैत्यानात्मसंवेदनं, योगिज्ञानं च भावनाबलजं सर्वविषयकम् । तथा च योगिज्ञानस्य सर्वविषयकत्वे धर्मादिविषयकत्वमावश्यकमिति, न प्रत्यक्ष-मात्रस्य धर्मं प्रत्यनिमित्तत्वमिति शङ्का पिशाची तु पूर्वमेव निरस्तेति, नेह उत्तरान्तरमर्हति । भावनाबलजस्य ज्ञानस्य स्मरणात्मकतया प्रमाणत्वाभावेन प्रत्यक्षत्वस्य शङ्कितुमप्यशक्यत्वात् । साध्यसाधनेतिकर्तव्यताकलापज्ञानगम्य-धर्मतायाः कल्पनापोढरूपनिर्विकल्पकज्ञानग्राह्यत्वासम्भवाच्चेति दिक् ।

**भाष्यम्—प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारण-त्वमिति ।**

ननु माभूत्प्रत्यक्षगम्यो धर्मः । अनुमानादिगम्यः किन्नेष्यत इत्यत आह—**प्रत्यक्षपूर्वकत्वाच्चानुमानेति** । अयम्भावः प्रत्यक्षेण लिङ्ग-लिङ्गिनोर व्यभिचरितसहचारग्रहे लिङ्गेन पक्षे लिङ्गिज्ञानं जायते तदेवानुमानमुच्यते । प्रकृते धर्मस्याप्रत्यक्षत्वात् कस्यचिल्लिङ्गस्यापि तत्राभावात्, केन कस्य कुत्र सम्बन्धग्रहः स्यादिति, प्रत्यक्षपूर्वकत्वादेषां न धर्मे निमित्तता इति भावः ।

अत्र केचित् प्रत्यक्षं तावद् द्विविधं निर्विकल्पकं सविकल्पकं च । पूर्वं प्रमाणमुत्तरमाभासः । तथा हि—पूर्वं हि निर्विकल्पकम् अनेकाकारं वस्तु-सम्मुग्धं गृह्णाति, तत्र नामजात्यादिविवेको न भवति, बालमूकादिविज्ञान-सदृशं, बालो यथा अपरिचितं तत्स्वभावत्वात् केवलमिदं किञ्चिदस्ति इत्येव जानाति, विशिष्य वक्तुं न शक्नोति । तथा धीमतामपि प्रथमोपजातं निर्विकल्पात्मकं ज्ञानं भवतीति । लोकानुभवः । इदमेव प्रमाणं, नाम-जात्यादिविकल्पाभावात् । एतदनन्तरं सविकल्पकं ज्ञानं जायते, तच्च जाति-द्रव्यगुणक्रियानामभिर्भेदेन निर्विकल्पकगृहीतं वस्तु विकल्पयति विविच्य गृह्णाति-गौरयं शुक्लोऽयम्, दण्डयं, गच्छत्ययं, डित्थोऽयमिति । गृहीते वस्तुनि नामादि विकल्पयति । नायं विकल्पः नामजातीत्यादिस्मरणं विना सम्भवति । न च स्मरणजननसामर्थ्यमर्थस्येन्द्रियस्य वा सम्भवति इति, स्मृत्याकृष्टनामजात्यादिविकल्पादीनामप्रामाण्यमेवेति ।

एवं च यत्प्रत्यक्षं प्रमाणं निर्विकल्पकं तत्पूर्वकमनुमानादि न सम्भवति, लिङ्गलिङ्गिनः सम्बन्धस्य तेन ग्रहणासम्भवात् । इदं लिङ्गं, इदं लिङ्गि,

अयमनयोः सम्बन्ध इति विशिष्टग्रहणे तस्य निर्विकल्पकत्वमेव न स्यात् । यत्पूर्वकमनुमानम् तत्सविकल्पकं प्रमाणमेव न भवतीति, कथमुच्यते प्रत्यक्षपूर्वकत्वादनुमानादि न धर्मे निमित्तम् ?

एवं गोसदृशो गवय इति श्रुतारण्यकवाक्यो वनं गतः गवयं दृष्ट्वा गोसदृशो गवय इति वाक्यं स्मरति गोसदृशतया गवयं विकल्प्य, पश्चात् सादृश्यसम्बन्धेन स्मृतायां गवि गवयसादृश्यज्ञानमुपमानमिति । नैतदपि निर्विकल्पकपूर्वकं भवितुमर्हति, नामजात्यादिविकल्पात् ।

उपपाद्यान्यथानुपपत्त्या उपपादककल्पनारूपार्थापत्तिस्तु प्रत्यक्षागोचरेऽर्थे यथा वह्नौ दाहानुकूला शक्तिर्न प्रत्यक्षेण प्रमातुं शक्यते इति अर्थापत्तिः प्रमाणं । तत्रार्थापत्तिरेव प्रमाणं, यदि दाहानुकूलाशक्तिर्वह्नौ न स्यात्, तदा ततः दाहो न स्यादिति, दाहान्यथानुपपत्त्या सा शक्तिर्वह्नौ इति, नार्थापत्तेः प्रत्यक्षपूर्वकत्वम् । ननु शक्तेरप्रत्यक्षत्वेऽपि तदुपपादकदाहस्य प्रत्यक्षतया प्रत्यक्षपूर्वकत्वमेवार्थापत्ताविति चेत् ? न । अनुपपद्यमानार्थविकल्पेनैव ग्रहणात्, तस्य च प्रत्यक्षत्वनिरासादेव नास्याः प्रत्यक्षपूर्वकत्वम् इति ।

किं च यत्र देशान्तरप्राप्त्या सूर्यगतिरनुमीयते । तया च गतिकारणं, तत्र गतिकारणानुमानं न प्रत्यक्षपूर्वकम्, तद्गतेरप्रत्यक्षत्वादिति, न द्वितीयानुमानस्य प्रत्यक्षपूर्वकत्वमित्यनयैव रीत्या प्रत्यक्षं विनापि धर्मानुमानं स्यादिति ।

ननु सूर्यस्य देशान्तरप्राप्तिर्न प्रत्यक्षेति कथमनया तद्गतेरनुमानम् । देशान्तरं हि आकाशो वा दिग्वा तदुभयमप्रत्यक्षम् । न च प्रकारान्तरमस्तीत्येतदुदाहरणमसंगतमिति चेत् ? सत्यम् । नादित्यस्य देशान्तरप्राप्तिः प्रत्यक्षाः किन्तु अनुमीयते । तथाहि देशान्तरप्राप्तिमानादित्यः द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसम्बन्धादनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वात् । मण्यादावेतत्सर्वमस्ति स च देशान्तरप्राप्तिमान् । एवं चादित्यस्तस्माद्देशान्तर प्राप्तिमान् ।

पुरस्थिते वृक्षादौ सोऽयं वृक्ष इति प्रत्यभिज्ञाविषयत्वात्तत्रापिव्याप्तिपरिहाराय परिवृत्येति । प्रत्यभिज्ञाविषयत्वस्य गुणादावपि

सत्त्वात् तस्य च क्रियात्मकत्वादतिव्याप्तिः । अतो द्रव्यत्वे सतीत्युक्तम् । तथा च तस्य द्रव्यत्वाभावान्नातिव्याप्तिः । परितः प्रकाशशालिनः प्रदीपस्य परिवृत्यापि सोऽयं प्रदीप इति प्रत्यभिज्ञाविषयत्वात् द्रव्यत्वाच्चात्र व्यभिचारः स्यादित्येतन्निवृत्त्यर्थं क्षयवृद्धिप्रत्ययाविषयत्वे सतीति विशेषणमुपात्तम् । तथापि पृष्ठास्थितकुड्यादौ व्यभिचारः स्यादिति तद्वारणाय प्राङ्मुखोपलभ्यत्वे सतीति विशेषणम् । कुड्यस्य प्राङ्मुखोपलभ्यत्वाभावान्न दोषः । उपलभ्यत्वेनोपलब्धिकर्मता विवक्षिता । सा चातीता गृह्यते, न वर्तमाना । अन्यथा पूर्वापराक्षपारपारीणेन हिमगिरिणा व्यभिचारः स्यात् । यद्यपि हिमगिरिं पुरो निरीक्ष्य पश्चात्परावृत्त्य तमेव निरीक्षमाणस्योपलब्धिकर्मता तत्रानीतैवेति न दोषपरिहारस्तथापि पुरुषान्तरस्य तथैव वर्तमानस्य पूर्वाभिमुखस्योपलब्धिकर्मभावः, तत्र वर्तमान एव । मार्तण्डमण्डलन्तु अस्ताचलचूडावलम्बि न प्राच्यां कस्यचिदुपलम्भगोचर इति वैषम्यम् । तथापि द्रष्टैव पुरोवस्थितस्य पश्चिमाभिमुखस्य प्रासादस्य स्वयमुपनिपत्य पृष्ठतो भवति, तदोक्तलक्षणस्य हेतोरस्ति व्यभिचारः, तन्निवृत्त्यर्थमनुत्पन्नपादविहारस्येति विशेषणम् । तदभिमुखदेशसम्बन्धादिति ल्यब्लोपे पञ्चमी । स्वाभिमुखदेशमुद्दिश्यानुत्पन्नः पादविहारो यस्येति स तथोक्तः । तमुद्दिश्य खल्वयं पद्भ्यां संचरमाणः प्रासादस्य पृष्ठतो भवतीति भावः । देशान्तरप्राप्तौ साधनान्तरमपि न्यायवार्त्तिके स्पष्टम् ।

एवं रूपेण स्पर्शानुमानं शिंशपात्वेन श्रुतेन वृक्षत्वानुमानमित्यादि सामान्यतोदृष्टेन संगृहीतं वेदितव्यमिति । न्यायवार्तिकतात्पर्यटीकायां १७६,१७७ पृष्ठयोः स्पष्टम् । एवं चानुमितदेशान्तरप्राप्त्या सूर्यगत्यनुमानस्य प्रत्यक्षपूर्वकत्वाभावेन अनुमानमात्रस्य प्रत्यक्षपूर्वकत्वायोगेन भविष्यत्यपि धर्मे अप्रत्यक्षपूर्वकमनुमानं सम्भवत्येव ।

किं च यदि प्रत्यक्षविषयस्यैवानुमेयत्वं, तदा प्रत्यक्षाधिगतग्राहकत्वेनानुमानस्यानुवादकतया प्रामाण्यमेव न स्यात् । न च धारावाहिकज्ञानवदपूर्वतत्तत्क्षणविषयकतया प्रामाण्यसमर्थनं युज्यते, तथासति तत्तत्क्षणानां पूर्वप्रत्यक्षाविषयतया तदनुमाने प्रत्यक्षपूर्वकत्वनियमस्य त्यागप्रसङ्गात् । अथ साध्ये न प्रत्यक्षपूर्वकत्वं विवक्ष्यते, अपि तु हेतौ । तथा च कस्मिंश्चिद्धेतौ प्रत्यक्षे इति पूर्वोक्तस्थले नानुपपत्तिरिति चेत् ? मैवम् ।

धर्मस्य भविष्यत्त्वेनाप्रत्यक्षत्वेऽपि कस्यचिद्धेतोः प्रत्यक्षतया तदनुमानसम्भवेन धर्मस्यानुमानविषयत्वाभावे प्रत्यक्षविरहस्याप्रयोजकत्वापत्तेः ।

अपि च शब्दस्यापि श्रावणप्रत्यक्षविषयतयैवार्थबोधकत्वमित्यस्यापि अनुमानवत्प्रत्यक्षपूर्वकत्वेन धर्मं प्रति हेतुत्वं न स्यादिति चेत् ।

अत्रोच्यते । सविकल्पकं प्रत्यक्षं प्रमाणमेवेत्यग्रे स्पष्टीभविष्यति । ययोर्लिङ्गलिङ्गिनोः सम्बन्धः सामान्यतो वा विशेषतो वा प्रत्यक्षेण गृहीतः, तयोरेकतरेण लिङ्गेन लिङ्गिनो ज्ञानमनुमितिः । सम्बन्धग्रहश्च न सम्बन्धिनोर्ग्रहणमन्तरेति, सम्बन्धिनो धर्मस्य प्रत्यक्षाविषयतया तदीयसम्बन्धग्रहासम्भवेन तदनुमानासम्भवः स्फुट एव ।

एवमुपमानमपीह न सम्भवति, गोसदृशत्वेन गवयग्रहणे उपमानं प्रवर्तते । न च गवादीनामग्रहणे तत्सदृशतया गवयादिः प्रत्येतुं शक्यते, सम्बन्धग्रहं प्रति सम्बन्धिग्रहस्य हेतुत्वात् । तथा च धर्मस्याप्रत्यक्षत्वेन तदविनाभूतस्य तत्सादृश्यस्य क्वचिदपि ज्ञातुमशक्यतया नानुमानोपमानगम्यत्वं तस्येति भावः ।

एवमादित्यस्यानुमितया देशान्तरप्राप्त्या तदीयगत्यनुमानमपि प्रत्यक्षपूर्वकमेवेति, न फलतः कश्चिद्विशेषः । कार्यकारणयोस्तत्सम्बन्धस्य च प्रत्यक्षं बिना अनुमितगत्यापि तत्कारणानुमानासम्भवः स्फुट एव । न च सप्तमरसादेरिव सर्वथाऽप्रमितस्य धर्मस्य सत्ताऽनुमातुं शक्यते, पक्षाप्रसिद्धेः । न वाप्यस्य वसुधा शशविषाणोल्लिखितेतिवत् पक्षविशेषणतयाप्यनुमानावकाशः, अप्रसिद्धपक्षविशेषणतापत्तेः ।

अत एवाह—

तस्माददृष्टपूर्वत्वात्केनचिद्वस्तुना सह ।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ॥
अदृष्टसदृशत्वाच्च स्वयं चानुपलम्भनात् ।
धर्मस्य नोपमेयत्वमसाधारणवद्भवेदिति ॥

प्र० सू० श्लो० ९९–१००

ननु प्रत्यक्षानुमानोपमानाविषयत्वेऽपि धर्मस्यार्थापत्तिविषयत्वमस्त्येव । दृश्यते हि—प्राणिनां सुखदुःखादिविविधफलभोगविशेषः । न

चासौ दृष्टकारणमात्रभेदादुपपादयितुं शक्यः। समानसाधनानामपि फलभेददर्शनात्। समानमीहमानानां चाधीयानानां केचिदर्थैः युज्यन्ते, नापर इत्यादि महाभाष्यकारोक्तेश्च। एवञ्च जगद्वैचित्र्यान्यथानुपपत्त्या तद्वैचित्र्योपपादकमदृष्टमस्तीति सिद्धमर्थापत्तिविषयत्वमस्येति चेत्? न। यतः शुभाशुभकर्मणां शक्तिवैचित्र्यमपि स्वाभाविकमेवाङ्गीकार्यमिति कृतमदृष्टकल्पनाव्यसनेन। नहि अश्वमेध-ब्रह्महत्यादिकर्मणां स्वर्गनरकादिजननशक्तिः हेत्वन्तराधीना। अपि तु स्वाभाविक्येव, तथा जगद्वैचित्र्यमपि स्वाभाविकमेवेति क्वार्थापत्तिविषयता धर्मस्य।

ननु कालभेदेन एकस्यैव पुरुषस्य दारिद्र्यैश्वर्योपलब्ध्या व्यभिचारान्न जगद्वैचित्र्यं स्वाभाविकं, कर्मणां शक्तिवैचित्र्यं तु स्वाभाविकं भवितुमर्हति व्यभिचारादर्शनादिति चेत्? सत्यम्। स्वर्गसाधनमग्निहोत्रादि, नरकनिपतननिदानं ब्रह्महत्यादीति विशेषरूपेणाज्ञाने सामान्यतः किमप्यदृष्टमस्तीति ज्ञानं न मानवानां प्रवृत्तिं प्रयोजयति। न च सामान्यतो दृष्टज्ञानस्य प्रवृत्तिप्रयोजकत्वाभावेऽपि तस्यार्थापत्तिज्ञानविषयत्वमक्षतमेवेति चोदनैवेत्यवधारणासंगतिर्दुर्वारैवेति वाच्यम्। प्रवृत्तिप्रयोजकीभूतविशिष्टज्ञाने चोदनैवेत्यवधारणे तात्पर्यात्। ततश्चादृष्टसामान्यज्ञानस्यार्थापत्तिजन्यत्वेऽपि न किञ्चिदपचीयते। सूत्रकारेणापि प्रवृत्तिप्रयोजकधर्मज्ञानस्य जिज्ञासा सूत्रिता, न सामान्यस्य, तस्य प्रवृत्यप्रयोजकत्वेन निष्फलत्वात्।

ननु अर्थापत्त्या सामान्यस्य, विशेषस्य चागमेन सिद्धेरुभयस्य च प्रमाणतया चोदनैवेत्यवधारणासङ्गतिस्तदवस्थैवेति चेत्? न। सामान्यसाधिकाया अर्थापत्तेर्विशेषसाधकत्वाभावेन विशेषसाधकागमेन विशेषस्यैव तदविनाभूतसामान्यस्य च सिद्धौ प्रमाणान्तरोपन्यासवैयर्थ्यात्। येषां मते नार्थापत्तिः प्रमाणान्तरं, किन्तु कार्यात्कारणानुमितिरूपैव सा तेषां मते ईदृशमनुमानमपि अनयैव रीत्या निराकरणीयमिति ध्येयम्। आगममूलानुमानाभ्युपगमे तु प्रकृते आगम एवास्तु मूलमलमन्यमुखापेक्षानुमानव्यसनेनेति कृतधियो विभावयन्तु।

यत्तु यत्प्रमाणं निर्विकल्पकं ज्ञानं न तल्लिङ्गग्राहि, यच्च लिङ्गग्राहि सविकल्पकं प्रत्यक्षं, न तत्प्रमाणमिति। तदसत्। सविकल्पकस्यार्थोप-

कारिणः प्रामाण्याभ्युपगमात् । यद्धि अन्यदीयरूपेणार्थं विकल्पयति, यथा शुक्ताविदं रजतमिति तदेवाप्रमाणं, न सविकल्पकमात्रम् । नहि पारमार्थिके रजते जायमानमिदं रजतमिति ज्ञानमप्रामाणिकमिति केनाप्यविकलकरणेन शक्यते वक्तुम्, बाधदोषयोरदर्शनात् । सदसद्विषयव्यवस्थानापत्तेः सर्वानुभवसिद्धमपलपतः परीक्षकत्वानुपपत्तेश्च । यत्तु

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।।

वा० प० २ का० का० १२३

इत्यभियुक्तोक्त्या निर्विकल्पकज्ञानमेव नास्तीति, क्व तत्प्रामाण्याशावकाश इति ।

तत्तुच्छम् । बालमूकादीनामिव व्युत्पन्नानामपि सविकल्पकज्ञानोत्पत्तेः प्राग् विषयेन्द्रियसम्बन्धानन्तरं शुद्धवस्तुमात्रविषयकस्यालोचनज्ञानस्योत्पत्तेः आवश्यकत्वात् । अन्यथा विशेषणज्ञानाभावेन विशिष्टज्ञानस्योत्पत्तिरेव न स्यात् ।

किञ्च निर्विकल्पकज्ञानानुत्पत्तौ शब्दविशेषस्मारकाभावेन शब्दानुवेध एव ज्ञाने दुर्लभः स्यात् । तदिहानुवृत्तिव्यावृत्तिस्फुरणरहितजातिव्यक्त्याद्यनेकाकारं सम्मुग्धं वस्तु भातीत्यविवादमित्यन्यत्र विस्तरः । निर्विकल्पकज्ञानानन्तरं जाति-गुण-क्रियादि-विशिष्टं श्वेतोऽश्वो धावतीत्यादि ज्ञानं सविकल्पकं प्रत्यक्षं प्रमाणमेवेति ।

ननु निर्विकल्पकज्ञानजन्यस्य नामादिस्मृतिसहितस्य सविकल्पकस्य कथमैन्द्रियकत्वं, विशेषणीभूतस्मृताविन्द्रियाणामसामर्थ्यादिति चेत् ? सत्यम् । यद्यपि केवलमिन्द्रियं स्मृतावसमर्थं, तथापि स्मृतिसहितस्य तज्जननसामर्थ्ये बाधकाभावात् । केवलस्य चक्षुषो रूपादिप्रकाशकत्वाभावेपि आलोकादिसहकृतस्य तस्य तत्प्रकाशकत्वात्, केवलस्य मनसो वाह्यविषयप्रकाशकत्वाभावेपि चक्षुरादिसहकृतस्य तत्प्रकाशसामर्थ्यदर्शनाच्च ।

न च नेदमिन्द्रियजं प्रत्यक्षं स्मृतिसहितेन्द्रियजन्यत्वेनेन्द्रियमात्रजन्यत्वाभावादिति वाच्यम् । अनुपरतेन्द्रियव्यापारस्यैव पुरुषस्येदृशज्ञानोत्पत्तिदर्शनेन प्रत्यक्षलक्षणे इन्द्रियमात्रजन्यत्वनिवेशानौचित्यात् । इन्द्रियासम्बद्धार्थ-

विषयकज्ञानस्यास्माभिरपि प्रत्यक्षत्वानभ्युपगमात् । तथा चोक्तं भट्टपादैः

स्मरणे चास्यसामर्थ्यं सन्धानादौ च विद्यते ।
तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि ।
विकल्पयन् स्वधर्मेण वस्तुप्रत्यक्षवान् नरः ।

प्र० सू० १२२½-१२३ इति ।

ननु सविकल्पकस्येन्द्रियजन्यत्वाभ्युपगमे विषयेन्द्रियसंयोगे प्रथमत एव तदुत्पादापत्त्या तत्र निर्विकल्पकज्ञानपूर्वकत्वकथनासंगतिः, विशिष्टज्ञाने विशेषणज्ञानकारणताव्यभिचारश्चेति चेत् ? न । सविकल्पज्ञानोत्पत्तौ नामजात्यादिस्मृतेः सहकारिकारणतया तदुद्बोधकत्वेन निर्विकल्पकज्ञानस्यापेक्षिततया तदुत्पत्तेः पूर्वं तदुत्पत्त्यसम्भवात्, कारणाभावे कार्यानुत्पत्तेः सर्वसम्मतत्वात् ।

एतेन स्मृतिव्यवहितस्य सविकलपस्येन्द्रियव्यापारसन्निधानमात्रेण प्रत्यक्षत्वस्वीकारे उन्मील्य निमील्य विकल्पयतोऽपि विकल्पः प्रत्यक्षं स्यादिति परास्तम् । इन्द्रियव्यापारसन्निधानाभावेन तदाशङ्कानवसरात् । सति व्यापारसम्वन्धे निमीलनोक्तिवैयर्थ्यात् ।

नन्वेवमपि सविकल्पस्यानेककारणजन्यतया किमित्यक्षेणैव व्यपदिश्यते चाक्षुषं रासनं त्वाचमित्यादीति चेत् ? उच्यते । इन्द्रियासम्बद्धं वस्तु विकल्पे अनुमानादौ आत्मनः साधारणकारणतयाऽत्र विकल्पेऽक्षस्यैवासाधारणकारणत्वात् । असाधारणेन कारणेन लोके व्यपदेशाः दृश्यन्ते शाल्यङ्कुरो यवाङ्कुर इति । न चेन्द्रियाणां निर्विकल्पं प्रत्येवासाधारणकारणत्वमिति युक्तं, तत्रापि तदीयप्रागभावादेरेव तथात्वात् ।

वस्तुतस्तु पङ्कजादिवत्तत्र तस्य योगरूढ़िरेवेति नातिप्रसंगः । वृद्धव्यवहारानुरोधेन तत्र सविकल्पके तस्य रूढ़िरेवेति तु परमार्थसन्मार्गः । यदि च विषयेन्द्रियसम्बन्धजन्यनिर्विकल्पकज्ञानानन्तरमुत्पन्नस्य सविकल्पकस्य मनोजन्यतया प्रत्यक्षत्वं तर्हि गोत्वादावपि वाह्यविषये तस्य तथैव प्रत्यक्षत्वं स्यात् । अथ संविद आन्तरत्वेन मनोजन्यतया प्रत्यक्षत्वमस्तु, वहिर्विषये तु मनसोऽस्वातन्त्र्याद् गोत्वादौ प्रत्यक्षत्वं न सम्भवतीति चेत् ? न । संविदो वाह्यविषयकत्वेन तत्रैव विषयांशेऽपि मनोजन्यतया प्रत्यक्षत्वस्य लोकानामिष्टत्वात् ।

अत्रायं निष्कर्षः—यदि हि बहिर्विषये मनो न स्वतन्त्रं, चक्षुरादिव्यापारस्य च स्मृत्यादिव्यवहितत्वं, तदा तत्र तस्य रूढ़िरेव स्वीकार्या। नत्वप्रत्यक्षत्वं लोकविरोधादिति श्लिष्यते।

अथवा निर्विकल्पकसहकृतं मनो बहिर्विषये प्रवर्त्ततामिति सुखादीनामिव तस्यापि मानसप्रत्यक्षत्वमाञ्जस्येनोपपद्यते।

न च हेत्वन्तरसहकृतमनोजन्यज्ञानस्य प्रत्यक्षत्वाभ्युपगमे मनसो ज्ञानसामान्यं प्रति साधारणकारणतया अनुमानादेरपि तज्जन्यतया प्रत्यक्षत्वापत्तिरिति वाच्यम्। भवन्मते यथा मनोजन्यत्वेन निर्विकल्पकं प्रत्यक्षमेव प्रमाणं न तादृशमपि सविकल्पकं, तथा मन्मतेऽपि घटत्वादिज्ञानस्यैव प्रत्यक्षत्वं नानुमानादेरिति मयापि वक्तुं शक्यत्वात्। अयं घट इत्यादि सविकल्पकज्ञानस्य लिङ्गाद्यजन्यत्वेन पारिशेष्यात्प्रत्यक्षत्वं बाधानवताराद्दोषादर्शनाच्च तस्य प्रमाणत्वमेवेतिदिक्।

ननु सविकल्पकज्ञानस्योपपत्तिरेव न सम्भवति। तथाहि—यदि रूपादिविशिष्टं रूपादिव्यतिरिक्तं किञ्चिद् वस्तु परमार्थ सत् स्यात्, तदा तद्ग्राहि प्रत्यक्षं प्रमाणं स्यादपि, रूपादिसंघात एव घटस्तम्भादि बुद्धिगोचरो नातिरिक्तः, अनुपलम्भादुपलम्भकारणाभावाच्च। न घटादे रूपादिसंघातात्मकत्वे एको घट इत्यादि बुद्ध्यनुपपत्तिरिति वाच्यम्। तिरोहितावयवभेदसमुदायापेक्षया वृक्षसमूहे वनमिति बुद्धिवदत्रापि तदुपपत्तेः। कृत्स्नैकदेशविकल्पेन अवयवेषु तदतिरिक्तावयविनो वृत्तेरसम्भवादित्यन्यत्र विस्तरः।

तथाचोक्तं सौगतैः

क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चषु।
न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः। इति

न च रूपादिव्यतिरिक्तग्राहकेन्द्रियाभावेऽपि मनसैव धर्मिणो ग्रहणमास्तामिति वाच्यम्। बहिर्विषये मनसः स्वातन्त्र्यानङ्गीकारात्। तस्मादविद्याकल्पित एवावयवावयविभावादिः, न वास्तविक इत्याहुः।

अत्रोच्यते उपजनापायशीलासु पिण्डघटकपालाद्यवस्थासु अनुगतं यदवस्थावत्,, तद्धर्मि, अन्यथा तदेवेदमिति प्रत्यभिज्ञानं न स्यात्। अस्मन्मते धर्मधर्मिणोर्भेदाभेदौ, वैशेषिकादिमते तयोरत्यन्तभेद इत्यस्य व्यवस्थिततया

विकल्पस्य प्रामाण्यमक्षतमेव । बाधाभावाद्दोषादर्शनाच्च । यदेवाद्राक्षं तदेव-स्पृशामीति प्रत्यभिज्ञयापि रूपादिविशिष्टतदतिरिक्तधर्मिसिद्धिः, अन्यथा रूपस्य चाक्षुषतया स्पर्शस्य त्वाचतया रूपस्पर्शातिरिक्तधर्मिणोऽभावात्कस्योभयेन्द्रियगोचरत्वं स्यात् ।

नन्वेवमेकेन्द्रियगोचरे तदपरेन्द्रियविषयत्त्वाभ्युपगमे एकेनैवेन्द्रियेण रूपादिसकलविषयकज्ञानोत्पत्तिसम्भवे इन्द्रियपञ्चकत्वकल्पना वृथैव स्यादिति वाच्यम् । एकेन्द्रियकल्पनया विषयव्यवस्थानुपपत्तेः । अन्धो हि श्रृणोति, रूपं न पश्यति । बधिरो न श्रृणोति रूपं तु पश्यत्येवेति व्यवस्था न संगच्छेत । इन्द्रियोपघाते सर्वविषयाणामग्रहणापत्तेः, अनुपघाते सर्वविषयाणां ग्रहणापत्त्या ज्ञानयौगपद्यप्रसंग इत्यादि बहुतरदूषणानि पतेयुरिति न किञ्चिदेतत् । ततश्च द्रव्ये धर्मिणि इन्द्रियसांकर्येपि रूपादिधर्मे व्यवस्थैव । नहि यदेकत्र दृष्टं, तदन्यत्र वलादभ्युपेयते, रूपादिषु मनसः चक्षुरादि सहकार्यपेक्षणेऽपि सुखादौ स्वत एव प्रवृत्तेः ।

ननु कथमिदं व्यवस्थाप्यते श्रोत्रसहायेन मनसा शब्दाद्युपलब्धिः सुखाद्युपलब्धिश्च स्वत इति चेदित्थम् । बधिरस्य शब्दानुपलब्धिः सुखाद्युपलब्धिश्च स्पष्टमेव लोके दृश्यते । यदि मनसैव सा स्यात्, तदा बधिरस्यापि सा स्यात् न चैषा दृश्यते । तस्माद् यथोक्तमेव रम्यम् ।

नन्वेकमेवेन्द्रियमस्तु, तत्रैव पञ्च प्रकाराः शक्तयः कल्प्यन्तां तावतैव विषयव्यवस्थोपपत्तिरिति कृतमिन्द्रियपञ्चकत्वकल्पनेनेति चेत्, न । तावतापि शक्तिपञ्चकत्वकल्पनासाम्येन लाघवाभावात् । पञ्चेन्द्रियाणि कल्प्यानि, पञ्च शक्तयो वेत्यत्र विशेषादर्शनात् । न च धर्मिकल्पनापेक्षया धर्मकल्पनाया लघुत्वाच्छक्तिकल्पनैव युक्तेति वाच्यम् । अत्र धर्मिणः क्लृप्तत्वेनोभयकल्पनाविरहात् भौतिकत्वादिन्द्रियाणां भूतानि पृथिव्यादीनि पञ्च क्लृप्तान्येव न तु तेषामपूर्वकल्पना, प्रत्युत वायवीयस्य त्वगिन्द्रियस्य अदृष्टं तादृशसामर्थ्यं कल्पनीयं स्यादिति अदृष्टकल्पनापेक्षयेन्द्रियपञ्चकत्वमेव युक्तम् ।

ननु शब्दग्रहणे मनोव्यापारकल्पनमनावश्यकं, श्रोत्रेणैव तद्ग्रहणसम्भवादिति वाच्यम् । श्रोत्रोपघातेऽपि शब्दस्मरणदर्शनात्तत्रापि मनोव्यापारकल्पनाया आवश्यकत्वात् । ननु तर्हि मनसैव शब्दग्रहणमस्तु, किं श्रोत्रव्या-

पारकल्पनेनेति चेत् । न । शब्दग्रहणे मनसः स्वातन्त्र्येण व्यापारकल्पनायां बधिरस्यापि शब्दोपलब्ध्यापत्तेः । अपि च विषयान्तरव्यासक्तमनसः पुरुषस्य सत्यपि चक्षुरादिसंयोगे रूपादौ ज्ञानानुत्पत्तिदर्शनाद् गम्यतेऽत्रापि मनोव्यापारस्य हेतुत्वम् । एवमेकेनेन्द्रियेणैकस्य विषयस्य ग्रहणवेलायामिन्द्रियान्तरग्राह्यविषयस्य स्मरणाजननादवसीयते ग्रहणे एव मनो व्यापृतम् । अन्यथा विषयान्तरस्मरणं स्यादिति मनसः बहिर्विषये इन्द्रियापेक्षा, विषयस्मरणे सुखाद्युपलब्धौ च स्वातन्त्र्यमिति ।

ननु बोधस्वभावः पुरुषः स्वयमेव सर्वमान्तरं बाह्यं च विषयं जानीयात्, किमान्तरेण बाह्येन चेन्द्रियेणेति चेत् ? न । तथा सति पुरुषस्य सर्वज्ञतापत्तेः, अतो बाह्यविषयग्रहणे बाह्यमान्तरं चोभयमिन्द्रियम् आन्तरे तु केवलं मनः अपेक्ष्यते इत्यन्वयव्यतिरेकाभ्यामवसीयते । बाह्यानीन्द्रियाणि चक्षुरादीनि, आन्तरं तु मनः तस्येन्द्रियत्वन्तु सुखादिसाक्षात्कारान्यथानुपपत्त्या बोध्यम् । एवं च ज्ञानरूपकार्यवशाद् ग्राह्यग्राहकशक्तयोऽनुमीयन्ते । आसां क्वचिद् द्रव्यादौ सांकर्यं क्वचिच्च रूपादावसांकर्यमिति यथादृष्टमनुमीयते इति ।

ननु जात्यादिवाचकगवादिशब्दाः पूर्वं स्वाभिधेयगोत्वादिरूपमर्थं गवाद्यभेदेन विकल्प्य, पश्चाद् गोशब्दाभेदोपहितजात्यादेरभेदं व्यक्तौ विकल्पयन्ति-गौरयमिति । एवं च जातिव्यक्त्योर्भेदाभेदस्वीकारेण जातिव्यक्त्यभेदांशे प्रत्ययस्य प्रमात्वेऽपि शब्दस्य वस्त्वन्तरत्वात् तदभेदस्य जात्यादावसत्त्वात्तादृशशब्दाभेदविशिष्टजात्याद्यंशे प्रत्ययस्य मिथ्यात्वात् विकल्पस्य मिथ्यात्वं दुर्वारमिति चेत् ? न । जात्याद्यंशे शब्दाभेदभानानभ्युपगमात् । शब्दोच्चारणात्प्राग् यादृशी बुद्धिर्जायते, शब्दोच्चारणानन्तरमपि तादृशी बुद्धिर्भवति, न तु अन्यादृशी। शब्दोच्चारणात्प्राग् यथा शब्दाभेदो न विकल्प्यते, एवं शब्दोच्चारणानन्तरमपि इति, न तस्य मिथ्यात्वम् ।

ननु शब्दार्थसम्बन्धज्ञानात्प्राग् गवादिषु गोत्वादिप्रतीतिर्न भवति । यदि च जात्यादिस्वरूपमेव गोत्वादि स्यात्, तदा शब्दार्थसम्बन्धज्ञानात् प्राग् अपि स्यात्, व्यक्तिविशेषज्ञानवत् । किन्तु शब्दार्थसम्बन्धज्ञानोत्तरमेव तादृशप्रतीतिर्नियमेन जायते इति, तस्य शब्दात्मकत्वमेवेति चेत् । न ।

शब्दार्थसम्बन्धज्ञानात्प्रागपि तादृशप्रतीतेरभ्युपगमात् । इयान् परं विशेषः शब्दज्ञस्तु केवलं शब्दं स्मृत्वा अभिलपति गौरयमिति । तादृशाभिलापोपलम्भात् । अशब्दज्ञस्तु नाभिलपति । अयमसाविति प्रतीतिस्तु द्वयोः समानैव जायते इति ।

केचित्तु अशब्दज्ञस्य गोत्वादिप्रतीतिरेव न जायते, शब्दज्ञानाभावेन तदनुवेधस्याभावात् । शब्दाननुविद्धः प्रत्ययस्तु अनङ्गीकारपराहतः । यथाहुः—

न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।। इति ।

तदसत् । अशब्दज्ञस्यापि तादृशप्रतीतेरनुभवसिद्धत्वात् । अन्यथा वालमूकादीनां तादृशज्ञानमेव न स्यात् । अपि च रसनया इक्षुक्षीरादिमाधुर्यं यादृशमुपलम्यते, तत्र न शब्दानुवेधगन्धोपि शब्दस्य सामान्यार्थप्रत्यायकत्वात् । प्रातिस्विकविशेषाश्च न शब्देनाभिधीयन्ते । प्रत्यक्षादिना च तेषामपि प्रतिपत्तिः । यदि स्वरूपारोपे शब्दस्य न व्यापारः, तर्हि तदुपादानं किमर्थमिति चेत् ? अर्थज्ञानोपायत्वादेव तत्सार्थक्यम् । नहि प्रदीपः स्वप्रकाश्ये घटादौ स्वस्वरूपमारोपयति । अनारोपयन्नपि घटादि प्रकाशयन् सप्रयोजनो भवति, तद्वत् शब्दोपि सार्थक इति भावः ।

अपि च व्यक्तौ जात्यादेरभेदभानवत् जात्यादौ शब्दाभेदभाने बाधदर्शने च जात्यादीनां शब्दात्मकत्वमेव स्यात् । प्रतीतिरेव भगवती पदार्थव्यवस्थापने प्रमाणं नः इति, यथा व्यक्तौ जात्यादेरभेदो भासते, बाधकश्च नोपलभ्यते इति, व्यक्ते जात्याद्यात्मकत्वमेवं शब्दाभेदभाने बाधकाभावे च जात्यादेः शब्दात्मकत्वमेव सिद्धयतीति कथं तदवगाहिनो विकल्पस्य मिथ्यात्वमिति ।

वस्तुतस्तु शब्दार्थज्ञानेषु त्रिष्वपि सामान्येन गौरितिशब्दः प्रयुज्यते गौरिति शब्दः गौरिति ज्ञानं, गौरित्यर्थः । एवं च श्रोतुर्भ्रान्तिर्भवति त्रयाणामभेदोऽन्यथा समाननिर्देशासंगतिः स्यात् । वस्तुतस्तु त्रयाणां विलक्षणैव प्रतीतिः । गोशब्दाभिधेयः सास्नादिमानर्थः । अभिधायकं गवाद्यानुपूर्वीकं पदं, अभिधेयाभिधायकयोर्ज्ञानन्तु निराकारमित्येतेषां वैलक्षण्यान्नाभेदः । त्रिष्वपि

समानशब्दप्रयोगं दृष्ट्वा भ्रमो भवति एषामभेद इति । अर्थेषु शब्दस्वरूपाभेदारोपो भ्रान्तिनिबन्धन एव ।

एवमेव ज्ञानेषु शब्दार्थयोरारोप इति मतं निरसनीयम् । एकस्यार्थस्यानेकैर्दर्शनाभावप्रसंगात् । विषयस्य स्थूलत्वात् ज्ञानस्यातिसूक्ष्मत्वात्सादृश्याद्यभावात् ज्ञानेऽर्थारोपस्यात्यन्तमसम्भव एवेति बोध्यम् ।

केचित्तु शब्दस्यैव विपरिणामोऽर्थः, न तत्त्वान्तरं क्षीरस्येव दधि । यथा क्षीरमेवोपाधिवशाद्दधिरूपेण परिणमते, न ततस्तत्त्वान्तरम् । यद्वा यथा मुखस्य प्रतिबिम्बो दर्पणे जायते, तत्र प्रतिविम्बो नार्थान्तरम्, एवमर्थोपि शब्दस्यैव विपरिणामो, विवर्तो वा । सतत्त्वतोऽन्यथाभावो विपरिणामः, अतत्त्वतोऽन्यथाभावो विवर्त इति आहुः । तन्न । अमूर्ते परिणामविवर्तयोरदर्शनात् । सर्वत्र मूर्तस्यैव क्षीरादेः परिणामः, मूर्तस्यैव मुखादेर्दर्पणादौ प्रतिविम्वो दृश्यते । शब्दस्य चामूर्तत्वात्कथं मूर्तात्मना परिणामः । कथं वा विवर्तः स्यात् ।

शब्दानां चतुष्टयी प्रवृत्तिः—केचिज्जातिवचना । यथा गोघटादयः । केचिद् गुणवचनाः यथा नीलादयः । केचिद् यदृच्छाशब्दाः । डित्थादय इति व्यवस्था असंगता स्यात् । जात्यादीनामेतन्मतेऽसत्त्वात् । नीलोत्पलमित्यादौ विशेषणविशेष्यभावानुपपत्तिश्च । घटपटयोरिव नीलोत्पलयोः शब्दपरिणात्मकतया भेदात् । नहि घटपटयोर्विशेषणविशेष्यभावः कस्यचित्सम्मत;, घटादेः घटादौ व्यावृत्तिबुद्धिजनकत्वाभावात् । एवं विशेषणविशेष्यवाचकपदयो सामानाधिकरण्यमपि न स्यात् । भिन्नप्रकारेणैकार्थोपस्थितिजनकत्वस्यैव तत्त्वात्, प्रकृते च प्रकारीभूतजात्यादेरनभ्युपगमेनैकार्थवाचकत्वाभावात् स्वस्वरूपस्यैव वाच्यत्वाङ्गीकारेण नीलोत्पलशब्दयोरिव तद्वाच्ययोरपि तदात्मकतयाऽत्यन्तभेदात् । न च जात्यादीनामेकव्यक्तिविषयकनिर्विकल्पकज्ञानजनकत्ववत् नीलोत्पलयोरपि एकव्यक्तिविषयकबोधजनकत्वात्सामानाधिकरण्यमिति वाच्यम् । नियामकाभावेनैकत्रैव बुद्धिजननस्याशक्यत्वात् । अन्यथा घटपटयोरपि सामानाधिकरण्यं स्याद्, अविशेषात् । न च यत्र व्यक्तिविशेषे प्रयोगो दृष्टः, तस्यैव नियामकत्वम्, अपूर्वव्यक्तौ नियामकाभावेन प्रयोगानुपपत्तेः । किञ्चैवं घटकलशयोरपि सामानाधिकरण्यं स्यात्, तयोरपि एकव्यक्तावेवाध्यासात् । स्वरूपबोधकत्वेन पौनरुक्त्यभावात् ।

किञ्च शब्दसंकेतग्रहोत्तरं शब्दात्मकतयाऽर्थः प्रतीयते, ततः प्राक् कीदृशो ऽर्थः प्रतीयते इति, निरूपणमशक्यं, प्रतिव्यक्तिविशेषस्यानन्त्यात् ।

सर्वत्र सम्बन्धग्रहणस्याशक्यत्वात् व्यभिचाराच्च । अपूर्वव्यक्तिबोधस्याप्यङ्गीकारात् अगृहीतसम्बन्धस्य शब्दस्य प्रत्यायकत्वे प्रथमश्रवणेपि प्रत्यायकत्वापत्तेः । शब्दार्थसम्बन्धनित्यतावादिमते तु गृहीतसम्बन्धस्यैव शब्दस्य प्रत्यायकत्वनियमाङ्गीकारेण सतोऽपि सम्बन्धस्याग्रहणे नार्थप्रतीतिः । अस्य शब्दस्यायमर्थः इति विशिष्य सम्बन्धग्रहणाभावात् । न चागृहीतसम्बन्धाद् गृहीतशब्दार्थबोधः, अगृहीतशब्दादप्यर्थबोधापत्तेः । तस्माद् गृहीतसम्बन्धेन गृहीतशब्देनैवार्थबोध इति प्रामाणिकानामनुभव इति, गृहीतसम्बन्धः शब्दः यथावस्थितमर्थं बोधयति इति, नार्थः शब्दस्य परिणामः, विवर्तो वेति सिद्धम् ।

किञ्चाध्यासस्य कारणद्वयं सादृश्यम्, उपरागश्च । आद्ये शुक्तिरजताध्यासे शौक्ल्यं, द्वितीयम् अरुणस्फटिकाध्यासे लाक्षोपरागः । शब्दार्थाध्यासे नानयोरेकमपि कारणं शब्दार्थयोरत्यन्तभेदेन सादृश्यासम्भवात् । दूरस्थत्वाच्च नोपराग इत्यध्यासोऽसंगतः ।

किञ्च सविकल्पकस्य मिथ्यात्वे सर्वेषामनुमानागमादीनामप्रामाण्यमेव स्यात् । ततश्च लोकव्यवहारोच्छेदः स्यात् । त्वदीयवाक्यस्यापि सविकल्पकज्ञानजनकत्वेनाप्रामाण्यमिति नाप्रामाणिकेन कस्यचित्पदार्थस्य साधनं बाधनं वा भवति विपरीतस्यापि सम्भवादित्यलं स्वगृहे हुतवहज्वालाप्रक्षेपेण ।

नन्वध्यासानङ्गीकारेऽर्थोपस्थापकशक्तेः शब्दे विरहात्कथमर्थोपस्थितिः । न चार्थोपस्थापकशक्तिः शब्दे शक्याभ्युपगन्तुं, पित्रादिसंकेतकरणं विनापि डित्थादिपदादर्थस्मृत्यापत्तेः । पित्रादिः स्वेच्छया यत्र यादृशं शब्दं संकेतयति, तेन तादृशार्थस्मरणं जायते, नान्यथेति । पित्रादिकृत एव संकेतो न नित्य इति चेत् ? न । संकेतकरणात्प्रागपि अर्थस्मरणौपयिक्यायाः शक्तेः चैत्रादिपदे स्थितायाः पित्रादिसंकेतेनाभिव्यक्तिरिति स्वीकारात् । संकेतो हि नापूर्वां शक्तिं करोति, शक्त्याधाने पुरुषसामर्थ्याभावात्, अन्यथा पुरुषेच्छया जलेऽपि दाहानुकूलशक्तेराधानं स्यात्, किन्तु वह्निस्थितदाहानुकूलशक्तिज्ञापनवत् चैत्रादिपदे स्थितामर्थस्मारकशक्तिं पित्रादि-

बोधयति-एतत्पदेनायं व्यवहर्तव्य इति ।

न च तर्हि नियामकाभावात् सर्वशब्दे सर्वार्थशक्तिः स्यादिति वाच्यम्, इष्टापत्तेः । अत एव "सर्वे सर्वार्थवाचकाः" इत्यभ्युपगमः संगच्छते । न चैकेन घटादिपदेन घटादेरिव पटादेरपि बोधापत्तिः तस्योभयत्र शक्तिसाम्यादिति वाच्यम् । शक्तिग्रहस्यैव नियामकत्वात् । वृद्धव्यवहारादिना यस्य पदस्य यादृशार्थे शक्तिग्रहो जातः, तेन तादृशार्थस्यैव बोधो नान्यस्य, तत्र शक्तेरग्रहात् । एवं चैकत्र सर्वार्थशक्तिसद्भावेऽपि समयेन शक्तीनामभिव्यक्तिस्वीकारादापत्तिपरिहारः सुकरः ।

न चायं देवदत्तः इत्यभिधानस्थले देवदत्तपदस्मारितस्य चक्षुःसन्निकर्षात् प्रत्यक्षमपीत्येकत्र स्मृतिसम्भिन्नप्रत्यक्षोत्पत्त्या कथमस्य प्रामाण्यम्, कथं वा प्रत्यक्षत्वमपि । संस्कारेणापि जननादिति वाच्यम् । शब्दतदर्थयोस्स्मरणेऽपि पुरस्स्थस्य चक्षुःसम्बन्धात् प्रत्यक्षत्वमेव मात्रपदनिवेशप्रयोजनाभावे सन्निकर्षजन्यत्वस्यैव लक्षणे निवेशस्य पूर्वमेव प्रतिपादनात् । यदंशे स्मरणं, तदंशे माभूत् प्रत्यक्षम्, इतरांशे तु बाधकाभावात् प्रत्यक्षमेव । एवं च संस्कारेन्द्रियाभ्यां जायमानमिदमेकमेव ज्ञानम्, अर्थे प्रत्यक्षं, शब्दतत्सम्बन्धयोः स्मरणम् । न च स्मृतस्यैव गोत्वादेः प्रत्यक्षेण ग्रहणात्कथं प्रामाण्यमगृहीतग्राहिण एव तत्त्वादिति वाच्यम् । गोत्वांशे गृहीतग्राहित्वेऽपि व्यक्त्यंशे अगृहीतग्राहित्वात् । अथ पूर्वं गृहीताया एव व्यक्तेर्यत्र प्रत्यक्षम् ।

यद्वा यत्र धारावाहिकं प्रत्यक्षं जायते, तत्र कथमगृहीतग्राहित्वमिति चेदित्थम् । उत्तरोत्तरक्षणभावस्यावश्यकत्वेन तदंशे अगृहीतग्राहित्वसत्त्वात् । न च स्मरणपूर्वकत्वाभावे सत्येव निर्विकल्पस्य प्रत्यक्षत्वम् इष्टं, सविकल्पकस्य तु स्मृतिपूर्वकत्वात्कथं प्रत्यक्षत्वमिति चेत् ? न । तादृशनियमे मानाभावात् । नहि एषा राज्ञः, वेदस्य वा आज्ञा अस्मरणपूर्वकमेव प्रत्यक्षमिति । तस्मात्सविकल्पकमपि प्रत्यक्षं प्रमाणमिति, अनुमानादीनां प्रत्यक्षपूर्वकत्वात् प्रत्यक्षस्य धर्मं प्रत्यनिमित्तत्वे सिद्धे, अनुमानादीनां सुतरामनिमित्तत्वमिति सूष्ठूक्तम् तत्पूर्वकत्वाच्चेति ।

**इति कल्पकलिकायां चतुर्थं प्रत्यक्षसूत्रम्**

ननु प्रत्यक्षपूर्वकत्वेनानुमानादेरिव शब्दस्यापि धर्मम्प्रत्यनिमित्तकत्वं स्यात् लोके सर्वत्र प्रत्यक्षादिप्रमाणपूर्वकस्यैव शब्दस्य प्रामाण्यदर्शनादिति सदुपलम्भकप्रमाणाभावादभावगम्यत्वमेवास्तु धर्मस्येत्याशङ्कां निराकर्तुमाह अभावोपीति ।

ननु सदुपलम्भकेषु शब्दातिरिक्तप्रत्यक्षादिप्रमाणेषु निराकृतेषु यदि अभावप्रमाणकत्वेन धर्मम्प्रति चोदनाप्रामाण्यावधारणमसङ्गतं भवेत्, तदा तदवधारणाय धर्मम्प्रति अभावप्रामाण्यनिरासो युज्येत, तथात्विह नास्ति लोकप्रसिद्धेरपि धर्मम्प्रति निमित्तत्वात् । यथाह भगवान् वेदव्यासः ।

इदं पुण्यम् इदं पापमित्येतस्मिन् पदद्वये ।
आचाण्डालम्मनुष्याणामल्पं शास्त्रप्रयोजनमिति ।।

इदं वाप्यारामतड़ागादि पुण्यं, परोपकारकरणात् । इदं परगृहदाहादि-पापं परापकारकरणात् । तथा चोपकारापकारौपयिके कर्मणि लोके धर्माधर्म-शब्दप्रसिद्धचा एतदर्थं शास्त्रमल्पप्रयोजनं, अनुवादकत्वात् । शास्त्रं विनापि लोकप्रसिद्धेरेव धर्माधर्मयोर्ज्ञातुं शक्यत्वादित्यर्थः । अत एव ब्राह्मणादिवर्ण-विवेकः सङ्गच्छते इति चेत् ? सत्यम् । लोकप्रसिद्धिरेवात्र समीक्ष्यते किमियं लोकप्रसिद्धिः भ्रान्तिमूला, किं वा प्रत्यक्षादिप्रमाणमूला, अथवा चोदनामूलेति । तत्र प्रत्यक्षादीनां निराकरणात् चोदना, अभाव इत्येतद्वय-मवशिष्यते । अतः चोदनाप्रामाण्यावधारणाय अभावप्रामाण्यनिराकरणं युज्यत एवेत्यभिप्रायः । न च प्रसिद्धेः स्वयं प्रमाणत्वमस्तु, किं मूलप्रमा-णान्तरगवेषणयेति वाच्यम् । प्रत्यक्षाद्यमूलकलोकप्रसिद्धेरप्रमाणत्वात्, अव्य-वस्थितत्वाच्च ।

नास्तिका हिंसामेव धर्ममाहुः । केचित् प्राजापत्यादिकं तपः । अन्ये तु स्वपीड़ाकरत्वात् परपीड़ावदधर्म एवेत्याहुः । वैदिकास्तु विधिनिषेध-प्रमाणकौ धर्माधर्मौ इत्यूचुः । एवं भगवत्प्रीतिरेव धर्मः । तदप्रीतिस्तु पापम्। यत्त्वत्प्रियं तदिह पुण्यमपुण्यमन्यदिति भागवताः प्राहुः । तस्मात् प्रसिद्धेर्न स्वतःप्रमाणत्वम् । किन्तु प्रत्यक्षादिमूलकत्वेनैवेति मूलान्वेषणे चोदनातिरिक्तमूलं नोपलभ्यत इति भावः ।

### धर्मे वेदप्रामाण्यस्याधिकरणम्

सम्बन्धानित्यत्वशंकानिवृत्तये औत्पत्तिकपदार्थं व्याचष्टे भाष्यकारः ।

**सूत्रम्**—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं, वादरायणस्यानपेक्षत्वात् ॥ ५ ॥

**भाष्यम्—औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया अवियुक्तः शब्दार्थयोर्भावः सम्बन्धः, नोत्पन्नयोः पश्चात् सम्बन्धः, औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः। तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य कथम्? उपदेशो हि भवति। उपदेश इति विशिष्टस्य शब्दस्य उच्चारणम्।**

नित्यमिति। यद्यपि व्युत्पत्त्या नित्यत्वं नायाति, तथापि लक्षणया यादृगर्थो लभ्य इत्याह लक्षणयेति। अवियुक्तः—सदातन इत्यर्थः। अस्य प्रयोजनमग्रे स्फुटीभविष्यति। शब्दार्थयोः सम्बन्धो नित्य एवेति भावः। सूत्रावयवार्थमाह तस्येति। विशेषस्वरूपनिर्देशाय आह अग्निहोत्रेति पूर्वसाधितार्थमाह प्रत्यक्षादिभिरनवगतस्येति। तथा च प्रत्यक्षाद्यनवगताग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं ज्ञानं हि यस्मादयमुपदेशः। न च ज्ञानोपदेशयोर्भिन्नार्थत्वात् कथं सामानाधिकरण्यं, ज्ञानमर्थविषयकमात्मनिष्ठम्, उपदेशश्च शब्दात्मकः। नहि ज्ञानं शब्दो भवति उपदेश इति विशिष्टस्य शब्दस्योच्चारणमिति भाष्योक्तेरिति वाच्यम्। भावसाधनज्ञानग्रहणे एतादृशदोषसम्भवेपि करणसाधनज्ञानपदोपादाने दोषाभावात्। तथा च ज्ञायतेऽनेनेतिज्ञानं ज्ञापकं ज्ञाननिमित्तं प्रमाणमिति यावत्। तथा चेदृशस्य प्रमाणात्मकस्य ज्ञानस्योपदेशेन सममभेदान्वयः। उपदेशः विधिघटितं वाक्यं, धर्मे ज्ञानं प्रमाणमिति भाष्यार्थः। विशिष्टस्येति। विधिविशिष्टस्येत्यर्थः। साध्यसाधनेतिकर्तव्यताहि शिष्टप्रवृत्तिबोधलिङादिघटितवाक्यप्रवर्तकवाक्यस्येति यावत्। अत्रोपदेशपदेन ज्ञानानुत्पत्तिलक्षणमप्रामाण्यं निराकृतम्। औत्पत्तिकशब्देन च कारणदोषाधीनमप्रामाण्यं पराकृतम्। यदि सम्बन्धः कृतकः स्यात्, तदा तद्द्वारापि पुरुषदोषानुप्रवेशशङ्कया अप्रामाण्यं स्यात्। नत्वेतदस्ति शब्दार्थसम्बन्धस्य स्वाभाविकत्वेन पुरुषाधीनत्वाभावादिति भावः।

**प्रमाणान्तरबाधशङ्कानिरासायाहाऽव्यतिरेकश्चेति।** बाधकप्रमाणाभावात् न विपर्ययः। चकारेण च संशयस्य निरासः। अनुपलब्धेऽर्थे इत्यने-

नानुवादलक्षणाप्रामाण्यनिरासः सूचितः। उपलब्धार्थज्ञापकं वाक्यमनुवादकत्वात् न प्रमाणम्। अग्निर्हिमस्य भेषजमिति वाक्यवत्। अत एव च स्मरणस्याप्रमाणत्वोपपादनं संगच्छते। तथा च असन्दिग्धाविपरीतागृहीतग्राहिज्ञानं प्रमाणमिति प्रमाणलक्षणं सूचयन्नाह—**सूत्रे प्रमाणमिति।**

ननु पूर्वंप्रतिज्ञातं चोदनायाः प्रामाण्यमप्रसाध्य, उपदेशस्य तत् साधनमनुचितं, प्रतिज्ञाविरोधादिति चेत्, न। विध्युपदेशचोदनानामनर्थान्तरत्वात्। नहि पर्यायपदोपादाने प्रतिज्ञाविरोधः, प्रतिज्ञाविपरीतसाधनाभावात् प्रतिज्ञातार्थस्यैव साधनात्।

ननु 'यजेत स्वर्गकामः' इत्यादौ आख्यातेन भावनाया, धातुना यागादेः, स्वर्गादिपदेन स्वर्गादिफलस्य चोपस्थित्या परस्परसमभिव्याहारात् भावनायां साध्याकांक्षया स्वर्गादेः, साधनाकांक्षायां समानपदोपात्तधात्वर्थयागादेरन्वयाभ्युपगमेन स्वर्गफलिका यागभावनेति बोधादेव स्वर्गार्थिनो यागादौ प्रवृत्त्युपपत्तेर्विध्याश्रयणमनर्थकम्। न च होमादेः स्वर्गसाधनभावप्रतीतावपि विधिविना पुरुषप्रवृतिर्न भवतीति तदर्थं विध्याश्रयणमिति वाच्यम्। इष्टसाधनत्वबोधनमन्तरा वचनसहस्रेणापि पुरुषप्रवृत्तेरसम्भवेन तस्य च साध्यसाधनसमभिव्याहारादेव बोधात्तदर्थिनः स्वत एव तत्र प्रवृत्त्युपपत्तेः। न च 'न ब्राह्मणं हन्यात्, न सुरां पिबेदि'त्यादौ ब्राह्मणहनन-सुरापानादेः पुरुषस्य निवृत्तये तदाश्रयणम्। तत्रापि प्रतिषेधादेव हननपानादेरनिष्टसाधनत्वबोधाद् द्वेषादेव निवृत्त्युपपत्तेरिति चेत्, न। यजेत इत्यादौ आख्यातोपात्तभावनायां साध्यत्वाकाङ्क्षया समानपदोपात्तधात्वर्थयागादेरेवान्वयलाभेन, तस्य चेष्टत्वाभावात् पुरुषप्रवृत्त्यभावापत्तेः। विधिस्वीकारे तु समानपदोपात्तयागादेरपि सन्निकृष्टतरेणैकप्रत्ययोपात्तेन लिङ्वाच्यविध्यर्थपुरुषप्रवर्तनेन साध्याकाङ्क्षया भावनायामन्वयात्, तदंशे निराकाङ्क्षत्वात्साधनाकाङ्क्षायां समानपदोपात्तयागादेरन्वयाद् यागादेः श्रेयःसाधनभावो लभ्यत इति विधिस्वीकार आवश्यक इति।

एवं चोपदेशपदेनात्र चोदनैव विवक्षिता। सा च धर्मे प्रमाणमेव। असन्दिग्धाविपरीतप्रमाणान्तरानधिगतधर्मज्ञानजनकत्वात्। विपर्ययादर्शनम् प्रामाण्यनिश्चायकं न साक्षात्, किन्तु सति विपर्यये प्रामाण्यापनोदः, असति तु अपनोदकाभावात् स्वतःप्राप्तस्य प्रामाण्यस्य स्थितिः।

ननु लोके प्रमाणान्तरसम्वादादेव प्रामाण्यं दृष्टम्, इह तु अतीन्द्रियविषये प्रमाणान्तरसम्वादासम्भवात् कथं तन्निर्णय इति शङ्कानिवारणाय विपर्यया-दर्शनस्यैव प्रामाण्यनिश्चायकत्वमाह । **यच्चेति ।**

**भाष्यम्—यच्च नाम ज्ञानं न विपर्य्येति, न तत्, शक्यते वक्तुं न एतदेवमिति यथाविज्ञायते, न तथा भवति । यथैतन्न विज्ञायते । तथैतदिति । अन्यदस्य हृदये अन्यद् वाचि स्यात् । एवं वदतो विरुद्ध-मिदं गम्यते अस्ति नास्ति वेति । तस्मात् तत्प्रमाणमनपेक्षत्वात् । नहि एवं सति प्रत्ययान्तरमपेक्षितव्यं पुरुषान्तरं वापि । स्वयं प्रत्ययो ह्यसौ । वादरायणग्रहणं वादरायणस्येदं मतं कोर्त्यते बादरायणं पूजयितुम् । नात्मीयं मतं पर्युदसितुम् ।**

संवादस्य प्रामाण्यावधारणहेतुता पूर्वमेव निरस्ता । विपर्ययादर्शनमेव तत्र हेतुरित्यपि सिद्धान्तितं, प्रकृते च विपर्ययो न दृश्यतेऽतः प्रमाणं चोदना । पौरुषेयवाक्यन्तु पुरुषदोषादप्रमाणमपि । यथा 'शुक्ताविदं रजत-मिति । अत्र यथा विज्ञायते पुरोवर्ति वस्तु रजतात्मना । न तथा न रजता-त्मकं । यथा न विज्ञायते शुक्तिशकलत्वेन तथा शुक्तिशकलमेतत् । एवं च तत्र पुरुषस्य दोषः प्रतारकस्य हृदये अन्यत्तु स्वयमपि जानाति नेदं रजतं, किन्तु परप्रतारणायेदं रजतमिति ब्रवीति इत्याह **अन्यदिति** । एवं चानाप्त-वाक्येऽयं सन्देहो भवति यथोच्यते, तथास्ति नास्ति वेत्याह **एवं वदत** इति । तथा च पुरुषदोषापराधाधीनमप्रामाण्यं पौरुषेयवाक्ये एव । अपौरुषेये तु वक्तुरभावात् निराश्रया दोषाः न प्रामाण्यं निघ्नन्ति इत्याह '**अनपेक्षत्वा-दिति** । एवं चापौरुषेयवाक्यप्रामाण्यनिर्णयाय न प्रत्ययान्तरं तन्मूलभूत-प्रत्यक्षादिप्रमाणान्तरं सम्वादकत्वेनापेक्षितव्यम्, नवा अनाप्तपुरुषापेक्षया पुरुषान्तरमाप्तपुरुषःतदपेक्षया पौरुषेये वाक्ये वक्तृगुणावधारणाधीनं प्रामाण्यं, नत्वपौरुषेये वेदवाक्ये इत्यतोऽनपेक्षम्प्रामाण्यमस्य । वादरायणग्रहणं पूजार्थं, नत्वात्मनोऽननुमतिसूचनार्थम् । पूजा च ग्रन्थस्य वादरायणस्य च भवति धन्यो महर्षिर्वादरायणोऽतीन्द्रियज्ञाननिधिर्यस्य मतं मीमांसाशास्त्रेप्यस्ति इति। प्रशंसारूपा पूजा, वादरायणस्य प्रतीयते धन्यमिदमतिप्रामाणिकं मीमांसाशास्त्रं यस्मिन् वादरायणस्यापि महर्षेर्मतमस्तीति प्रकृतग्रन्थस्यापि प्रामाणिकार्था-भिधानकरूपा स्तुतिः प्रतीयते । एतदुभयस्तुत्या ग्रन्थे प्रामाणिकत्वनिश्चयः,

ततः प्रेक्षावतामसन्दिग्धा प्रवृत्तिरिति युज्यत एव तदभिधानम् । सूत्रेऽपीति भावः ।

**इति कल्पकलिकायामौत्पत्तिकं पञ्चमं सूत्रम्**

**वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयाञ्चकार तस्य निमित्तपरोष्टिरित्येवमादि ।** न परीक्षितव्यं निमित्तं प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि, तदन्तर्गतञ्च शास्त्रम्, अतस्तदपि न परीक्षितव्यम् । **इत्येवमादिमिति ।** इत्येवमादिर्यस्मिन् स इत्येवमादिर्ग्रन्थः, तं इत्येवमादिं ग्रन्थं वृत्तिकारोऽन्यथा वर्णयाञ्चकारेत्यर्थः । विशेष्यग्रन्थस्य पुल्लिङ्गतया तद्विशेषणस्यापि तदेव युक्तमिति मकारान्तमित्येवमादिमिति पाठ एव समीचीनः ।

यत्तु सामान्येन नपुंसकत्वविवक्षया लुप्तमकारान्त इत्येवमादि इति पाठः साधुरित्युक्तम् । तदसत् । अनुक्तविशेष्ये सामान्यविवक्षणेन नपुंसकं भवतीत्येव तदर्थतया प्रकृते विशेष्यस्योपादानेन तदनुशासनाप्रवृत्तेः । सत्यपि विशेष्ये शरदः कृतार्थतेत्यादौ सामान्यविवक्षया नपुंसकप्रयोगोपपादनन्तु गत्यन्तरविरहादाश्रितम्, न चेह गतिविरह इति मकारान्त पाठ एव श्रेयान् ।

**न परीक्षितव्यमिति ।** न च नञः सूत्रेऽनुपादानान्निमित्तपरीक्षानिषेधपरतया व्याख्यानमयुक्तमिति वाच्यम्, नञोऽध्याहरेण लाभसम्भवात् । **प्रसिद्धानीति ।** सन्दिग्धे विचारः प्रवर्तते, विचारस्य निर्णयफलकत्वात् । प्रत्यक्षादीनि लोके प्रसिद्धानि प्रमाणानि । नहि केचित् प्रत्यक्षादिषु संशेरते, इदं प्रमाणं न वेति इति । विचारफलस्य निर्णयस्य पूर्वमेव सिद्धत्वात् एतद्विचारो निष्फलत्वान्न कार्यं इत्यभिप्रायो वृत्तिकारस्य । तदेतद् वृत्तिकारव्याख्यानम् अर्थतोऽनुवदति भाष्यकारः ।

**भाष्यम्—अत्रोच्यते व्यभिचारात् परीक्षितव्यम् । शुक्तिका हि रजतवत् प्रकाशते । यतः तेन प्रत्यक्षं व्यभिचरति तन्मूलत्वाच्चानुमानादीन्यपि । तत्रापरीक्ष्य प्रवर्तमानोर्थात् विहन्येत अनर्थम् चाप्नुयात् कदाचित् ।**

अयं भावः यदि प्रत्यक्षमात्रव्यभिचारि स्यात्, तदा तत्परीक्षणमसङ्गतं स्यात् । परीक्षाफलस्य तत्प्रामाण्यनिर्णयस्य परीक्षातः पूर्वमेव जातत्वात् ।

किन्तु प्रत्यक्षं व्यभिचार्य्यपि दृश्यते इत्याह भाष्ये **शुक्तिका** हि रजतवत् प्रकाशते । न चेत्तज्ज्ञानं प्रमाणमितिकेनाप्यङ्गीक्रियते । तथा च प्रत्यक्षेऽपि व्यभिचारदर्शनात्तत् प्रामाण्यं परीक्षणीयमेव ।

ननु शुक्तिरजताभासस्यायथार्थत्वलक्षणव्यभिचारेऽपि, तद्भिन्नस्य प्रत्यक्षस्य न व्यभिचार इति प्रत्यक्षस्य व्यभिचारोद्भावनं भाष्यकारस्य कथं संगच्छते इति चेत् ? इत्थम् । प्रत्यक्षतदाभासयोर्लक्षणभेदमज्ञात्वा द्वयोरिन्द्रियजन्यत्वाविशेषात्प्रत्यक्षत्वमेवेत्यभिमानेनाभासव्यभिचारः प्रत्यक्षव्यभिचारत्वेनोदाहृत इति ध्येयम् । तस्मात् प्रत्यक्षं परीक्षणीयमेव ।

**अपरीक्ष्येति** । शुक्तौ रजतबुद्धया प्रवर्तमानः पुरुषः शुक्तिमेव लभते, न रजतमित्याभासितादर्थाद्रजतात् प्रच्यवते, क्वचिच्च सर्पे रज्जुबुद्धया प्रवर्तमानः रज्जुं न लभते, अनर्थं सर्पं लभते इति समीहितलाभाय परीक्षितव्यमेव प्रत्यक्षादीतिभावः ।

**भाष्यम्—नैतदेवम् । यत्प्रत्यक्षं न तद् व्यभिचरति, न तत् प्रत्यक्षम् । किन्तर्हि प्रत्यक्षम् ? सत्सम्प्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म सत् प्रत्यक्षम् । यद्विषयं ज्ञानम्, तेनैव सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत् प्रत्यक्षम् । यदन्यविषयज्ञानमन्यसम्प्रयोगे भवति न तत् प्रत्यक्षम् । कथं पुनरिदमवगम्यते ? इदं तत्सम्प्रयोगे इदमन्यसम्प्रयोगे इति । यत् न अन्यसम्प्रयोगे सत् तत्सम्प्रयोगे, एतद्विपरीतमन्यसम्प्रयोग इति । कथं ज्ञेयम् यत् शुक्तिकायामपि रजतं मन्यमानो रजतसन्निकृष्टं मे चक्षुरिति मन्यते ।**

भवतु नाम यस्य प्रत्यक्षं तदाभासयोर्विवेको नास्ति, तदनुसारेण प्रत्यक्षतदाभासयोरविशेषादाभासव्यभिचारेण प्रत्यक्षपरीक्षणम् । यस्य तु पुनः प्रत्यक्ष-तदाभासयोर्विवेकोऽस्ति, तस्य सर्वत्राव्यभिचारित्वात्प्रत्यक्षमपरीक्षणीयमेव । शुक्तिरजतादिज्ञानस्य तु न प्रत्यक्षत्वम् । किन्त्वाभासत्वमेवेति भवतु तस्य व्यभिचारः किमायातमेतेन प्रत्यक्षस्य ततो भिन्नस्येति अभिप्रायेणाशङ्कते । **नैतदेवमिति** । यत्प्रत्यक्षमदुष्टेन्द्रियजन्यम्, तन्न व्यभिचारि, यच्च व्यभिचरति आभासम्, तन्न प्रत्यक्षमदुष्टेन्द्रियसन्निकर्षजत्वाभावादिति, आभासव्यावृत्तं प्रत्यक्षलक्षणम् पृच्छति **किमिति** । उत्तरमाह **सत्सम्प्रयोग इति** । यद्यपि विषयविशेषणोपादाविरहेण शुक्ति रजताद्याभासे-

ऽतिव्याप्त्या भाष्यकृता सत्सम्प्रयोग इति सूत्रं लक्षणपरतया न व्याख्यातम्, किन्तु प्रत्यक्षानुवादकमिति व्यवस्थापितम्, तथापि वृत्तिकृता तत्सतो व्यत्यासम् कृत्वा तत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्यं सत् प्रत्यक्षमिति सूत्रं मत्वा लक्षणपरतया व्याख्यातम्। तदेव दर्शयति भाष्यकारः **तत्सम्प्रयोग इति**। एवं च येन विषयेणेन्द्रियसम्प्रयोगः, तद्विषयकमेव प्रत्यक्षम्, शुक्तिरजताद्याभासेतु शुक्तिशकलेनेन्द्रियसम्प्रयोगः, ज्ञानं तु रजतस्य, तेन सह नेन्द्रियसम्प्रयोग इति न तत्रातिव्याप्तिरित्याह **तेनैवेति**। न च प्रत्यक्षलक्षणे ज्ञातेऽपि आभासपरिज्ञानाय तस्यापि लक्षणम् वाच्यम्, अन्यथा तदज्ञाने तद्विपरीत प्रत्यक्षविवेको न स्यादिति वाच्यम्। अर्थापत्त्यैवाभासज्ञानसम्भवात्तदर्थलक्षणानावश्यकत्वात्। तथा हि सत्सम्प्रयोगजम् प्रत्यक्षमित्यभिधाने अर्थाद् ज्ञायते प्रत्यक्षविपरीतमाभासम् अन्यसम्प्रयोगजमिति, न सूत्रकृतस्तस्य विशिष्य लक्षणकरणावश्यकता इत्यभिप्रायेणाह **एतद्विपरीतमिति**।

**भाष्यम्—बाधकं हि यत्र ज्ञानमुत्पद्यते नैतदेवम्, मिथ्याज्ञानमिति, तत् अन्यसम्प्रयोगे विपरीतं तत्सम्प्रयोगे इति प्राक्बाधकज्ञानोत्पत्तेः कथमवगम्यते यदा न तत्काले सम्यग् ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद्विशेषः। यदा हि चक्षुरादिभिरुपहतं मनो भवति, तदिन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्बाह्यो वा विषयः, ततो मिथ्याज्ञानम्, अनुपहतेषु हि सम्यग् ज्ञानम्। इन्द्रियमनोऽर्थसन्निकर्षो हि सम्यग्ज्ञानस्य हेतुः। असति तस्मिन् मिथ्याज्ञानम्, तदुभयगतो दोषो मिथ्या ज्ञानस्य हेतुः। दुष्टेषु हि ज्ञानं मिथ्या भवति।**

नन्वाभासदशायां तत्र तत्सम्प्रयोगजत्वमेव प्रतीयते, नान्यसम्प्रयोगजत्वम्, अत एव अध्यासवान् रजतसन्निकृष्टं मे न चक्षुरित्येव जानाति। तथा चाभासविवेको दुर्घट इत्याशङ्कायामाह—**बाधकेति**। तथा च नेदं रजतमिति बाधकज्ञाने जाते इदं रजतमिति ज्ञानं न प्रत्यक्षम्, रजतेन्द्रियसन्निकर्षजत्वाभावात् किन्त्वाभासम्, अन्यसन्निकर्षजत्वात्। यत् एतत् विपरीतम्, तत्प्रत्यक्षम्। तत्सम्प्रयोगजमिति प्रत्यक्षतदाभासयोर्विवेको-बाधकज्ञानेन भवति।

ननु शुक्तिशकले पूर्वमिदं रजतमिति ज्ञानं जायते। ततो नेदं रजतमिति ज्ञानं वाधते नेदं रजतमिति ज्ञानमिदं रजतमिति ज्ञानं वाधते इत्येव कुतः? इदं रजतमिति ज्ञानमेव नेदं रजतमिति ज्ञानं कुतो न वाधते विशेषाभावादिति वाच्यम्। पूर्वाभासज्ञानवाधनं विना उत्तरस्य समीपे ज्ञानस्योत्पत्तिरेव न स्यादित्यात्मलाभाय उत्तरेण पूर्ववाधः स्वीक्रियते, सर्वज्ञानोत्पत्तिबेलायान्तु उत्तरज्ञानस्यासत्त्वादेव तद्बाधनं विनैव पूर्वज्ञानस्यात्मलाभ इति विशेषदर्शनात् पूर्वस्योत्तरवाधकत्वमिति।

न च पूर्वज्ञानस्य मिथ्यात्वे उत्तरज्ञानेन बाधः, तद् वाधेन पूर्वज्ञानस्य मिथ्यात्वमित्यन्योन्याश्रय इति चेत्? न। उत्तरज्ञानेन पूर्वज्ञानमिथ्यात्वोत्पत्तेरनङ्गीकारात्। कारणदोषाज्जातस्य पूर्वज्ञान पूर्वज्ञानमिथ्यात्वस्यावगमो वाधकज्ञानेनेत्येव स्वीकारात्। एवं सति न पूर्वज्ञानमिथ्यात्वमाश्रित्योत्तरज्ञानमुत्पादः, तस्य निर्दुष्टेन्द्रियजन्यत्वादिति क्वान्योन्याश्रय इति।

नन्वेवं वाधकज्ञानोत्तरं मिथ्यात्वनिर्णयोपपादनेऽपि तदुत्पत्तेः प्राक् तन्निर्णयः कथमुपपद्यताम्। तदानीं समीचीन-मिथ्याज्ञानयोर्विशेषानवधारणादिति आह—**प्रागिति** तथा च मिथ्याज्ञानानुत्पत्तावपि कारणदोषज्ञानेनैव-तन्निर्णय इति मनोदोषं दर्शयति चक्षुरादिभिरुपहतं मनो भवतीति। तथा चेन्द्रियप्रवृत्तिनियामकस्य मनसोऽनवस्थानात्तत्र मिथ्या प्रत्ययस्समुत्पद्यते। इन्द्रियस्य बाह्यस्य दोषमाह-**तिमिरादिभिरिति**। तथा च तिमिरादिदोषदूषितलोचनस्य पुरःस्थस्थाणौ स्थाणुर्वा पुरुषो वेति मिथ्याज्ञानजननमिति विषयदोषं दर्शयति—**सौक्ष्म्यादिति**। आदिपदेन शुक्तिशकलगतश्वैत्यचाकचिक्यादयः। तथा च दुष्टकारणनिबन्धनं मिथ्यात्वम्, दोषरहितकारणेन समीचीनमित्याह **अनुपहतेषु इति**।

न चैवं दोषाभावोऽपि ज्ञानगतमिथ्यात्वे कारणमित्यायातम्, तथा च परतः प्रामाण्यं स्यादित्याशंकानिवृत्तये समीचीनज्ञानकारणं दर्शयति **इन्द्रियेति**। यद्यपि इन्द्रियार्थसन्निकर्षेऽसमीचीनज्ञानस्यापि कारणं तथापि ग्राह्येन्द्रियसन्निकर्षस्तत्र नास्ति सन्निकर्षपदेन ग्राह्यसन्निकर्षस्यैव प्रकृते विवक्षितत्वात् इति भावः। ग्राह्येन्द्रियसन्निकर्षाभावे मिथ्याज्ञानमित्याह— **असतीति**। इन्द्रियत्वेन बाह्यान्तरयोः संग्रहः इत्यभिप्रायेणाह **तदुभयेति**। विषयेन्द्रियोभयेत्यर्थः। तथा च विषयेन्द्रियोभयगतदोषो मिथ्याज्ञानहेतुः।

मिथ्याज्ञानं प्रति दोषस्यान्वयं प्रदर्श्य व्यतिरेकं दर्शयितुं पृच्छति ।

**भाष्यम्——कथमवगम्यते । दोषापगमे सम्प्रतिपत्तिदर्शनात् । कथं दुष्टादुष्टावगम इति चेत् ? प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेमहि, प्रमाणाभावाददुष्टमिति मन्येमहि । तस्माद् यस्य चदुष्टं करणम्, यत्र मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो, नान्य इति ।**

कथमिति । दोषापाये समीचीनज्ञानदर्शनादन्वव्यतिरेकाभ्यां दोषस्य मिथ्याज्ञानहेतुत्वमित्यभिप्रायेणाह—**दोषापगमे** इति ।

नन्विन्द्रियाणामतीन्द्रियतया तद्गतदोषाणां प्रत्यक्षत्वासम्भवात्तद्विशिष्टेन्द्रियादेरवगमो दुर्घटः, सम्भावनामात्रेण दोषपरिज्ञानं तु समीचीनज्ञानेऽपि सुलभमित्याशयेन पृच्छति-कथं **दुष्टावगम** इति । सम्वादेन गुणावधारणेन वा दोषाभावः शक्यज्ञान इत्याह **प्रयत्नेनेति** । न चैतावता परतः प्रामाण्यमाशङ्कनीयम् । दोषोत्सारणमात्रप्रयोजनत्वात्सम्वादगुणावधारणादेः, ततश्च सम्वादादिना दोषाभावे निश्चिते अदुष्टेन्द्रियादिजन्यत्वेन ज्ञानस्य स्वतः प्राप्तं प्रामाण्यमपनोदकाभावान्निश्चीयते इति भावः । मिथ्यात्वनिश्चयकारणमुपसंहरति—**तस्मादिति**, यस्य च करणं दुष्टमित्यनेन दोषज्ञानस्य, मिथ्यात्वनिश्चयहेतुत्वं बोध्यते, यत्र चेत्यादिना वाधकज्ञानस्यापि हेतुत्वं तत्र दर्शितम् । तथा च दोषज्ञानेन, वाधकज्ञानेन वा मिथ्यात्वनिर्णयः । पीतः शंखः इत्यादौ चन्द्रमण्डलपरिमाणादौ च तदानीं विपरीतज्ञानानुदयोऽपि दोषज्ञानादेव मिथ्यात्वनिर्णयो नान्यथा । शुक्तिरजतादिस्थले तु नेदं रजतमिति विपरीतज्ञानात् पूर्वज्ञानस्येदं रजतमितिज्ञानस्य मिथ्यात्वनिर्णय इतिभावः । न च विपर्ययज्ञानस्यैव मिथ्यात्वनिर्णायकत्वमस्तु, किन्दोषाज्ञानानुमानेनेति चेन्न, मिथ्याज्ञानोत्तरं सर्वत्रविपर्ययोत्पादे नियमाभावात् । अत एव दूरत्वादिदोषावधारणेन चन्द्रमण्डलादिपरिमाणज्ञाने मिथ्यात्वसिद्धिः, अन्यथा तत्र विपर्ययज्ञानानुत्पादेन तदसिद्धिप्रसङ्गात् ।

एवं पित्तादिदोषदूषितलोचनस्य पीतः शंख इति ज्ञानदशायां विपर्ययज्ञानानुत्पादेऽपि कारणदोषावगमादेव तन्निर्णयः, पुरुषान्तरविपर्ययज्ञानेन तत्र मिथ्यात्वोपपादनन्तु न युक्तिसहम् । आम्नायार्थनिश्चयेऽपि नास्तिकादिविपर्ययेण मिथ्यात्वापत्तेः, तत्तन्मताभ्युपगन्तृपुरुषविपर्ययापेक्षेण तु शाक्यादि-

सिद्धान्तस्यापि मिथ्यात्वं न स्यात्, तेषां तत्र विपर्ययज्ञानानुदयात् । एवं च यत्र बाधकज्ञानं नावतरति, तत्र कारणदोषज्ञानेनैव मिथ्यात्वनिर्णयः, तदवतारदशायां तु तेनेति बोध्यम् । यद्यपि विपर्ययस्थलेऽपि दोषोऽस्त्येव । तथापि पूर्वोपस्थितविपर्ययेण मिथ्यानिर्णये पश्चादनुमीयमानस्य दोषस्य तत्राप्रयोजकत्वमित्याशयात् । एवञ्च यज्जातीयज्ञाने क्वचिद् व्यभिचारो दृष्टः तज्जातीयज्ञाने जाते बाधकं विना तत्र संशयो जायते, यथा पित्तादिदोषदूषितलोचनः प्रथमं शंखं पीतं पश्यन्, किमयं पीत उत पूर्वदृष्टवत् शुक्ल इति संशयेन निश्चये प्रतिबद्धे पश्चात् पित्तादिदोषज्ञानात्तत्र मिथ्यात्वं निश्चिनोति । न च चन्द्रमण्डलादिपरिमाणज्ञानेनेवान्यत्रापि विना विपर्ययोदयं युक्तिमूलकानुमानेन प्रत्यक्षस्याभासत्वं स्यादिति वाच्यम् । तथा सति जात्यादिज्ञानस्यापि धर्मिभेदाभेदविकल्पयुक्तिमूलकेनानुमानेनाभासीकरणत्वापत्त्या गोत्वादनुभवप्रामाण्यापलापापत्तेः । एवञ्च यादृशज्ञाने व्यभिचारो दृष्टः, तादृशज्ञाने एव संशयो जायते, नान्यत्रेति, आलोकमध्यवर्त्तिघटादिप्रत्यक्षे क्वचिदपि व्यभिचारादर्शनान्न तादृशज्ञाने तत्सन्देह इति, न तत्र कारणदोषानुमानेन मिथ्यात्वावगमः शक्यसम्पादन इति ।

जात्यादिज्ञानस्य मिथ्यात्वे तद्बाधः, तद्बाधेन तु तस्य मिथ्यात्वावगम इत्यन्योन्याश्रयः स्यात् । न च भवन्मतेप्येष दोषः गोत्वादिज्ञानस्य बाधकादर्शनेऽमिथ्यात्वं तदमिथ्यात्वे च बाधाभाव इति वाच्यम्, स्वतः प्रामाण्यवादिनां ज्ञानसत्यत्वस्य बाधकानपेक्षितत्वेन स्वत एवोत्पत्त्या तद्विरोधादेव बाधकज्ञानानुदयान्नान्योन्याश्रय इति दिक् ।

**इति कल्पकलिकायां वृत्तिकारव्याख्यानम् ॥**

बौद्धास्तु स्वप्ने यथा बाह्यार्थं विनैव अनादिवासनावशात् विविधगजतुरङ्गादिज्ञानं जायते इति सर्वानुभवसिद्धम्, एवं प्रबोधसमयेऽपि बाह्यार्थं विनैव 'कुम्भोऽयं, स्तम्भोऽयमि'त्यादिकुम्भस्तम्भादिविविधविषयकप्रतीतिरुपपद्यते एवेति, नैतत्प्रतीतिमात्रेण बाह्यार्थसद्भावः स्वीकर्तुमुचितः । अन्यथा स्वाप्निकपदार्थाभ्युपगमोऽपि स्यात्, प्रत्ययस्योभयत्र साम्यात् । न च प्रबोधकाले स्वाप्निकपदार्थानां बाधदर्शनात्, तदानीमर्थसद्भावोपपत्तिविरहाच्च तेषां मिथ्यात्वेऽपि प्रबोधकाले जायमानस्य स्तम्भादिप्रत्ययस्य

तद्वैपरीत्यान्न मिथ्यात्वमिति वाच्यम् ? प्रबोधकाले प्रबोधकालिकप्रत्ययान्तमिव स्वप्नकाले तादृशप्रत्ययानामपि बाधदर्शनाभावात् । प्रबोधकाले स्वाप्निकप्रत्ययबाधनन्तु स्वप्नदशायां प्रबोधकालिकप्रत्ययबाधेन समम्, न च तथा, अर्थसद्भावोपपत्तिविरहात् स्वाप्निकप्रत्ययस्य मिथ्यात्वम् । प्रबोधकालेऽपि अर्थसद्भात्रोपपादकप्रमाणविरहेण दोषसाम्यात् कात्स्न्यैंकदेशवृत्तिविकल्पादिपर्यनुयोगेनावयवातिरिक्तावयविनो विरहेण परमाणुपुञ्जात्मकस्य प्रत्यक्षविषयत्वासम्भवेन च तदुपपादकप्रमाणाभावात् ज्ञानस्यान्तरस्थत्वेन, विषयाणाञ्च बाह्यतया तयोः सम्बन्धाभावेन ग्राह्यग्राहकभावासम्भवात् ज्ञानस्य स्वाकारमात्रग्राहित्वनियमाच्च ।

न च बाह्यार्थस्वीकाराभावे तद्विषयकव्यवहारानुपपत्तिः, स्वप्नादिविषयव्यवहारवदेव तदुपपत्तेः । विषयसद्भावेपि तदज्ञाने तद्व्यवहारो न दृश्यते । तदभावेऽपि तद्ज्ञाने व्यवहारो दृश्यत इति. अन्वयव्यतिरेकाभ्यां ज्ञानस्यैव व्यवहारहेतुत्वमङ्गीक्रियते, नार्थस्याऽसम्भवात् । अत एवातीतानागतवस्तुविषयकव्यवहारः संगच्छते । अन्यथा व्यवहारसमये विषयाणामसत्त्वात्, तद्व्यवहारो न स्यात् । न चातीतानागतानां कदाचित् सत्स्वीकारेण तद्व्यवहारः सम्भवति, सर्वदाबाह्यार्थास्वीकारे तु खपुष्पादिवत्तद् व्यवहारो नैव स्यादिति वाच्यम् । व्यवहारदशायां विषयासद्भावस्योभयत्रसाम्येन कालान्तरेऽर्थसत्त्वप्रयुक्तवैलक्षण्यस्य प्रकृते अकिंचित्करत्वात् ।

न च बाह्यविषयभेदानुपगमे ज्ञानभेद एव न स्यात्, द्विषयभेदस्यैव ज्ञानभेदनियामकत्वाद्, अन्यथैकविषयेऽपि ज्ञानभेदापत्तिरिति वाच्यम् । स्वप्नविज्ञानभेदवद्विनापि बाह्यविषयमनादिवासनाधीनविचित्रज्ञानशक्तिभेदादेव तद्भेदोपपत्तेः । न चानुभूतानामेव बाह्यविषयाणां निद्रादिदोषवशेन स्वप्नेऽन्यथाभानमिति, विषयभेदप्रयुक्तस्यैव ज्ञानभेदस्य तत्रापि स्वीकार इति वाच्यम् । अननुभूतानामपि स्वशिरश्छेदनादीनां स्वप्ने भानदर्शनादननुभूतबाह्यार्थस्यैव स्वप्ने भानमिति नियमानङ्गीकारात् । जन्मान्तरानुभूतस्वशिरश्छेदनादीनामेव स्वप्ने भानम्, नाननुभूतानामिति वचनन्त्वतित्रपाकरम् । तथा सति जन्मान्तरानुभूतजात्यादीनामपि स्मरणापत्तेः । न च बाह्यार्थभेदानङ्गीकारे ज्ञाननिष्ठशक्तिभेदनियामकवासनाभेद एव दुर्घट इति

वाच्यम्, पूर्वपूर्ववासनाभेदस्योत्तरोत्तरज्ञानशक्तिभेदनियामकत्वोपगमात् । न चेयमनवस्था क्षतिकरी, बीजाङ्कुरवदेतस्या अदोषत्वात् । न च बाह्यार्थस्येव प्रत्ययस्यापि असत्वमेवास्तु, किन्तदीयस्वत्वस्वीकाराभिनिवेशेनेति वाच्यम् । सर्वव्यवहारविलोपापत्त्या जगदान्ध्यप्रसङ्गादिति, अर्थस्य साम्वृत्तिकं सत्त्वमभ्युपेयते—

तथा चोक्तं बाह्यैः–

पररूपं स्वरूपेण यया सम्व्रियते धियेति ।
एकार्थप्रातेभासिन्या भावानाश्रित्यभेदिनः ।।
तया संवृत नानात्वात् प्रकृत्याभेदिनस्स्वयम् ।
अभेदिन इवाभान्ति भावारूपेण केनचित् ।।
तस्याश्चाभिप्रायवशात् सामान्यं संप्रकीर्तितम् ।
तदसत् परमार्थेन यथा संकल्पितं यथा ।।

प्र० मा० परि० श्लो०

बाह्यार्थस्य असद्भावस्वरूपं स्वरूपेण परमार्थिकसत्त्वेन संव्रियते आच्छाद्यते, इति ।

असन्नपि बाह्यार्थो विज्ञानेन तदसत्त्वसंवरणात् सन्निवोपलभ्यते, एवञ्च सत्त्वं द्विविधं-पारमार्थिकसत्त्वम्, सांवृत्तिकसत्वञ्च । आद्यं विज्ञाने एव, द्वितीयमर्थे इति, अर्थस्यात्यन्तासत एव सर्वत्र भानात् । सर्वज्ञानानां मिथ्यात्वमिति दोष-बाधकज्ञानयोरेव मिथ्यात्वनिर्णायकत्वोक्तिरयुक्ता । एवं चोदना धर्मे प्रमाणमन्यदप्रमाणम् । तत्संप्रयोगजं प्रत्यक्षम्, अन्यसंप्रयोगजमाभासं । अग्निहोत्रादि पुण्यम्, तत्फलं स्वर्गादि, सुरापानादि पापम्, तत्फलं दुःखम्, विधेः प्रवर्त्तनमर्थः । अर्थवादस्य प्ररोचनमर्थः । स्मृत्याचारयोः प्रामाण्याप्रामाण्यविचारः । कारीर्य्यादीनामैहिकफलत्वम् । दर्णपूर्णमासादीनाम् आमुष्मिक फलत्वमित्यादिसर्वोपि विचारः निष्फलः, सर्वविधीनामप्रामाण्यादिति प्राहुः । तन्मतं दूषयितुमुपन्यस्यति ।

**भाष्यम्—ननु सर्व एव निरालम्बनः, स्वप्नवत् प्रत्ययः । प्रत्ययस्य हि निरालम्बनता ह्यभाव उपलक्षितः स्वप्ने । जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति । तस्मात् सोपि निरालम्बनः ।**

ननु **सर्वएवेति** । निरालम्बनः बाह्यार्थशून्यः । दृष्टान्तमाह **स्वप्न इति** । नियमयति—**तस्मादिति** । तथा चायं प्रयोगः सर्वोपि प्रबोधकालिकः प्रत्ययो निरालम्बनः प्रत्ययत्वात्, स्वाप्निकप्रत्ययवत्, प्रत्ययश्चासौ, नस्मान्निरालम्बन इति ।

ननु तन्मते निखिलप्रत्ययस्य निरालम्बनत्वमिष्टम्, जाग्रतोपि स्तम्भ इति भाष्येण प्रबोधकालिकप्रत्यस्यैव पक्षता प्रतीयते । तदयुक्तमिति चेत् ? न । निखिलप्रत्ययस्य प्रत्यक्षीकरणे पक्षतावच्छेदकसामानाधिकरण्येनानुमितौ स्वप्ने सिद्धसाधनता, अवच्छेदकतावच्छेदेनानुमितौ दृष्टान्ताभावः, एवशब्दोपादानवैयर्थ्यं च स्यात् । स्वान्वयिप्रतियोगिव्यवच्छेदकत्वादेव शब्दस्य । स्वं एव शब्दः, तदन्वयि सर्वार्थसाकल्यं तत्प्रतियोगिवैकल्यं तद्व्यवच्छेदबोधनं विफलम् । सर्वशब्देनैव तद्बोधनात् । जाग्रत्-प्रत्ययस्यैव पक्षोकरणे तु जाग्रत्प्रत्ययपरिग्रहार्थ एव शब्दः । स्वाप्निकप्रत्ययस्य व्यवच्छेदकः । एवं च यः कश्चिद् जाग्रत्प्रत्ययस्य इत्यर्थो भाभूत, किन्तु सर्व एव जाग्रत्प्रत्यय इति लाभाय सर्वशब्दः, एवं च तत्रत्य एवशब्दः सर्वशब्दस्य जाग्रत्प्रत्ययपरत्वं व्यवस्थापयति । तदेतत् स्तभ्भादीतिभाष्येण स्फुटीकृतम् । शुक्तिरजतादिजाग्रत्प्रत्ययस्य मिथ्यात्वस्वीकारात् सिद्धसाधनमिति सर्वशब्दोपादानम् एवं स्तम्भादिप्रत्ययस्य मिथ्यात्वानङ्गीकारात् । न सिद्धसाधनमिति भावः, निरालम्बनमित्यनेन बाह्यार्थशून्यत्वं विवक्षितम्, अन्यथा बौद्धमते विज्ञानस्य स्वांशविषयकत्वस्वीकारेण सर्वथा निरालम्बनत्वाभावाद्विरोधः स्यादिति, न चास्य भाष्यस्य बौद्धानुमाननिर्देशपरत्वेन व्याख्यानमयुक्तम्, अत्र हेतोरनिर्देशादिति वाच्यम् । पंचम्यन्तेनैव हेतुनिर्देशः कार्यः इति नियमाभावेन प्रत्ययस्य हीति भाष्येण स्वप्ने निरालम्बनत्व-प्रत्ययत्वयोर्व्याप्तिं प्रदर्श्य, जाग्रतोपीति भाष्येणोदाहरणो दर्शित-व्याप्तिविशिष्टप्रत्ययत्वस्य जाग्रत्प्रत्यये उपसंहारात् प्रत्ययत्वस्य स्पष्टमेव हेतुत्वबोधनात् । न च हेतोर्विपक्षव्यावृत्तत्वबोधनार्थं यन्न निरालम्बनम्, न तत्प्रत्यय इति व्यतिरेकोदाहरणमपि आवश्यकत्वात् प्रदर्शयितुं युक्तमिति किमर्थं तदुपेक्षितम् । विज्ञानवादिनां तदतिरिक्तवस्तुनोऽभावेन विपक्षवृत्तित्वशङ्कायाः स्वत एवानुत्पत्या तन्निराकरणाय व्यतिरेकोदाहरणप्रदर्शनस्यानावश्यकत्वादिति ।

**भाष्यम्—उच्यते स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतीति स्वप्नेऽप्येवमेव सुपरिनिश्चिता आसीत् प्राक् प्रबोधनात् ।**

उत्तरमाह—**अत्रोच्यते इति ।**

सुपरिनिश्चिता—बाधकप्रत्ययरहिता तथा च अबाधितबाह्यार्थविषयक-प्रत्यक्षादिप्रतीतिः बाह्यार्थं सुपरिनिश्चितं व्यवस्थापयन्ती तद्विरुद्धं निरालम्ब-नत्वानुमानं बाधते वह्नौ शैत्यानुमानवदिति न जाग्रत्प्रत्ययस्य मिथ्यात्वम् । यथा शुक्तिशकलादाविदं रजतमिति प्रत्ययस्य नेदं रजतमिति बाधकप्रत्ययेन मिथ्यात्वमेवं स्तम्भादिप्रत्ययस्य नायं स्तम्भादिरिति बाधकप्रत्ययादर्शनेन न मिथ्यात्वमिति स्वाप्निकप्रत्ययानुरोधेन सुपरिनिश्चितस्य जाग्रत्प्रत्ययस्य मिथ्यात्वानुमानं कालात्ययापदिष्टमेवेति भावः ।

ननु सांवृत्तिकसत्त्वमादायैव बाह्यार्थसत्वावगाहि प्रत्यक्षाद्युपपद्यमानं पारमार्थिकसत्वाभावतात्पर्येण बाह्यार्थसत्वाभावानुमानं बाधितुं नोत्सहते इति वाच्यम् । सत्यस्य, परमार्थवाचकत्वेन मिथ्यापर्यायसांवृत्तिकशब्देन सामानाधिकरण्यासम्भवात् । यदि चैकं सत्यत्वं पारमार्थिके, सांवृत्तिके च स्यात्, तदा एवं सत्यभेदः वक्तुं शक्येतापि । सांवृत्तिकस्य मिथ्यात्वेन तत्र सत्यत्वासम्भवात् । यथा वृक्षत्वमेकं सिंहवृक्षत्वयोर्नानुगतमिति, तेन तद् द्वैविध्यप्रतिपादनमयुक्तम् । तथा सत्यत्वमपि मृषा-परमार्थयोर्नानुगतमिति सत्यत्वेन मृषापरमार्थभेदोपपादनमपि तेषां लोकवञ्चनार्थमेवेति ।

न च 'स्तम्भोयमि'त्यादिप्रत्ययः स्तम्भादिविषयं गृह्णातीत्यविवादम् । स च विषयः बाह्यो वा, ज्ञानाकारो वेति विशिष्य नाभिनिवेशः । तथा च स्वाकारमात्रग्राहितयोपपद्यमानं प्रत्यक्षादि अविरोधितया न बाह्यार्थसत्वा भावग्राहिणो ज्ञानस्य बाधाय प्रभवतीति वाच्यम् । स्वाकारग्राहित्वासम्भवे बाह्यार्थसत्वग्राहित्वस्यैव वक्तव्यतया तदसत्त्वग्राहिज्ञानविरोधस्य स्पष्टत्वात् । नहि अयं स्तम्भ इति प्रत्ययः स्वाकारं गृह्णाति, तथा सति अहं स्तम्भ इति प्रत्ययः स्यात्, नत्वयं स्तम्भइति बाह्यार्थग्राहित्वमेव तस्य वाच्यम् इति, तदसत्त्वग्राहिज्ञानविरोधः स्पष्ट इति भावः ।

**पक्षदूषणम्**

**किं च स्तम्भादिप्रत्ययो निरालम्बनः प्रत्ययत्वादित्यनुमाने स्तम्भादि-प्रत्ययस्य धर्मिणः निरालम्बनत्वरूपधर्मस्य च ग्राहकज्ञाने धर्मिधर्मोभय-**

विषयकत्वरूपालम्बनत्वं स्वीक्रियते, न वा। आद्ये निरालम्बनत्वप्रतिज्ञा विरोधः। अन्ते अप्रसिद्धविशेषणत्वम् अप्रसिद्धविशेष्यत्वं चेति कुतो निरालम्बनत्वानुमानम्। नहि अज्ञातस्य साध्यस्य अज्ञाते धर्मिणि क्वचिदनुमानं दृष्टचरं कस्यापीति। अपि च एतादृशवाक्यप्रयोगे वक्तुः, सम्बोध्यस्य च प्रत्ययनिरालम्बनत्वयोर्विशेष्यविशेषणयोः यज्ज्ञानं जायते, तस्य निरालम्बनत्वे स्ववाग्विरोधः विशेष्यविशेषणयोः प्रत्ययनिरालम्बनत्वयोर्भेदाप्रतिभासे विशेष्यविशेषणभावानुपपत्तिः, अभेदे तयोरभावात् भेदभानं त्वसम्भविप्रत्ययस्य निरालम्बनत्वात् भेदग्राहकत्वे सालम्बनत्वापत्तेरिति प्रतिज्ञातस्य प्रत्ययनिरालम्बनत्वस्य निरूपणमेवाशक्यमिति, न निरालम्बनत्वं नाम किञ्चिद्वस्तु बोद्धुमर्हम्। अवस्तुत्वेन बोद्धुमनर्हतया परस्मै किं निरालम्बनत्वेन बोधयसि, कथं वा त्वमेव बुध्यसे कल्पयित्वा तद्बोधनमपि न। असतः कल्पनानुपपत्तेः। ज्ञानविषयत्वस्य तुच्छेऽसम्भवात् असतोऽप्यभावस्य ज्ञानविषयत्वं दृष्टमिति चेत्? न। तस्य वस्तुत्वेनाङ्गीकारात्, एतच्चाग्रे निरूपयिष्यते।

किं च प्रत्ययपदस्य प्रतीयत इति प्रत्यय इति व्युत्पत्त्या भावार्थकत्वं प्रतीयते इति व्युत्पत्त्या कर्मार्थकत्वं वा, प्रत्येतीति व्युत्पत्या कर्त्रर्थकत्वं वा, प्रतीयतेऽनेनेति व्युत्पत्त्या करणार्थकत्वम्वा मन्यते। नाद्यः। भावव्युत्पन्नप्रत्ययस्योच्चारणमात्रेणैवार्थान्तरविषयकप्रकाशस्वभावताप्रतीत्या तद्विरुद्धनिरालम्बनत्वरूपनिर्विषयकत्वप्रतिपादने स्ववाग्विरोधापत्तेः। न द्वितीयः, प्रत्याय्यापरपर्यायस्य प्रत्ययस्य घटादिवदर्थप्रकाशकत्वानङ्गीकारेण तस्य निरालम्बनत्वसाधने सिद्धसाधनत्वप्रसंगात्। न तृतीयचतुर्थौ, धर्मिधर्मप्रतिपादकयोः प्रत्ययसालम्बनत्वपदयोरपि स्वार्थप्रतिपादनक्रियायां विवक्षाभेदेन कर्तृत्वकरणत्वसम्भवेन निरालम्बनत्वापत्तेः। शब्दस्य निरालम्बनत्वमभिधेयशून्यत्वमेवेति, भङ्ग्यन्तरेण पक्षस्यैवाभावः प्रतिज्ञातः स्यात्। किं चात्मसमवेतप्रत्ययस्य निरालम्बनत्वं साध्यते? उतातिरिक्तस्य? नाद्यस्त्वन्मते विज्ञानातिरिक्तस्यात्मनोऽभावेनाप्रसिद्धविशेष्यत्वापत्तेः, नान्त्यः आत्मसमवेतातिरिक्तप्रत्ययानङ्गीकारेणास्मन्मतेऽसिद्धविशेष्यत्वापत्तेरिति।

नन्वेवं शब्दोऽनित्य इत्यादावपि किमाकाशगुणः शब्दः, किम्वा वायुगुण

इति चोद्यस्य सम्भवेन, तत्रापि अप्रसिद्धविशेष्यत्वं स्यात् । यदि चाकाश-गुणत्वादिरूपविशेषधर्मेण तदुभयं च वादिप्रतिवादिनोः प्रसिद्धमेवेति नाप्रसिद्धविशेष्यत्वम्, तर्हि अत्रापि नात्मसमवेतत्वरूपविशेषधर्मेण प्रत्ययस्य पक्षीकरणम्, किन्तु प्रत्ययवाच्यत्वरूपसामान्यधर्मेणोभयप्रसिद्धेनेति तुल्यमेवेति चेत्, न । त्वन्मते बाह्यभेदाभावेनाभिमतप्रत्ययविशेषातिरिक्त-सामान्याभावादित्यलं धर्मिदोषोपपादनेन ।

### साध्यदूषणम्

सिषाधयिषतो निरालम्बनत्वादिरूपो धर्मोपि कीदृश इति विचार्यताम्, निरालम्बनत्वं किन्तावत् ? सर्वथा विषयशून्यत्वं ? उत येन केनचित्प्रकारेणाभासमानत्वं विवक्षितम् ? नाद्यः निर्विषयज्ञानासम्भवेन सर्वथाविषयशून्यत्वस्य क्वचिदविज्ञानेऽप्रसिद्धया तद्रूपनिरालम्बनत्वसाधने अप्रसिद्धविशेषणः पक्षस्स्यात्, दृष्टान्तस्य साध्यवैकल्यं च । स्वाप्निकज्ञानेऽपि देशकालान्तरदृष्टस्य कालान्तरे देशान्तरे तत्सम्बन्धित्वेनानन्यथाभानमिति न सर्वथाविषयशून्यत्वम् । न चाननुभूतस्य स्वशिरश्छेदनादेः स्वप्ने भानम्, अजादेः शिरश्छेदनं दृष्टमिति तस्यैव स्वसम्बन्धित्वेन तत्र भानाङ्गीकारात् । न द्वितीयः, रसज्ञानस्य रसालम्बनतया रूपाद्यालम्बनत्वाभावेन सिद्धसाधनत्वापातात् । अथ अर्थानुरूप-बुद्धयाकारस्वग्राह्यरूपालम्बनशून्यत्वमुच्यते ? तर्हि स्वाभ्युपगमविरोधः । यदि तु बाह्यपदार्थान् नालम्बते बुद्धिरिति बाह्यग्राह्यालम्बनशून्यत्वं सिषाधयिषितम्, तत्रापि बाह्यत्वेन स्तम्भाद्यनालम्बनत्वं यदिबुद्धौ विवक्षितम्, तदा सिद्धसाधनम् । अयं स्तम्भइत्यादिप्रतीतेः स्वरूपेण स्तम्भाद्यालम्बनत्वं न बाह्यत्वेन अयं स्तम्भ इति प्रतीतेरयं बाह्य इत्याकारत्वाभावेन तेन रूपेण तद्ग्रहस्य तत्र सत्त्वात् । स्तम्भादिस्वरूपेणानालम्बनत्वन्तु अनुभवविरुद्धम् । अयं स्तम्भ इति बुद्धौ स्तम्भालम्बनतया सर्वानुभवसिद्धत्वात् ।

ननु स्तम्भादिप्रत्ययस्य बाह्यत्वेन स्तम्भाद्यनालम्बनत्वं नोच्यते, येन बाह्य इत्येवमग्रहणात्सिद्धसाधनं स्यात् । किन्तु वस्तुतो यो बाह्यः स्तम्भादिस्तदनालम्बनत्वं साध्यते इति क्वासिद्धसाधनमिति वाच्यम् । बाह्यपदार्थमनभ्युपगच्छतां विशिष्टसाधनेभवतामप्रसिद्धविशेषणपक्षत्वापत्तेः । ननु पक्ष-

विशेषणीभूतं यन्निरालम्बनत्वं तत्र बाह्यार्थो विशेषणमिति बाह्यार्थस्याप्रसिद्धावपि साक्षात्पक्षविशेषणं निरालम्बनत्वस्य प्रसिद्ध्या नाप्रसिद्धविशेषणत्वं पक्षस्येति वाच्यम्, यथा विशेषणाज्ञाने विशिष्टवाक्यार्थबोधः श्रोतुर्न जायते इत्यप्रसिद्धविशेषणत्वं दोषः।

तथा विशेषणे यद्विशेषणं तस्याप्यज्ञाने तद्विशेषणविशिष्टस्य विशेषणस्य ज्ञानानुदयेन विशिष्टवाक्यार्थबोधाभावाद् विशेषणाप्रसिद्धेरिव तद्विशेषणाप्रसिद्धेरपि दूषणत्वात्। वाक्यार्थज्ञाने पदार्थज्ञानस्य हेतुतया ग्राह्यबाह्यादिविशेषणपदार्थाज्ञाने तादृशविशेषणद्वयविशिष्टप्रत्ययस्वरूपवाक्यार्थज्ञानमशक्यमेवेति भावः।

यदि चाव्यतिरिक्तानालम्बनत्वं निरालम्बनत्वेनाभिप्रेतं तथा च प्रत्ययोऽव्यतिरिक्तानालम्बनः प्रत्ययत्वात्स्वाप्निकप्रत्ययवदिति। तर्हि अव्यतिरिक्तानालम्बनत्वमित्यत्र पार्युदासः, प्रतिषेधो वाभिमतः? पक्षद्वयेऽपि सिद्धसाधनं प्रमेयत्वेन सर्वाव्यतिरेकस्य सर्वत्र सत्त्वेन स्वाकारालम्बनस्यापि प्रत्ययस्याव्यतिरिक्तालम्बनत्वेनास्माभिः स्वीकृतत्वात्। व्यतिरिक्तं नालम्बते इति प्रतिषेधपक्षेऽपि प्रमेयत्वेन व्यतिरेकस्य क्वचिदपि अप्रसिद्ध्या व्यतिरिक्तानालम्बनत्वस्य सर्वसम्मतत्वात् इति, आत्यन्तिकव्यतिरेकविवक्षायान्तु प्रमेयत्वादिना अभेदस्य सर्वत्र सत्त्वेन तदभावादेव तदनालम्बनत्वं प्रत्ययस्येष्टमेवेति पुनः स एव सिद्धसाधनरूपो वेताल इति न किञ्चिदेतत्।

यदि च कथञ्चिद्भिन्नं नालम्बते इत्यभिप्रायः, तदा नीलमिदमित्यादावेकस्मिन्नेव ज्ञाने प्रमाणप्रमेयाकारेण प्रमाणप्रमेयभावोपपादनात् काल्पनिकभेदस्य तत्रापि सत्त्वेन स्वाभ्युपगमविरोधः।

अथ पूर्वोक्तनिखिलप्रकारासम्भवान्निरालम्बनबुद्ध्युत्पत्तिमात्रमिष्यते? तर्हि इष्यतामत्र नो नः प्रद्वेषः, किन्तु बाह्यविषयाक्षताबुद्धिरियं मिथ्यैवेति केवलमस्माभिर्वक्तव्यम्। न चेयं समीचीनेति त्वयापि साधयितुं शक्यते, सम्यक्त्वस्य स्वीकारातिरिक्तत्वेन तदालम्बनत्वाभावात्। नहि प्रत्ययः स्वातिरिक्तमालम्बते इति भवतां सिद्धान्तात्। सम्भवे च तत्रैवानैकान्तिको हेतुरिति।

किञ्च प्रत्ययो निरालम्बनः प्रत्ययत्वादित्यनुमाने चैत्रादिबुद्धीनां निरा-

लम्बनत्वं साधयितुं भवता न शक्यते, चैत्रादिबुद्धिवृत्तिनिरालम्बनत्वादेः त्वदीयनिरालम्बनत्वानुमितिव्यतिरिक्तत्वादिति निरालम्बनत्वासिद्ध्योःसर्गतः प्राप्तं सालम्बनत्वमेवेति। यदि च निरालम्बनत्वेन ज्ञानानधिकरणत्वं प्रत्ययस्य साध्यते, प्रत्ययो निरालम्बनः अर्थान्न जानाति तर्हि सिद्धसाधनमेव। शब्दस्याचेतनत्वेन ज्ञानानधिकरणत्वस्यास्माभिः स्वीकृतत्वादिति। यदि वा बुद्ध्यनुत्पादकत्वं निरालम्बनत्वं साध्यते, तदा प्रत्ययो निरालम्बनः बुद्ध्यनुत्पादक इति तदा धर्मिणः प्रत्ययस्य स्वविषयकज्ञानाजनकत्वापत्त्या प्रतिपत्तुर्ज्ञानाजनने साधनप्रयोगासंगतेः साध्यासिद्धिप्रसंगादिति सर्वं रिक्तम्।

अपि च वाक्यार्थभेदाग्रहणे प्रतिपाद्यप्रतिपादक-वाच्यवाचक-साध्यसाधनबुद्धेः सालम्बनत्वं न स्यात्, तद्विना साध्यसाधनादिविवेकाभावात्केन किं साधयेत्। एवं प्रतिपाद्यप्रतिपादकयोर्भेदानवगमे कस्यै किं वदेत् गुरुशिष्ययोर्भेदानवगमे शिष्यम्प्रति उपदेशानुपपत्तिरित्यादि कियत्कथयेत्सर्वोऽपि लौकिकवैदिकव्यवहारः पूतिकूष्माण्डायितः स्यात्।

किञ्च बाह्यार्थविषयाबुद्धिः सत्या बाधरहितत्वात् स्वप्नबुद्धिबाधकजाग्रद्बुद्धिवत्। न च सर्वासां जाग्रद्बुद्धीनां निरालम्बनत्वेन मिथ्यात्वान्न साधर्म्यदृष्टान्त इति वाच्यम्। त्वदभ्युपगतविज्ञानास्तित्वक्षणिकत्वादिबुद्धीनामेव दृष्टान्तत्वसम्भवात्। अपसिद्धान्तभयेन तासां त्वया सत्यत्वाङ्गीकारात्। किं च क्षणिकत्वादिबुद्धीनां सत्यत्वेऽत्रैव हेतोर्व्यभिचारः, मिथ्यात्वे पक्षस्य प्रत्ययस्य तद्विशेषणभेदादेश्च बाधःस्यात्, तथा सति अद्वैतवादिनामिव तवापि बन्धमोक्षव्यवस्था न स्यादिति, तव धर्मदेशना सिकताकूपवद् विदीर्येत। ननु न ज्ञानमात्रस्य निरालम्बनत्वेन मिथ्यात्वं ब्रूमहे, किन्तु सविकल्पकस्यैव, निर्विकल्पकस्य प्रामाण्याङ्गीकारादिति चेत्, न। क्षणिकत्वसाधनप्रयासवैफल्यापत्तेः, निर्विकल्पकज्ञानेन तत् साधनासम्भवात्। सविकल्पकस्य च मिथ्यात्वात्। मिथ्याज्ञानस्य वस्तुसाधनाक्षमत्वात्। अन्यथा सर्वत्र सर्वसिद्धिः स्यात्, तस्य सर्वत्र सुलभत्वात्, अतः बाधदर्शनात्स्वप्नबुद्धीनां मिथ्यात्वम्, जाग्रद्बुद्धीनां च सत्यत्वं बाधादर्शनादित्येव पन्था युक्तः।

न च योगिनामेव ज्ञानं जाग्रद्बुद्धिबाधकमस्तु। अयं स्तम्भ इत्यादिबुद्धिगोचरस्य स्तम्भादेः नैतदेवमिति तेषां बाधसम्भवेन, तदवस्थायां

सर्वेषां पुंसां तथाविधबाधसम्भवादिति वाच्यम्। इदानीं बाधानुपलम्भेन योगावस्थायां किं भविष्यतीति निर्णयाभावात्। तदानीमिदमित्थमेवेति तेषामेव बुद्धिसम्भवेनैकशेषस्य कर्तुमशक्यत्वात्। तज्ज्ञानस्य जाग्रद्बुद्धिबाधकत्वाभावसाधने तु हालिकपुरुषोपि दृष्टान्त इत्यबाधकत्वमेव तज्ज्ञानस्य युक्तमिति दिक्।

## हेतुदूषणम्

प्रत्ययत्वादिति हेतुरपि विचारमर्हति। किं जाग्रत्प्रत्ययत्वं हेतुरुच्यते उत स्वप्नप्रत्यत्वमथवोभयानुगतं प्रत्ययत्वसामान्यम् आद्ये हेतोः पक्षमात्रवृत्तितयाऽसाधारण्यापत्तिः, द्वितीये हेतोरपक्षधर्मतया स्वरूपासिद्धिः, अन्त्ये सर्वप्रत्ययानुगतं सामान्यभावयोरसिद्धमेवेति हेत्वसिद्धिः। जातिव्यक्त्योर्भेदाभेदस्य भवद्भिरनङ्गीकारात्। अत्यन्तभेदस्तु आवयोरसिद्ध इति। ननु माभूत्सामान्यमीदृक् सारूप्यान्यनिवृत्तिरूपं तु तदिष्यत एव तत एव च जातिनिबन्धननिखिलव्यवहारोपपत्तौ भावभूतातिरिक्तसामान्यकल्पनायां प्रमाणविरहादिति चेन्न, जातिस्वीकारं बिना सादृश्यस्यैव दुर्निरूपत्वापत्तेः एतच्चाग्रे वक्ष्यते। न चैवं कस्यचिदपि ज्ञानस्य निरालम्बनत्वानङ्गीकारे लोकविरोधः स्यात्। लोके हि शुक्तिरजतज्ञानस्य निरालम्बनत्वेन व्यवहारदर्शनादिति वाच्यम्। प्रकारान्तरेणार्थावगाहिनो ज्ञानस्यैव निरालम्बनत्वेन लोके व्यवहारात्। यथा शुक्तिशकले इदं रजतमिति ज्ञानं शुक्तिशकलत्वेन विद्यमानं रजतत्वेन ग्रहणात् निरालम्बनं कथ्यते, न तु स्वाकारमात्रग्राहित्वेन तादृशव्यवहारस्य क्वचिदप्यदर्शनात्। एवमिह 'घटो नास्ति न पट' इत्यभावग्राहिज्ञानं प्रकारान्तरेण भावमेवावगाहते।

भावान्तरमभावो हि कयाचित्तु व्यपेक्षयेति। सिद्धान्तात्। नत्वभावाख्यं तुच्छं नामेति भ्रान्तिज्ञानमभावज्ञानं चोभयमन्यथा वर्तमानमर्थं अन्यथा ग्रहणात् निरालम्बनत्वेन व्यपदिश्यत इति न लोकविरोधः। विस्तरस्तु श्लोकवार्तिके द्रष्टव्यः।

**भाष्यम्—न। स्वप्ने विपर्ययदर्शनात्। अविपर्ययदर्शनाच्चेतरस्मिन्। न तत्र कश्चिद् विशेष इति।**

एवञ्च यत्र स्वाप्निकज्ञाने बाधदर्शनम्, तत्र जाग्रत्प्रत्ययस्य सत्यत्वमित्यभिप्रायेणोक्तं भाष्ये सुपरिनिश्चितेति, ननु यथा प्रबोधकाले बाधादर्शनात्, तात्कालिकप्रत्ययस्य सत्यत्त्वम्, एवं स्वप्निकप्रत्ययस्यापि तदानीं बाधादर्शनात् सत्यत्वमेवास्तु, स्वकाले हि बाधादर्शनमुभयोरविशेषः। न च प्रबोधे स्वप्नप्रत्ययस्य बाधदर्शनं विशेषः, प्रबोधप्रत्ययस्य स्वप्नेऽपि बाधदर्शनेनाविशेषादित्याशयेनाह—**न तत्र कश्चिद्विशेष** इति। निराकरोति—**नेति**। विशेषं दर्शयति—**स्वप्ने इति**। अयं भावः—स्वप्ने दृश्यमानो गजः क्षणेन मृगो भवति, पुनर्वृको भवति, पुनरन्य एव दृश्यते इत्येकस्यासकृदनेकाकारभवनमसम्भवमिति विपर्ययदर्शनात्तज्ज्ञानस्य मिथ्यात्वं निश्चीयते। प्रबोधे तु आजन्मनिरीक्ष्यमाणो घटः स एवाहर्निशं दृश्यते न जातुचित्परो भवतीत्यविपर्ययदर्शनादस्य सत्यत्वम्। यद्वा स्वप्नदषायाम् अपि कदाचिद् विपर्ययो दृश्यते स्वप्नदर्शिन एव इदं स्वप्नदर्शनं ममेति ज्ञाने सति तदानीमेव तद्बाधः प्रतिसन्धीयत इदं मिथ्या स्वप्ने पश्यामि नानेनोपकारापकारौ मे, प्रबोधकाले तु घटादिकं पश्यन् न कदाचिद् विपर्येति इदं मिथ्याज्ञानेन किञ्चिन्न, इति स्वप्नप्रबोधयोर्विशेषदर्शनमस्ति इति भावः।

**भाष्यम्—तत्सामान्यादितरत्रापि भविष्यतीतिचेत्। यदि प्रत्ययत्वात्स्वप्नप्रत्ययस्य मिथ्याभावः। जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति। अथ प्रतीतिस्तथाभावस्य हेतुः न शक्यते प्रत्ययत्वादयमन्य इति वक्तुम्।**

वस्तुतस्तु स्वाप्निकप्रत्ययस्य प्रबोधदशायां विपर्ययदर्शनात्तस्य मिथ्यात्वम्, प्रबोधे तस्य अदर्शनात्सत्यत्वमेवेति भावः। प्रत्ययत्वसाधर्म्येण प्रबोधेऽपि विपर्ययदर्शनमाशङ्कते—**तत्सामान्यादिति**। अयमभिप्रायः—यथा स्वाप्निकः प्रत्ययो मिथ्या भवति, एवं प्रबोधप्रत्ययस्यापि मिथ्यात्वं प्रत्ययेनानुमीयते। प्रबोधप्रत्ययो मिथ्याप्रत्ययत्वात् स्वप्नप्रत्ययवदित्यनुमानेन मिथ्यात्वनिर्णये वाधोऽपि कदाचित् स्यात्, देहात्मबाधवत्। नहि तात्कालिकबाधस्यैव मिथ्यात्वनिर्णायकत्वं स्वीकर्तुमुचितम्, तथा सति शुक्ताविदं रजतमितिज्ञानस्य तदानीं बाधाभावेन सत्यत्वापत्तेरेवं देहात्मविभ्रमादेरपि इति कालान्तरबाधदर्शनम्, तथा प्रबोधेऽपि स्यात्। अत्र बाधो न द्रक्ष्यते इति तु असर्वज्ञैर्दुर्ज्ञेयमिति।

समाधत्ते—**यदीति** । स्यादेवं यदि प्रत्ययत्वं मिथ्यात्वप्रयोजकं स्यात्, तदा प्रत्ययत्वाधीनं मिथ्यात्वं स्वप्नप्रत्ययस्येत्र प्रबोधप्रत्ययस्यापि भवेदेव । तत्तु न स्वीक्रियते, किन्तु अन्यदेव किञ्चित्प्रयोजकम्, तच्च स्वप्नेऽस्ति, न प्रबोधे इति भावः ।

ननु तर्हि प्रत्ययस्वरूपमेवास्तु तस्य प्रयोजकमिति प्रत्ययस्वभावाधीनं मिथ्यात्वं स्वप्नप्रत्ययस्येव प्रबोधप्रत्ययस्यापि अविशिष्टम्, नहि प्रबोधप्रत्ययः प्रत्यत्वादन्यः अर्थात् प्रत्यय एव न भवति येन प्रत्ययस्वभावाधीनं मिथ्यात्वं तत्रेवात्र न स्यात्, किन्तु अयमपि प्रत्यय एवेति तद्वदस्यापि मिथ्यात्वमेवेत्याह—**अथप्रतीतिरिति** ।

**भाष्यम्—कुत इति चेत् । सनिद्रस्य मनसो दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुःस्वप्नादौ स्वप्नान्ते च । सुषुप्तस्याभाव एव अचेतयन्नेव हि सुषुप्त इत्युच्यते । तस्माज्जाग्रतः प्रत्ययो न मिथ्येति । ननु जाग्रतोऽपि करणदोषः स्यात् । यदि स्यात् अवगम्येत । स्वप्नदर्शनकालेऽपि नावगम्यते इति । चेत् । तत्र प्रबुद्धो ह्यवगच्छति निद्राकान्तं मे मन आसीदिति । अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः ।**

उत्तरमाह-**अन्यत** इति । एवं मिथ्यात्वं न प्रत्ययत्वाधीनम्, न वा प्रत्ययस्वाभावधीनम्, किन्तु दोषाधीनम् । दोषज्ञानं क्वचिद् विपर्ययात् क्वचिदन्यतः । प्रकृते स्वप्नज्ञानस्य मिथ्यात्वे प्रयोजको दोषो निद्रा, तस्यादोषत्वं विपर्ययादवगम्यते । प्रबोधकाले विपर्यपदर्शनात् स्वप्नप्रत्ययमिथ्यात्वप्रयोजको दोषो निद्रेति गम्यते । दोषान्तरस्यानुपस्थित्वादुपस्थितत्वाच्चैतस्याः । दोषो हि कारणशक्तिं शिथिलीकरोति, इन्द्रियान्तरस्य तदानीमुपरतव्यापरित्वात्, मन एव स्वप्निकप्रत्ययकारणम्, तस्य निद्रया दोषेण दौर्बल्यं स्वग्राह्यविपर्ययविषयकसमीचीनज्ञानजननासामर्थ्यम् तथा च निद्रादोषदूषितमनसा स्वप्ने मिथ्याज्ञानं जायते, प्रबोधे तादृशदोषविरहात् समीचीनं ज्ञानं जायते इति न प्रबोधप्रत्ययस्य मिथ्यात्वमिति भावः विपर्ययान्निद्राया दोषत्वं कदा ज्ञायते इत्यपेक्षायामाह **स्वप्नादौ स्वप्नान्ते चेति** । एवं च स्वप्ने विपर्ययदर्शनाभावेन तदानीं तत्प्रयोजकत्वाज्ञानेऽपि तत्पूर्वं तदुत्तरञ्च तत्प्रयोजकत्वं तस्या अवगम्यते ।

नन्वेतावता प्रबन्धेन स्वप्नज्ञानस्य दोषान्मिथ्यात्वं प्रबोधप्रत्ययस्य तदभावादमिथ्यात्वमुपपादितं सौषुप्तज्ञानं न निरूपितम्, तत्पुनः कीदृशं भवतीत्यपेक्षायामाह—**सुषुप्तस्याभाव इति** । सति कुड्ये चित्रमितिन्यायेन यदि तज्ज्ञानं स्यात्, तदा तन्निरूपणं क्रियेत । तदानीं ज्ञानानुत्पत्तौ प्रमाणमाह-**अचेतयन्निति** ।

उपसंहरति **तस्मादिति** । नन्विद्रियाणामतीन्द्रियतया तद्गतदोषाणामप्रत्यक्षतया प्रबोधकाले कथं तद्व्यतिरेकनिर्णय इत्यभिप्रायेणाशङ्कते **नन्विति**। उत्तरमाह-**यदीति** । अभावानामनुपलब्धिप्रमाणगम्यतामाह **यदीति** । यदि स्यादुपलभ्येत यतो नोपलभ्यते, तस्मान्नास्तीत्यनुपलब्ध्या तद्व्यतिरेकनिर्णयः कर्तुं शक्यत एव । नन्वेवं दोषाभावनिर्णयः स्वप्नेऽपि कर्तुं शक्यते तदानीमपि दोषा नोपलभ्यन्ते इत्यदुष्टकारणजन्यत्वात् तज्ज्ञानस्य कथं मिथ्यात्वमित्यभिप्रायेणाह-**स्वप्नदर्शनेति** । उत्तरमाह-**तन्नेति** । नानुपलब्धिमात्रमभावसाधनम्, किन्तु योग्यानुपलब्धिः । स्वप्नदशायामिन्द्रियस्य दुष्टतया दोषग्रहणसामर्थ्यं नास्तीति, तदनुपलम्भेऽपि न दोषाभावनिर्णयः । अत एव तमसि घटानुपलम्भेऽपि न तदभावनिर्णयः, तदनुपलब्धेरयोग्यत्वात् । प्रबोधदशायाम् तु दोषदर्शनमेव भवतीत्याह **तन्नेति** । एवं च प्रबोधदशायां तत्र दोषदर्शनात् स्वप्नज्ञानस्य मिथ्यात्वं न प्रत्ययमात्रस्येति भावः ।

**भाष्यम्—शून्यस्तु कथम् अर्थज्ञानयोराकारभेदं नोपलभामहे ।**

अथ शून्यवादः—**शून्यस्तु इति** । नन्वत्र विशेष्यानिर्देशात् कः शून्य इत्यपेक्षायां पूर्वप्रकृतप्रत्यय एव सम्बध्यते, योग्यतावशात् । तथा च प्रत्ययः शून्यः, शून्यत्वं पुनरस्य अर्थानालिङ्गितत्वमेव नान्यद्, असम्भवात् । तच्च निरालम्वनत्वानुमाननिराकरणादेव निराकृतमिति पुनरत्र विज्ञानवादिनः प्रत्यवस्थाने कोऽभिप्राय इति चेत् ? अयमभिप्रायः, यदि प्रत्यक्षस्य बाह्यपदार्थसामर्थ्यं स्यात्, तदा तद्विरोधान्निरालम्वनत्वानुमानं न स्यात् । यदि चास्य स्वाकारग्रहणमात्रसामर्थ्यं स्यात्, तदा विषयभेदेन विरोधाभावान्नानुमानवाधकत्वं प्रत्यक्षस्येति प्रत्याशयाप्रत्यक्षस्य बाह्यार्थग्रहणे सामर्थ्याभावं दर्शयितुं शून्यवादी प्रत्यवतिष्ठते **शून्यस्तु इति** । नीलमिदमित्यादौ एकमेव नीलाकारं वस्तु प्रतीयते, न वस्तुद्वयमिति सर्वैरनुभूयते इति नात्र विशिष्य-

वक्तव्यम्, तद् यदि ज्ञानाकारं स्यात्, तदा ज्ञानस्य स्वयंप्रकाशतया अस्य प्रकाशनाय प्रकाशकान्तरं नापेक्षितव्यमिति लाधवम्। अर्थाकारत्वे तु तस्य जडतया स्वतः प्रकाशासम्भवेन तस्य प्रकाशनाय प्रकाशकं ज्ञानमपेक्षणीयं स्यादिति, वस्तुद्वयकल्पनायां गौरवं स्फुटम्। न चैतावता ज्ञानस्येवार्थस्यापि स्वयं प्रकाशताऽभ्युपेयतामिति वाच्यम्। एकस्यैव स्वयं प्रकाशशीलस्य वस्तुनः स्वीकारेण अर्थस्य स्वयं प्रकाशकत्वे ज्ञानपदार्थानङ्गीकारापत्त्या संज्ञामात्रे विवादात्। एकमेव स्वयं प्रकाशं वस्तु ज्ञानपदेन वा अभिधीयतामिति न वस्तुनि विशेषः, ग्राह्यग्राहकयोरैक्याभ्युपगमात्।

ननु ज्ञानार्थयोः कुतो न विशेषो ज्ञानस्यान्तरत्वं क्षणिकत्वं च। अर्थस्य पुनर्बाह्यत्वं स्थिरत्वं चेति विशेष इति चेत्? न सति द्वैते बाह्यान्तरभेदसम्भवेनाऽद्वैते तदभावात्। किमपेक्षया कस्यान्तरत्वम्, बाह्यत्वं वा स्यात्। पदार्थान्तराभावादितिभावः।

क्षणिकत्वमप्यर्थस्याश्यं स्वीकार्यम्, अन्यथाऽर्थस्य स्वप्रकाशत्वाङ्गीकारात्, सुषुप्तावपि भानप्रसङ्गात्। ननु ग्राह्यग्राहकयोर्भेदानङ्गीकारे एकस्यैव निर्विशेषस्य वस्तुनः कदाचिन्नीलमिदमिति बाह्याकारेण, कदाचिदहमिति ग्राहकाकारेण भानं कथं स्यादिति वाच्यम्। अत्रादिग्राह्यग्राहकाकारानुभवाहितविविधवासनावशेनैतस्य निर्भेदवस्तुनो ग्राह्यग्राहकाकारेण प्रतीत्युपपत्तेः तथा चोक्तम्।

अविभागोऽपि बुद्धयात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिः भेदवानिव लक्ष्यते॥
तथा परिच्छेदान्तराच्चायं भावो बहिरवस्थितः।
ज्ञानस्याभेदिनो भेदप्रतिभासोप्युपप्लवादिति॥

उपप्लवो भ्रान्त्याकारसमारोपात्। न च ज्ञानवैचित्र्याद्वासनावैचित्र्यम्, वासनावैचित्र्याच्च ज्ञानवैचित्र्यमित्यन्योन्याश्रयः। पूर्वपूर्ववासनाभेदस्योत्तरोत्तरवासनाभेदे एवं पूर्वपूर्वज्ञानभेदस्योत्तरोत्तरवासनाभेदे हेतुताया अभ्युपगमेन वीजाङ्कुरवदनावस्थाया अदोषत्वात्। यया वासनया यज्ज्ञानं जायते, तज्ज्ञानस्य तद्वासनाहेतुत्वानंगीकारात्। अनादित्वात्संसारस्य प्रथमं ज्ञानभेदो

वा वासनाभेदो वेति पर्यनुयोगावसरोपि न। न चार्थकल्पनापेक्षया वासनाकल्पनायां लाघोवभाव:। ममार्थस्येव तव वासनाया: कल्पनीयत्वात्, वासनाया ज्ञाननिष्ठशक्तिरूपधर्मस्वरूपतया पदार्थकल्पनापेक्षया 'धर्मिकल्पनातो धर्मकल्पनावरमिति न्यायेन ज्ञानधर्मवासनाकल्पनाया उचितत्वादिति।

वस्तुतस्तु न ज्ञानवासनयोर्धर्मिधर्मभाव: कल्प्यते, अन्यथा पदार्थद्वयकल्पनापत्ते:, ज्ञानातिरिक्तवासनास्वीकारे ज्ञानातिरिक्तं न किञ्चिदिति न: सिद्धान्तो भज्येत, किन्तु स्वत एव नीलीपतादिरूपाणि विचित्राणि कार्यकारणरूपाणि ज्ञानानि अनादिसन्तानरूपेण प्रवहन्ति न किञ्चिदपेक्षन्ते इत्येव न: सिद्धान्त:। एवमक्लृप्तार्थकल्पनापेक्षयोभयवादिसम्मतज्ञानकल्पनैव लघीयसी। अर्थकल्पनायामपि ज्ञानकल्पनाया आवश्यकत्वात्। ज्ञानाकारकल्पनायां तु तत एव व्यवहाराद्युपपत्तेर्नार्थकल्पनाप्रसङ्ग इति, ज्ञानाकार एव नीलादि:, नातिरिक्त: पदार्थ इति। न च नीलादेर्ज्ञानाकारत्वकल्पनं तवाप्यधिकमिति वाच्यम्, तत्तद्विषयाकारज्ञानकल्पनायास्तवाप्यावश्यकत्वात्। नहि ज्ञानमात्रं नीलादिविषयविशेषं बोधयति, तस्य पीतादिसाधारण्यात् किन्तु नीलाकारं ज्ञानम्; ज्ञानभेदादेव च विषयभेदो व्यवतिष्ठते, नान्यथा। ज्ञानभेदश्च तत्तद्विषयाकारभेदादिति विषयविशेषसिद्धये विषयाकारता ज्ञानस्यावश्यकी। अन्यथा विषयविशेषसिद्धिर्न स्यात्।

तथा चोक्तं 'नहि संवित्तिसत्तयैव तद्वेदना युक्ता तस्या: सर्वत्राविशेषात्। तां सारूप्यमाविशत्सरूपयितुं घटयेदिति। तथा—

तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मना।
भाव्यन्ते, नात्मना येन प्रतिकर्म विभज्यते इति।

यद्यपि ज्ञानानां क्षणिकत्वात् स्व एव भेद:, तथापि नासौ विषयविशेषाकारमन्तरा सुज्ञान:। न चाज्ञानभेद: विषयविशेषमुपस्थापयति, ज्ञानमात्रस्य निखिलविषयसाधारण्यात्। नहि येन केनापि ज्ञानेन नीलाद्यवधारणम् अपि तु नीलाकारेण ज्ञानेनेति सिद्धं नीलादेर्ज्ञानाकारज्त्वमिति।

किञ्च नीलादिर्यदिज्ञानाकारो न स्यात्, तर्हि नीलादिज्ञानयोर्भेदान्नीलादिप्रत्यक्षमेव न स्यात्। ज्ञानाकारत्वे तु तयोरभेदात्प्रत्यक्षत्वं सूपपद्यते तथा चैवं प्रयोग: नीलादिनीलसंवेदनाभिन्नं तदुत्पत्तौ सम्वेद्यमानत्वात्

तत्स्वरूपवत्, भिन्नत्वेनासम्वेद्यमानत्वाद्वा तत्स्वरूपवत् । भेदे सम्वेद्यता न स्यात्, पीतादिवत् । किञ्च ज्ञानग्राह्यत्वादपि नीलतज्ज्ञानयोरभेदः, भेदे तु प्रकाश्यप्रकाशकयोरसम्बन्धान्नीलादिप्रकाश एव न स्यात् । असम्बद्धस्यापि प्रकाशकत्वे सर्वः सर्वज्ञः स्यात्, असम्बद्धत्वाविशेषात्, नीलादेरिवार्थान्तरस्यापि नीलज्ञानेनैव प्रकाशसम्भवात् । अस्मन्मते तु तादात्म्यमेव प्रकाश्यप्रकाशकयोः सम्बन्धः । स च न सर्वत्रेति, न सार्वज्ञ्यपत्तिः । न च तादात्म्यातिरिक्तज्ञानार्थयोः कश्चन सम्बन्धः, येन ज्ञानग्राह्यत्वमर्थस्य स्यात् । न च हेतुत्वं ग्राह्यत्वं चक्षुरादेरपि ज्ञानहेतुतया ग्राह्यत्वापत्तेः । ज्ञानाकाराक्षमत्वं हेतुत्वमिति चेत् ? न, प्रमाणाभावात् । नहि नीलादिज्ञाने आकारमर्पयतीत्यत्र किञ्चित्प्रमाणमस्ति । सारूप्यं ग्राह्यमिति चेत् ? असन्निहितस्यापि नीलादेः सारूप्यान्नीलग्राह्यतापत्तेः । अपि च सारूप्यं येन केनचिद्रूपेण विवक्ष्यते, सर्वात्मना वा । आद्ये क्षणिकत्वेन सर्वेषां सारूप्यात्सर्वविषयाणां ग्राह्यत्वापत्त्या सर्वस्य सार्वज्ञ्यं स्यात् । अन्ते अर्थवद्ज्ञानस्यापि जडत्वापत्तेः । तथाचोक्तम्-तैरेव—

एकदेशेन सारूप्ये सर्वः स्यात्सर्ववेदकः ।
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेदिति ॥

सारूप्यतदुत्पत्तिभ्यां ग्राह्यत्वमित्यपि न । धारावाहिकज्ञाने पूर्वस्योत्तरज्ञानग्राह्यत्वापत्तेः । अतःसर्वा बुद्धयः स्वात्मानमनुभवन्ति, नान्यं स्वयमेवानुभूयन्ते, न ज्ञानान्तरेण । यथा–

नान्योनुभाव्यो बुद्धयास्ति तस्यानानुभवो परः ।
ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते इति ॥

तदिह ज्ञानं प्रकाशकमित्यावयोः सम्मतमेव, प्रकाश्ये तावद्विमतिः । अर्थः प्रकाश्य इति भवन्तः, स्वाकारः प्रकाश्य इति वयम् । तदिदं तावद्विचार्यताम्, कस्य प्रकाश्यत्वं घटते, प्रकाशकस्य ज्ञानस्योत्पत्तिः अर्थप्रकाशात्प्रागेव वाच्या, अनुत्पन्नस्य प्रकाशकत्वासम्भवात् । उत्पन्नस्यापि अग्रहणदशायां प्रकाशकत्वं न सम्भवतीति प्रदीपप्रभावाद् गृहीतस्यैव प्रकाशकत्वमास्थेयम् । तथा च प्रकाशकं ज्ञानं स्वोत्पत्त्यनन्तरमेव प्रकाशयति, अपेक्षणीयान्तराभावात् । यथान्धकारावृतो कुड्यान्तरितो वा घटादिः ।

स्वप्रकाशाय आलोकं प्रकाशकम् स्वसम्बन्धार्थम् अव्यवधानं चापेक्षते। नैवं ज्ञानं किञ्चिदपेक्षते, स्वप्रकाशत्वादव्यवधानाच्च। यदि च तथापि न गृह्येत, तर्हि द्वितीयादिक्षणेपि विशेषाभावात् कदापि न गृह्येत। न च ज्ञानान्तरेण गृह्येत इति वाच्यम्, स्वयंप्रकाशस्य ज्ञानस्य स्वसजातीयप्रकाशान्तरापेक्षा-विरहात्। नहि प्रदीपः स्वस्वरूपप्रकाशनाय प्रदीपान्तरपेक्षते तथासत्यनव-स्थापत्तेः न च स्वस्वरूपप्रकाश एव न भवतीति, विवदितव्यम्। ज्ञानस्मरणदर्शनात्, न चाननुभूतस्य स्मरणं घटते, अपि च ज्ञानग्रहणाय ज्ञानान्तरापेक्षायामुत्तरोत्तरज्ञानग्रहणायोत्तरोत्तरज्ञानापेक्षाप्रवाहस्याविरामादे-कज्ञानग्रहणे एव सर्वस्यायुषः क्षयाद् विषयान्तरसञ्चारो न स्यात्।

तथा चोक्तम्—ज्ञानान्तरेणानुभवे ह्रीष्टा तत्रापि च स्मृतिः।
विषयान्तरसञ्चारः तथा न स्यात् स चेष्यते॥ इति।

एवं च स्वोत्पत्त्यनन्तरम् प्रकाशयद् ज्ञानं स्वाकारमेव नीलादि प्रकाश-यति, नार्थान्तरमिति नीलादेर्ज्ञानाकारत्वसिद्धिरिति। अपि च ज्ञानपूर्वक-स्यैव नीलादेः सर्वत्रोपलम्भान्नीलादेर्ज्ञानाकारत्वमेव। तथा हि यदि घटो ज्ञानातिरिक्तः स्यात्, ज्ञानं विनापि गृह्येत, न तु तथा गृह्यते। सर्वत्र ज्ञानपूर्वक एवार्थो गृह्यते। अर्थस्य ज्ञानाकारत्वानभ्युपगमे अतीतानागत-स्थले अर्थस्य तदानीमसत्त्वात्तदुपरक्ता धीर्न स्यादिति।

ननु ज्ञानपूर्वकार्थज्ञानेऽपि कथं तस्य ज्ञानाकारतेति चेत्? इत्थम् इदम् नीलमित्यादौ नीलाकारं किञ्चिदेकं वस्तु प्रथते। स चाकारो ज्ञानस्य वा अर्थस्य वेति विवेचनायां ज्ञानस्यैवायमिति निश्चीयते नार्थस्य, विप्रकृष्टत्वात्। न चागृहीतमेव ज्ञानं विषयम् प्रकाशयति येनार्थाकार एव स्यान्न ज्ञानाकारः।

अत्र केचित् यद्यपि नीलमिदमित्यादौ नीलाकारं वस्तु प्रतीयते, तथापि नायं ज्ञानाकारः, किन्तु अर्थाकार एव ज्ञानमाश्रित्य भासते इति।

तन्न। अर्थगताकारस्य ज्ञानाश्रयणासम्भवात्। नहि गोत्वमश्वत्माश्रित्य भासते इत्यत्र कस्यापि सम्प्रतिपत्तिरस्ति। यत्रासौ भासते, तस्य नायं धर्मः। यत्र च न भासते तस्यायं धर्म इत्यत्र प्रमाणाभावः। न चादर्शे ग्रीवास्थित-मुखमिव अर्थस्थितः आकारो ज्ञाने प्रतिविम्बते इति वाच्यम्। प्रमाणा-भावात्। मूर्तस्यैव मूर्ते प्रतिविम्बदर्शनात्, अर्थस्य कस्यचिन्मूर्तत्वेऽपि

ज्ञानस्य मूर्तत्वाभावात् । शब्दगन्धरसादीनां प्रतिबिम्बासम्भवाच्च ।

अथ मास्तु बिम्बप्रतिबिम्बभावः, ज्ञानार्थौ तप्तायःपिण्डवद्वदतिसंसृष्टौ इति वह्निगतस्य दाहकत्वादेरयसीवार्थधर्मस्याकारस्य ज्ञाने परस्पराविवेक-निबन्धनोऽध्यास एवेति वाच्यम्, सर्वस्य जगतः सम्मोहकल्पनाया अनुचितत्वात्प्रमाणाभावाच्च । बाह्याभ्यन्तर्वर्तिनोरर्थज्ञानयोरतिसंसर्गा-सम्भवाच्च ।

अन्ये तु नीलाद्याकारो ज्ञानधर्मः, नाप्यर्थधर्मः, उभयोर्निराकारत्वात् । किन्तु निराकारयोर्ज्ञानार्थयोः संयोगादाकारः उत्पद्यते, मधुसर्पिषोः संयोगाद् विषमिवेति ।

तन्न । ज्ञानस्यामूर्तत्वेनार्थस्य च बाह्यतया तप्तायःपिण्डवत्तयोः संयोगा-सम्भवात् । मूर्तयोरेव संयोगदर्शनात् । न च दैशिकसंयोगाभावेऽपि कालिक-संयोगस्तयोः सुलभ इति वाच्यम् । ईदृशसंयोगस्य सर्वत्र सुलभतया एकस्मिन् ज्ञाने निखिलाकारज्ञानापत्तेः । न च ज्ञानसम्मुखस्थितस्यैवाकार उपलभ्यते इति नियमः, ज्ञानस्य मुखाभावात् । किञ्च ज्ञानेऽर्थसंयोगो नियामकाभावात्सर्वात्मना स्यात्, ततश्च तद्गतगन्धादयः परमाणवश्चोप-लभ्येरन् नियामकाभावात् । स्वविषयत्वेनावस्थानम् संसर्ग इत्यपि न । विषयत्वमित्यन्योन्याश्रयादिति दिक् ।

सौत्रान्तिकास्तु—विचित्रज्ञानोदयानुरोधेन नीलपीतादिविचित्राकारं प्रमेयं सर्वैरुपेयमेव, ग्राह्यत्वलक्षणं स्वाकारार्पणक्षमत्वे सति हेतुत्वं वाच्यम् । यत्प्रमेयं यज्ज्ञानं जनयत्स्वाकारं तत्रार्पयति, तत्तज्ज्ञानग्राह्यमिति न ग्राह्यत्वलक्षणानिरुक्तिरपि । ननु प्रमेयस्य क्षणिकत्वात् ज्ञाने स्वाकारार्पणा-नन्तरम् विनाशात् कथमुत्तरक्षणवर्तिना ज्ञानेन ग्राह्यं तदिति चेत्, सत्यम् विषयस्यातीतत्वेन वर्तमानाकारेण प्रत्यक्षज्ञाने भानमस्य न भवति, अपि तु ज्ञानाकार एव तेन रूपेण प्रथते, ज्ञानाकारेण च तदाकारार्पणक्षमो हेतुरतीतो विषयः कल्प्यते । नन्वेवमपि नीलादेर्विषयस्य प्रत्यक्षज्ञाने वर्तमानत्वेनाव-भासमानत्वाभावात्प्रत्यक्षत्वं नोपपद्यते इति वाच्यम् । साक्षात्कारविज्ञानजन-कत्वस्यैव प्रत्यक्षज्ञाने वर्तमानत्वेन भासमानत्वस्य बाह्यविषयेऽनङ्गीकारात् । यच्च परम्परया ज्ञानजनकम्, तदनुमेयम् । यथा वह्निमान् धूमादित्यादौ

वह्न्यादिः वह्निस्वलक्षणं धूमस्वलक्षणमित्यादिपरम्परया वह्निज्ञानं जायत इति तस्यानुमेयत्वम् । यच्च साक्षात्परम्परया वा न ज्ञानजनकं तत् न प्रमेयमिति । प्रमाणं द्विविधं प्रत्यक्षमनुमानञ्च । इतश्च नीलादेर्ज्ञानाकारत्वं स्वप्नादावसत्यपि विषये विविधाकारं ज्ञानं जायते, सत्यपि च विषयेऽज्ञानदशायां तदाकारं ज्ञानं न जायत इत्यन्वयव्यतिरेकाभ्यां ज्ञानाकार एव प्रत्यक्षज्ञाने प्रथते, न बाह्यः । यत्तु नीलमिदमित्यादौ ज्ञानाकारः अर्थाकारश्चैतदुभयं पृथगेव भासते, किन्तु सौसादृश्यात् जलमध्यपतितोदविन्दुवत् भेदानवगम इति । तन्न । तयोर्भेदाग्रहे सादृश्यग्रहासम्भवात्। सादृश्यस्य भेदघटितत्वात् । इदमनेन सदृशमिति सादृश्यग्रहो भेदेऽवगते युज्यते, नान्यथेति ।

इतरे तु शुक्तिशकलादौ इदं रजतमिति ज्ञानं जायते, अत्र भासमानो रजताकारो न पुरोवर्त्तिनः शुक्तिशकलस्य भवितुमर्हतीतिज्ञानाकारत्वमेव विषयस्यास्थेयम् । एवं नक्षत्रतारादिष्वपि नपुंसकत्व-स्त्रीत्व-पुंस्त्वविपरीतसंख्यादेरर्थधर्मत्वाभावात् ज्ञानाकारत्वमेवेष्टव्यम् । अपि चैकस्मिन्नेव वनिताशरीरे कामिनामियं कमनीया कामिनी, वीतरागाणां त्विण्मूत्रपुरीषादि सङ्कुलमस्पृश्यं मांसपिण्डम् व्याघ्रादीनां पुनरनुत्तमं भक्ष्यमिदमित्यनेकविधविकल्पो न ग्राह्याकारनिबन्धनः तस्यैकाकारत्वात् । अनेकाकारत्वे तु सर्वेषामनेकविधो विकल्पः स्यात् । न चैवं दृश्यते । अतः स्ववासनानिबन्धनमेवैतद् विकल्पत्रयमिति नार्थस्य ज्ञानेऽवभासः । किन्तु स्वकारस्येति दिक् इत्याहुः ।

अत्रोच्यते—एकमेव ज्ञानं ग्राह्यं ग्राहकं चेति यद्भवतोच्यते, तत् किं क्रियाकर्मभेदाभिप्रायकम्, उत कर्मकरणाभेदाभिप्रायकम्, किम्वा कर्तृकर्माभिप्रायकम् । तत्र नाद्यः, क्रियायां कर्मताव्यवहारस्य क्वचिदप्यदर्शनात् । नहि पाकः पच्यते, छिदा छिद्यते इति व्यवहारः कस्यापि सचेतसः समीक्ष्यते, किन्तु तण्डुलः पच्यत इत्यादीति स्पष्टमेव भेदे । एवं क्रियाकर्मभावः । प्रकृते तु भेदाभावात्तदुभयव्यवहारोऽसङ्गत एव । नापि द्वितीयः, एकस्यैव कर्मकरणभावासंभवात् । नहि असिधारया सैव छिद्यते, न चाङ्गुल्यग्रेण तदेव स्पृश्यते, किन्तु ततोऽर्थान्तरमिति । नापि तृतीयः, एकक्रियायामेकस्य कर्तृकर्मभावाभावात् क्व च सुशिक्षितोपि नटवटुः स्वस्कन्धमारोहति, तस्मादेकत्रज्ञाने ग्राह्यग्राहकभावकल्पना भवतां दृष्टविरुद्धत्त्वादसंगतैव । न तु नैकस्य कर्तृ-

कर्मभावो मयाप्युच्यते, किन्तु ज्ञानं स्वयमेव प्रकाशते, न पुनः स्वप्रकाशक्रियायां वस्त्वन्तरमपेक्षते इत्येव ब्रूमः । न स्वस्य कर्मत्वमपीति चेत् । न । प्रकाशक्रियाया प्रकाश्यसापेक्षतया त्वन्मते प्रकाश्यानां नीलपीतादीनामभावात् प्रकाशकत्वानुपपत्तेः, नहि दाह्यमन्तरा प्रकाश्यमन्तरा च वह्निर्दहति प्रकाशयतीति केनाप्युच्यते । स्वस्वरूपस्य प्रकाश्यत्वे तु एकस्यैव कर्तृकर्मभावापत्तिः सा चायुक्तेति निरूपितम् ।

अपि च तथासति अहं नील इति प्रतीतिः स्यात्, इदं नीलमित्याकारस्तु बाह्यपदार्थविषयकप्रत्यक्षस्यैवेति, नैकस्य ग्राह्यग्राहकभाव इति । ननु प्रदीपादिः घटादिं प्रकाशयन्नात्मानमपि प्रकाशयति इत्येतस्यैव प्रदीपादेरेकस्यामेव प्रकाशनक्रियायां कर्तृकर्मभावो दृश्यते, तद्वज्ज्ञानस्यापि किन्न स्यादिति चेत् ? घटादिप्रकाशकत्वानङ्गीकारात् । घटादिप्रकाश इव प्रदीपप्रकाशो आलोकापेक्षाविरहात् । प्रदीपप्रकाशस्तर्हि केन भवति नहि अप्रकाशितस्वरूपः प्रदीपः परं प्रकाशयितुमीष्टे इति चेत् ? चक्षुरादिनेति गृहाण । चक्षुषस्तर्हि केन प्रकाश इति मावोचः । अप्रकाशितस्वरूपस्यैव तस्य विषयप्रत्यक्षजननस्वभावाङ्गीकारात् ।

न च तत्र प्रमाणविरहः अर्थापत्तेरनुमानस्य च तत्र प्रमाणस्य सत्त्वात् । न चार्थापत्त्यादेः कथमवगमः अर्थापत्त्यन्तरेणेति नैकस्यैकक्रियापेक्षया कर्तृकर्मभाव इति किमनुरोधेन ज्ञानस्यापि तथा स्यात् । एतदेवाभिप्रेत्य ज्ञाते **त्वनुमानादावावगच्छामीति** भाष्यकारेणोक्तम् । न चात्मानं जानामीत्यादावेकस्यां ज्ञानक्रियायामेकस्यैवात्मनः कर्तृकर्मभाव इति भवतामपि कथं सङ्गच्छते इति । चेत् ? इत्थम् । भेदाभेदवादिनामस्माकं ज्ञानत्वेन ग्राहकत्वं द्रव्यत्वादिना ग्राह्यत्वमित्येकस्यात्मनः धर्मभेदेन भेदात्तदुभयव्यवस्थोपपत्तेः । न चैवं बाह्यापह्नववादिनां भवतां सम्भवति, ज्ञेयाभावेनौपाधिकभेदस्यापि तत्राभावात् । न चौपाधिकभेदाभ्युपगमेऽपि कर्तृकर्मणोरत्यन्तभेदो न सिद्ध्यतीति वाच्यम् । सर्वत्र प्रमेयत्वादिना अभेदसम्भवेनात्यन्तभेदस्य कुत्राप्यनङ्गीकारात् ।

न च ग्राह्यग्राहकभावो भेदे एवेति नियमाभ्युपगमे आत्मवादे आत्मनि चैतद् भवतीति भाष्येणाहं प्रत्ययस्य प्रत्यगात्मवृत्तित्वोक्तिर्विरुद्ध्येत् इति

वाच्यम्, ज्ञानमात्रस्य ग्राहकत्वायोगेन तद्विशिष्टस्यात्मनो ग्राहकतया द्रव्यत्वादिना च ग्राह्यतयोपाधिभेदेऽपि तादृशोपाधिविशिष्टस्य कर्तुः कर्मणश्चैक्यादहंप्रत्ययस्य प्रत्यगात्मवृत्तित्वोपपत्तेरिति ।

किं च यदि ग्राह्यग्राह्यकयोरभेदः स्यात्, तर्हि ग्राह्याकारग्रहणवेलायां ग्राहकाकारोऽप्यनुभूयेत, किं वा ग्राहकाकारस्फुरणवद् ग्राहकाकारोऽपि न स्फुरेत्, न ह्यस्ति सम्भवः सत्यभेदे ग्राह्याकारः स्फुरेन्न ग्राहकाकारः एकस्यैकदा ग्रहणाग्रहणयोर्विरोधात् । एवं ग्राहकानुभवसमये ग्राह्याकारोप्यनुभूयेत, न वा । तद्वदेव ग्राहकाकारोऽपि । न चैवं दृश्यते, किन्तु कदाचिद् ग्राह्याकारोऽनुभूयते न ग्राहकाकारः कदाचिच्च ग्राहकाकार एवानूभूयते, न ग्राह्याकारः । एवमेकानुभवदशायां द्वयोरपि भानं न स्यात्, अभेदात् ।

ग्राहकाकारानुभवं विनापि ग्राह्याकारानुभवो भवतीत्येतत्प्रदर्शनाय-**बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते** इत्यभिदधता भाष्यकृता ग्राहकाकारात् पृथक् ग्राह्याकारव्यवतिष्ठापयिषया प्रत्यक्षादिप्रमाणवेद्यं नीलादि तच्छब्देन निर्दिश्योदाहृतम् । स एव प्रत्यक्षादिप्रमाणवेद्यं नीलादि बहिर्देशसंबद्धः, नान्तरः । अतो ज्ञानाकारादतिरिच्यते इति भावो भाष्यकर्तुः ।

केचित्तु नीलादेरर्थाकारत्वसिद्धये बहिर्देशसम्बद्धत्वं हेतुत्वेनाऽभिप्रेतं भाष्यकृतः, तथा च नीलादिरर्थाकारो बहिर्देशसम्बद्धत्वादिति न्यायाकारः । न च बहिर्देशसम्बद्धत्वं ज्ञानाकारस्य सम्भवति इति बलादर्थाकार एव नीलादिः सिद्धयतीत्याहुः ।

तदयुक्तम् । विज्ञानवादिनां बहिर्देशतत्सम्बन्धयोरभावेन विशिष्टहेतोरेवासिद्धेः । न च स्वमतासिद्धहेतुभावेन साधनेन परो बोधयितुं शक्यते, अतिप्रसङ्गात् । तस्मात्पूर्वोक्त एव भाष्यार्थः ।

एवं ग्राह्यज्ञानं विनापि ग्राहकज्ञानं भवति इत्येतत्प्रदर्शयितुं **सत्यं पूर्वं बुद्धिरुत्पद्यते,** न तु पूर्वं ज्ञायते, भवति हि कदाचिदेतत्—यज्ज्ञातोऽप्यर्थः सन्नज्ञात इति वक्ष्यते भाष्यकृता । यथाऽस्मिन्देशे कोऽपि पुरुषो मयानुभूतः, स परमिदानीं स्मृतिपथं नायातीति ग्राह्यस्मरणेऽपि ग्राहकज्ञानस्मरणं भवति । तथा च यदि ग्राह्यग्राहकयोरभेदः स्यात्, तदा ग्राहकस्येव ग्राह्यस्यापि स्मरणं स्यात् । भवतस्तु एकतरस्य स्मरणास्मरणे इति ग्राह्य-

ग्राहकयोर्भेदः । ननु ग्राहकसद्भावाद् ग्राह्यस्य ग्रहणमस्तु, ग्राहकस्य तु ग्राहकान्तराभावादेवाग्रहणमित्येकस्य ग्रहणेऽपरग्रहणापादनमयुक्तम् । न च ग्राहकेण ग्राह्यस्येव ग्राह्येन ग्राहकस्यापि ग्रहणमस्त्विति वाच्यम् । तस्य ग्राह्यस्वभावतया ग्राहकशक्तेरयोगादिति चेत्, न । एवं सति ग्राह्यग्राहकभावरूपोभयधर्मव्यवस्थापनासङ्गतिप्रसङ्गात् । एवं ग्राहके ग्राह्यस्वभावानभ्युपगमेऽपि बोध्यम् ।

अस्तु तर्हि एकस्वभावमेवेति चेत् ? न । ग्राह्यग्राहकयोः परस्परसापेक्षतया एकस्यासिद्धौ तदुभयासिद्धिप्रसंगात् । तथा च ज्ञानाभाव एव स्यात् । न च ग्राह्यग्राहकभावयोरुभयत्र सत्त्वेऽपि सूक्ष्मद्रव्ये गन्धरसयोरिवोद्भवाभिभवाभ्यामुपलम्भानुपलम्भौ स्यातामिति वाच्यम् । गन्धरूपयोर्भेदादुद्भवाभिभवयोः समर्थनेऽपि प्रकृते भेदाभावेन तदसम्भवात् । न च भेदाभेदवादिनस्तव शब्दनित्यत्वयोरप्यभेदात् शब्दग्रहणेऽपि नित्यत्वादेरिव एकस्य ग्रहणेऽपि अपरस्याग्रहणं ममापि किं न स्यादिति वाच्यम् । मन्यते तयोर्भेदस्यापि स्वीकारात् । एकस्य युगपदुद्भवाभिभवकल्पनायाः सम्भवाभावात् । न च शब्दनित्यत्वयोर्भेदे प्रमाणविरहः, मूर्द्धाभिषिक्तस्य बुद्धिभेदस्यैव प्रमाणत्वात् । देशपरिमाणभेदस्यैव वस्तुभेदप्रयोजकत्वमितिनियमे तु न किञ्चित्प्रमाणम् । अन्यथा वाच्यत्वप्रमेयत्वादेरभेदापत्तेरिति दिक् ।

वैभाषिकाः पुनराहुः—सत्यं ग्राह्याद् ग्राहकमतिरिच्यते, परन्तु तज्ज्ञानमेव, नार्थान्तरं नीलादि अक्लृप्तकल्पनापेक्षयोभयवादिसिद्धज्ञानाभ्युपगम एव श्रेयान्, लाघवादिति ।

तदयुक्तम्—स्वलक्षणातिरिक्तस्य सामान्यस्य तन्मतेऽभावात्, उभयत्र ज्ञानाव्यपदेशासङ्गतेः अथातिरिक्तं सामान्यं स्वीक्रियते, तर्हि तदतिरिक्तमनतिरिक्तं वा । आद्ये तस्यैव ज्ञानपदार्थतया ग्राह्यग्राहकयोरज्ञानापत्तेः । किं च तथापि ग्राह्यग्राहकभावविरहादज्ञानत्वप्रसङ्गः । अतिरिक्तसामान्यस्य ग्राह्यग्राहकाभ्यां सम्बन्धे रूपरसादिवदनेकत्वापत्तिः । एवं अव्यतिरिक्ते ग्राह्यग्राहकयोर्भेदात्तद्भिन्नस्य सामान्यस्यापि भेदापत्तिः तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् ।

ननु न जातिरूपं सामान्यं स्वीक्रियते, येन वैशेषिकस्येव ममाप्येते

दोषाः स्युः, किन्तु सादृश्यरूपम् अपोहरूपं वा सामान्यमिहास्ति इत्यपि न। विज्ञानातिरिक्तमनिच्छतां भेदघटितसादृश्यस्यापोह्याभावादपोहस्य च निरूपयितुमशक्यत्वात्। एवं सामान्यासिद्ध्या ग्राह्यग्राहकयोरनित्यत्वेनैकत्वोपपादनमयुक्तम्। अतीतस्य ज्ञानस्य प्रत्यक्षालम्बनत्वं च वक्तुमशक्यम्, विद्यमानग्राहित्वात्प्रत्यक्षस्य।

मास्तु तर्हि अतीतस्यालम्बनत्वं युगपज्जायमानयोरेव ग्राह्यग्राहकभावोऽस्तु। मैवम्। मन्मते कारणस्यैव ग्राह्यतया युगपज्जायमानयोः परस्परनिरपेक्षयोः सव्येतरविषाणयोरिव च कार्यकारणभावासम्भवात्। सिद्धस्य हि कारणत्वम्'असिद्धस्य च कार्यत्वम्, न चैकमेकदा सिद्धम्, असिद्धं च भवति, विरोधादिति न ग्राह्यग्राहकभावस्तयोः। अस्मन्यते ग्राहकमेव कारणम्, ग्राह्यं च कार्यम्। विषयेन्द्रियसन्निकर्षजन्या हि प्रत्यक्षप्रमितिः तज्जन्यज्ञाततारूपफलसमवायित्वादर्थस्य कर्मत्वम्, तदेव च ग्राह्यत्वम्, तेन रूपेणाऽर्थस्य कार्यत्वम्। एतस्यां क्रियायां यद् बुद्धेः कारणत्वं तदेव तस्याः कारणत्वं च एवं च विषयसमवेतस्य ज्ञाततारूपफलस्य तज्जनकबुद्धेश्च पौर्वापर्यसद्भावात्कार्यकारणभावः सूपपद्यते। त्वन्मते तु युगपज्जायमानयोर्ज्ञानयोः पौर्वापर्याभावात् कार्यकारणभाव एव दुर्घटः किं कार्यम्, किं कारणमित्यविवेकश्च, द्वयोरविशेषात्।

ननु न नियतपूर्ववर्त्तित्वं कारणत्वमस्माभिरुच्यते, किंतु तद्भावाभावाव्यभिचारित्बम्, तच्च युगपज्जन्मनोपि भवति। तथा चोक्तं 'प्रत्ययो व्यभिचारित्वात्सहेति प्रत्ययः कारणम्, सहजन्मनोऽव्यभिचारित्वात् कारणत्वमित्यर्थः इति चेत्? न। सहजायमानयोरूपरसयोरपि मिथः कार्यकारणभावापत्तेः। अतः पौर्वापर्यघटितमेव तद्वाच्यम्। न च प्रदीपप्रभायां व्यभिचारः। तत्रापि पूर्वपूर्वप्रभाया उत्तरोत्तरप्रभाहेतुत्वाङ्गीकारात्, कालस्यातिसूक्ष्मतया यौगपद्यभ्रमस्तत्र उत्पलपत्रशतव्यतिभेदनवत्। तुलोन्नमनानमनयोः परस्परकार्यकारणभावाभावात् सकृदुत्पत्तावपि न क्षतिरिति।

अस्तु तर्हि पूर्वज्ञानस्योत्तरणज्ञानेन ग्रहणम्। न चातीतस्य प्रत्यक्षालम्बनत्वम् नेति पूर्वमेव निराकृतमिति। सत्यं निराकृतम्, किन्तु तदयुक्तम् पूर्वज्ञानमुत्तरज्ञाने तादृशीं शक्तिमादधाति, यथा पूर्वज्ञानमुत्तरस्यालम्बनं भवति, स्मरणस्येवानुभवः तथा चोक्तं शक्त्यर्पणाक्रमादिति।

अत्रोच्यते अतीतस्य वर्तमानत्वेन ग्रहणे भ्रमत्वापत्तिः । वर्तमानत्वेन गृह्यमाणस्यार्थस्यातीतत्वमप्रामाणिकं च दृष्टान्तोऽपि विषमः अनुभवो हि अतीतत्वेन स्मरणस्यालम्बनं न वर्तमानत्वेन । स्वप्ने तु अतीतस्य वर्तमानत्वेन ग्रहणमुचितमेव । तस्य भ्रमत्त्वात् । पुनरस्य वाधकज्ञानादवसीयते । प्रकृते च वाधादर्शनान्न भ्रमकल्पनेति, नातीतस्य वर्तमानत्वेन ग्रहणं युज्यते । तथा चैवं प्रयोगो विधेयः—अतीतो न प्रत्यक्षविषयः अवर्तमानत्वादनागतवत् । अपि चातीतस्यापि प्रत्यक्षालम्बनत्वे अर्थस्यैवालम्बनत्वमुचितमविशेषादिति सौगतमताविशेषः ।

किंच शक्त्यर्थकमतीतं यद् ज्ञानम्, तत् किं ग्राह्यैकस्वभावमुत ग्राहकैकस्वाभावम्, अथवोभयस्वभावम् । आद्ये गृहीतमेव ज्ञानं वासनामर्पयितुमर्हति नागृहीतमिति, स्वोत्तरज्ञानोत्पत्तेः प्राग् ग्राह्यैकस्वाभावं ज्ञानगृहीतमेवेत्यनागतज्ञानवन्नोत्तरत्र वासनार्पणाय प्रभवति । शक्त्यर्पणाभावे तु पूर्वविषयत्वेनोत्तरज्ञानं कथमुत्पद्येतापि । तथा चायं प्रयोगः—अतीतज्ञानं न वासनार्पकम् अज्ञातत्वादनागतज्ञानवत् सन्तानान्तरवर्तिज्ञानवद्वेति ।

द्वितीये कल्पे ग्राह्यस्वभावत्वानभ्युपगमेन पूर्वज्ञानस्योत्तरज्ञानालम्बनत्वानुपपत्तिः । ग्राह्याभावेन ग्राहकस्याप्यसिद्धिप्रसंगः । न च पूर्वज्ञानं ग्राह्यम्, तस्याप्येत्रं रीत्या ग्राहकस्वभावत्वात् ।

तृतीये कल्पे तु स्वोत्पत्तिबेलायामेव स्वग्रहणापत्तिः । उत्तरज्ञानप्रतीक्षाविरहात् ।

ननु यथा त्वन्मते विषयापेक्षया ज्ञानस्य ग्राहकत्वम्, ज्ञानान्तरापेक्षया च ग्राह्यत्वमित्येकस्यैव ज्ञानस्य ग्राह्यग्राहकत्वोभयं स्वीक्रियते, तथाऽस्मन्मतेऽपि पूर्वज्ञानापेक्षया ग्राहकत्वमुत्तरज्ञानापेक्षया ग्राह्यत्वमिति, तदुभयमेकत्र किं न स्यात् । कः पुनरत्रावयोर्विशेष इति चेदयं विशेषः । भवन्मते पूर्वज्ञानमुत्तरज्ञाने शक्तिमर्पयत्स्वयमुत्तरस्य विषयो भवति शक्त्यर्पणं चानाविज्ञातं कर्तुमर्हतीति तज्ज्ञानमपेक्षते ज्ञानं च पुनः ग्राहकं विना न, ग्राहकं च न शक्त्यर्पणं विनेति उत्तरस्मिन् शक्त्यर्पणाय स्वज्ञानमावश्यकमित्युत्पत्तिबेलायामेव स्वग्रहणापत्तिः । सा चायुक्तेति दर्शितम् । अस्मन्मते तु न ज्ञानं स्वस्मिन् वासनां जनयति, अपि तु अर्थे अर्थविषयकस्मरणमेव तेन

जन्यते इति, न स्वोत्पत्तिबेलायां स्वग्रहणापेक्षा एवं च ग्राहकरूपत्वम्, ग्राह्याकारत्वं च पूर्वज्ञानस्य न सम्भवति, किन्तु ग्राह्याकारत्वमेवेति भङ्ग्यन्तरेणार्थं एवाभिहित इति।

एवमुत्तरमपि ज्ञानं ग्राहकस्वभावंमुत ग्राह्यस्वभावम्, किं वा उभयस्वभावमिति विकल्प्य निरसनीयमिति। किं च क्षणिकज्ञाने व्यापाराभावात् शक्त्यर्पकत्वमयुक्तम्। अत्रायं प्रयोगः। एकसन्तानपतितानां ज्ञानानां न मिथः कार्यकारणभावः ज्ञानत्वात् सन्तानान्तरवर्तिज्ञानवत्। ग्राह्यग्राहकयोर्भेदे चानुमानम् रूपं, तद्ग्राहकं च मिथोभिन्नं परस्परपरिहारेण परामर्शविषयत्वात् रूपरसवत् ज्ञानं स्वांशं न गृह्णाति, नापि स्वांशेन गृह्यते, ज्ञानादुत्पद्यमानत्वात्। वासनावत्।

ग्राह्यग्राहकशक्तिद्वयनिराकरणाय चेदीदृशः प्रयोगः ज्ञानं न द्विशक्तिकं ज्ञानोत्पत्तेः वासनावदिति। न चैवं ज्ञाने इव आत्मनि अपि ग्राहकोभयशक्तिमान् वस्तुत्वात् घटवदिति वाच्यम्, आत्मनि तदुभयग्राहकमानसप्रत्यक्षविरोधेन तादृशानुमानानुदयात्। ज्ञानस्य तदुभयशक्तौ तु न किंचित्प्रमाणमतस्तत्रानुमानं भवत्येवेति। तथा च नीलादेः ज्ञानाकारत्वे प्रमाणाभावादतिरिक्तत्वसिद्धिरेवं चोभयवादिसिद्धत्वात् ज्ञानस्य तस्यैवाकारकल्पना युक्ता लाघवमेत्रं सति भवतीति तदुक्तिर्हेया, प्रमाणसिद्धस्यापलापायोगात्। यदपि नाप्रकाशितस्वस्वरूपोर्थं प्रकाशयितुमर्हतीति अर्थग्रहणात्प्रागेव ज्ञानग्रहणम्। तदप्यसंगतमेव, इन्द्रियादौ व्यभिचारात्। निलीनान्येवेन्द्रियाणि अर्थं प्रकाशयन्ति नार्थग्रहणात्प्राक् तेषामुपलम्भ इत्यलमतिविस्तरेण। प्रकृतमनुसरामः।

ननु इदं नोलं कुतः यतो नीलाकारोऽत्रबुद्धिर्नो जायते इति व्यवहारदर्शनाद्बुद्धेः साकारत्वमेवेति चेत्, न। बुद्धेः साकारत्वतात्पर्येणेदृशप्रयोगाभावात्। नहि वक्तारः साकारां बुद्धिमधिगम्य तदाकारमर्थं व्यवस्थापयन्ति, किन्तु ग्राहकं ज्ञानं यादृशाकारं समर्थयते, तादृशाकारोऽयमिति तात्पर्येण तथोक्तिः। यदपि ज्ञानपूर्वकार्थग्रहणात्तदाकारत्वम्। तदपि न। ज्ञानस्य तदुपायत्वात्। नहि उपायं परित्यज्य उपेयाधिगतिः क्वचिद् दृष्टा। एवं यत्र नीलाकारं ज्ञानम्, पीताकारं ज्ञानमित्युच्यते, तत्रापि न ज्ञानस्य विषया-

कारत्वे तात्पर्यं किन्तु तत्राकारपदं विषयार्थकम् एवं च नीलविषयकं पीतविषयकं ज्ञानमित्येवार्थ इति नार्थो ज्ञानाकारः, किन्त्वतिरिक्त एवेति संक्षेपेण विज्ञानवादिमतं तत् खण्डनं च प्रदर्शितम् ।

अथ भाष्यं व्याख्यायते **शून्य इति** । एतद् व्याख्यातमेवप्रत्ययपदानुवृत्तिप्रदर्शनेन पूर्वम् अत्रोपपत्तिं पृच्छति कुत इति ? विज्ञानवादी उपपादयति—**अर्थ इति** । अयं भावः इदं नीलमित्यादिप्रत्यक्षे नाकारद्वयं भासते, येनैको बाह्यार्थस्य स्यात्, अपरश्च ज्ञानस्य, किन्तु एक एवाकारः स्फुरति । स च बाह्यस्य न सम्भवति, बाह्यस्य विप्रकृष्टतयान्तरज्ञानसम्बन्धायोग्यत्वात् । असम्बद्धार्थभाने अतिप्रसंगादुभयवादिसिद्धज्ञानाश्रयणेनैवोपपत्तौ तदतिरिक्तार्थकल्पनायां गौरवं चेति ज्ञानाकार एव स्फुरति । न च तयोरभेदे न स्फुरणमित्याह-**अर्थं नोपलभामह** इति । ज्ञानस्य स्वाकारग्राहित्वात्प्रत्यक्षत्वम्, अर्थस्य ज्ञानाकारार्थकत्वेनोपक्षीणत्वादतीतत्वादसत्याच्च न प्रत्यक्षग्राह्यत्वमित्यभिप्रायेणाह विज्ञानवादी-**प्रत्यक्षेति** ।

**भाष्यम्—प्रत्यक्षा च नो बुद्धिः अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः । स्यादेतदेवं यद्यर्थाकाराबुद्धिः स्यात् । निराकारातु नो बुद्धिः । आकारवान् बाह्योऽर्थः । स हि बहिर्देशसंवद्धः प्रत्यक्षमुपलभ्यते । अर्थविषया हि प्रत्यक्षवुद्धिः, न वुद्धचन्तरविषया । क्षणिका हि सा न बुद्धचन्तरकालमवस्थाप्यते इति । उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति च । अर्थान्तरं प्रदीपवदिति यदुच्येत । तन्न ।**

नः अस्माकं विज्ञानवादिनां अर्थरूपं बाह्यं नीलादि न किञ्चिदस्तीति । अर्थस्य जडत्वेन स्वतः प्रकाशासम्भवात् प्रमाणाधीनसत्ताकत्वमेवेति प्रमाणाभावान्न तत् सिद्धिः, अन्यथा सप्तमरसादेरपि स्वीकारापत्तेरिति ।

पूर्वोक्तरीत्या बुद्धेः साकारत्वनिराकरणादिदं नीलमित्यादिप्रत्यक्षे वर्तमानत्वेन भासमान आकारोऽर्थस्यैव न ज्ञानस्य निराकारत्वादित्याह—**स्यादेतदिति** । आकारवान् बाह्योऽर्थ इति प्रतिज्ञातस्य समर्थनाय ग्राहकांशाद् विविच्य ग्राह्यांशं दर्शयन्ति **स हीति** । स हि नीलाद्याकारः प्रत्यक्षग्राह्यः बहिर्देशसम्बद्धःप्रतीयते, न बुद्धिरित्यर्थ । अर्थान्तरन्त्वस्य निरा-

कृतमिति नेह पुनरुच्यते । यदपि पूर्वज्ञानविषयकत्वमुत्तरज्ञानस्याभिहितम् । तदपि न युक्तमित्याह—**अर्थविषयेति** ।

न **बुद्ध्यन्तरविषयेत्यत्र** युक्तिमाह-क्षणिका हीति । अयं भावः पूर्वज्ञानमुत्तरस्य विषयो न भवितुमर्हति, उत्तरज्ञानोत्पत्तिसमये पूर्वज्ञानस्य क्षणिकत्वेनासत्त्वात् । यदा चातीतं न प्रत्यक्षस्यालम्बनम्, तदा अर्थ एव नीलादिः तदालम्बनमिति बाह्यार्थः सिद्ध्यत्येवेति । **उत्पद्यमानैवेति** । यथा प्रदीपः स्वस्वरूपं प्रकाशयन् घटादिं प्रकाशयति, एवं ज्ञानमपि तदानीमात्म-स्वस्वरूपं प्रकाशयदर्थं प्रकाशयतीति द्वयोरेकदैव भानमित्यर्थोऽस्य भाष्यस्य प्रतीयते । स च न युक्तः, शून्यवादिनामर्थज्ञानयोरेकदाभानस्याभिमतत्वे ज्ञानवदर्थस्यापि स्वीकारापत्तौ पूर्वपक्षोच्छेदापत्तेः । अर्थनिराकरणाय प्रवृत्तानां शून्यवादिनामर्थस्यैव सिद्ध्यार्थान्तरत्वापत्तेश्चेति चेत् ? न । यतो नेदं भाष्यं विज्ञानवादिनां स्वपक्षोत्थापनपरम्, ते स्वमतेन इदं न ब्रुवते, किन्तु बाह्यार्थवादिनम्प्रति ब्रुवन्ति प्रत्यक्षोत्पत्तिबेलायां स्वस्वरूपप्रत्यक्षस्य प्रतिबन्धकं किञ्चिदिच्छन्ति भवन्तो, न वा । आद्ये अप्रकाशितस्वस्वरूपः प्रदीप इव कथमर्थं प्रकाशयत्प्रत्यक्षम् । अन्त्ये प्रकाशमान आकारोज्ञानस्यै-वास्तु, आवश्यकत्वादलमथस्वीकारेप्यनेनेत्यर्थाभावः सिद्धयतीति अभिप्रायो-ऽस्य भाष्यस्येति, नासंगतिरिति ।

पूर्वपक्षं निराकरोति—

**भाष्यम्—तन्न । नहि अज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते । ज्ञाते तु अनुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम् ।**

**तन्नेति** । अयमभिप्रायः प्रत्यक्षोत्पत्तिवेलायामेतद् ग्रहणप्रतिबन्धकं न किञ्चिदिति यदुक्तम्, तत् सत्यम् । किन्तु ग्राहकाभावात्तदा नैतद् गृह्यते, एकत्र कर्तृकर्मविरोधेन स्वयं न गृह्यते, ग्राहकान्तराभावादन्येनापि नेत्य-गृहीतमेव ज्ञानमर्थं प्रकाशयतीन्द्रियवत् । कथं गाहकाभावो निश्चीयत इत्यत आह **नहीति** । ज्ञातत्वमेवैतद्ग्राहकं, तच्च तदानीं नास्ति, व्यतिरेकमुक्त्वा-न्वयमाह **ज्ञात इति** । तथा चान्वयव्यतिरेकाभ्यां ज्ञातत्वमेवेतद्ग्राहकमिति निश्चीयते । घटेऽवगते पश्चात् घटो विषयतासम्बन्धेन ज्ञानवान् स्वरूप-सम्बन्धेन ज्ञाततावत्त्वादित्याद्यनुमानेन ज्ञानं गृह्यत इति भावः ।

ये तु बाह्यार्थवादिनो वैशेषिका उत्पत्ति-समये एवं ज्ञानं गृह्यत इति मन्यन्ते । तेषां निराकारस्य ज्ञानस्य प्रत्यक्षत्वासम्भवात्साकारत्वमेव वाच्यं स्यात् । तथा सति प्रत्यक्षे भासमानः आकारो ज्ञानस्यैवेति, अर्थसिद्धिरेव न स्याद् 'अत उत्पत्तिसमये ज्ञानग्रहणं स्वगृहे अन्तकावाहनमिवानुचित-मित्येतदनेन वाध्यते इति ।

**भाष्यम्—ननु उत्पन्नायामेव बुद्धौ ज्ञातोऽर्थ इत्युच्यते, नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते, पश्चाज्ज्ञातोऽर्थः । सत्यम् । पूर्वं बुद्धिरुत्पद्यते नतु पूर्वं ज्ञायते ।**

उत्पन्नायामेवेति । ननु शून्यवादिनोऽयमाक्षेपो न युज्यते परस्येष्टा-पादनात्, स्वस्य चानिष्टापादनात् । तथा हि 'पूर्वं बुद्धिरुत्पद्यते पश्चादर्थं उपलभ्यते, इत्येतत्परस्येष्टमेवेति, न किञ्चिदनिष्टमापादितमनेन । स्वस्य तु अत्यन्तं प्रतिकूलम्, स्वमते बाह्यार्थाभावात् । पश्चादर्थं उपलभ्यते इत्येतदङ्गी-कर्तुमनर्हम्, तथाप्येतदङ्गीकारे स्वपक्षव्याघातः परपक्षाभ्युपगमश्चेति । किंच उत्पद्यमान एवासौ ज्ञायते ज्ञापयति चेत्यादिना ज्ञानाज्ञानयोर्यौगपद्यमभिहितम्' इह तु पौर्वापर्यमभिधीयते इति स्वपूर्वोक्तिविरोधोपीति चेत्, न, अत्रापि यौग-पद्यस्यैवाभिधानात् । पूर्वं बुद्धिरुत्पद्यते पश्चात् ज्ञातोऽर्थ इत्युक्त्या बुद्ध्युत्पत्ति-वेलायामर्थज्ञानं न जायते, तदा तदनन्तरमर्थज्ञानस्य भूतत्वं न घटेत इति अर्थज्ञानस्य भूतत्वाभिधानादवगम्यते । बुद्ध्युत्पत्तिवेलायामर्थज्ञान-मिष्टम् ।

अपि च यदि ज्ञानोत्पत्तिसमये अर्थज्ञानं न स्यात् तदाऽर्थस्य क्षणि-कत्वादुत्तरकाले तदवस्थानाभावात्प्रत्यक्षेण ग्रहणं न स्यात्, वर्तमानमात्र-ग्राहित्वात्प्रत्यक्षस्येति यौगपद्यमिहापि तयोरभिधित्सितमिति न विरोधः । न च यौगपद्यं पूर्वमेवभिहितमिति पुनस्तदभिधानं व्यर्थमेवेति वाच्यम् । पूर्वंदत्रापि स्वपक्षाभिधाने तात्पर्यविरहात् **ज्ञाते त्वनुमानादवगच्छतीति** सिद्धान्तिवचनात् भ्रान्तः शून्यवादी सिद्धान्तिपक्षमन्यथा गृहीत्वा-ऽऽशङ्कितवान् । ननूत्पन्नायामिति ज्ञानस्योत्पत्तिरुपलब्धिश्च युगपदे-वेत्यत्र न कश्चिद्विवादः । विवादभूमिः पुनरियम् तत् अर्थोपलब्धेः पूर्वम्, पश्चाद्, युगपद्वेति । **ज्ञाते त्वनुमानादवगच्छतीति** भाष्योक्त्या

मीमांसका अर्थज्ञानानन्तरं ज्ञानग्रहणमिच्छन्ति। अर्थज्ञानानन्तरं ज्ञानग्रहणं भवतीति श्रुत्वा शून्यवादी भ्रान्तः यदि अर्थज्ञानानन्तरं ज्ञानग्रहणम्, तर्हि ज्ञानोत्पत्तिरपि ग्रहणोत्पत्तिवदर्थज्ञानानन्तरम् एवेष्टा स्यात्, तच्चानिष्टमिति ज्ञानोत्पत्तिः अर्थज्ञानात्प्रागपाकृष्या इत्यभिप्रायेणाह ननूत्पन्नायामिति। अर्थ-ज्ञानात्प्राग् यदि ज्ञानोत्पत्तिः, तदा तद्ग्रहणमपि प्रागेव सिद्धचतीति अभि-प्रायः। अस्तु ज्ञानसंवित्तिरपि पूर्वं तावता प्रकृते किमायातमिति चेत्, इदमायातम्। निराकाराज्ञानस्योपलब्धिरशक्येति, साकारं वाच्यमिति प्रत्यक्ष-ज्ञाने आकारद्वयभानाभावाद् भासमान एक आकारो ज्ञानस्यैवेति नार्थ-सिद्धिरिति स्वपक्षानुकूलोऽयमाक्षेपो न प्रतिकूल इति भावः।

एवं पूर्वमुत्पद्यमान एवासौ ज्ञायते ज्ञापयति चार्थान्तरमिति यद् यौग-पद्यमुक्तम्, तस्यापि ज्ञानाकारसिद्धावेव तात्पर्यमिति। **सत्यं पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायत** इति सिद्धान्तवादिनोऽयमभिप्रायः, यदि अर्थज्ञानात्प्राग् ज्ञानसंवित्तिः स्यात्, तदा प्रत्यक्षे भासमान आकारो ज्ञानस्यैव भवेदित्यर्था-कारो न सिद्धयेत्। तत्तु न पूर्वं बुद्धेरुत्पत्तावपि तद्ग्रहाभावान्न तदाकारः प्रत्यक्षे भासितुमर्हति इत्यर्थाकार एव बलादनिच्छतापि स्वीकार्य इति अर्थ-स्यैव पूर्वं ज्ञानम्, न बुद्धेरित्येतत्प्रदर्शयितुमाह।

**भाष्यम्—भवति हि कदाचिदेतत् यज्ज्ञातोऽप्यर्थः सन् अज्ञात इत्युच्यते। न चार्थव्यपदेशमन्तरेण बुद्धेः स्वरूपोपलम्भनम्। तस्मान्न व्यपदेश्या बुद्धिः, अव्यपदेश्यं च न प्रत्यक्षम्। तस्माद् प्रत्यक्षा बुद्धिः।**

**यज्ज्ञातोऽप्यर्थः सन्नज्ञात** इत्युच्यते इति। इह देशे कोपि पुरुषो मयानु-भूत इत्युक्त्या। पूर्वमेवेदं व्याख्यातमिति न भूयो व्याख्यानमर्हतीति। तथापि संक्षिप्योच्यते। यदि अर्थज्ञानयोरेकदाऽनुभवः स्यात्, तदैकानुभवगोचरतैव स्यादिति तादृशानुभवाहितसंस्कारो ज्ञानमिवार्थमपि स्मारयेत्, संस्करोप-धानाक्षमत्वे तु अर्थमिव ज्ञानमपि न स्मारयेत्, अविशेषात् नहि अस्ति संभवः स एवानुभवः संस्कारमुपदधाति, नोपदधाति च, मिथो विरोधात्। भिन्नानुभवकल्पनायान्तु ज्ञानविषयकानुभवस्य संस्काराधानसामर्थ्यं कल्प्यते अर्थविषयकानुभवस्य तु नार्थस्मरणाभावादित्यर्थविस्मरणेऽपि ज्ञानमात्र-स्मरणमुपपद्यते इति, नार्थसंवित्योरेकदानुभव इति।

वस्तुतस्तु नायं भाष्यार्थः एकस्यैवानुभवस्य ज्ञानांशे संस्कारोपधायकत्वम्, अर्थांशे तु तदभावः कल्प्यते । सहानुभूतयोः सहैव स्मरणमिति नियमे मानाभावादुद्बुद्धसंस्कारस्यैव स्मारकतया यदंशे स्मरणं न भवति, तदंशे संस्कारोद्बोधाभावाकल्पनमेवोचितमिति, न, ज्ञानस्मरणेऽपि अर्थविस्मरणेनार्थसंवित्तिसमये ज्ञानसंवित्तिनिराकरणं युज्यते तस्मान्नेदं भाष्यम् अर्थसंवित्तियौगपद्यनिराकरणापरम्, किन्तु अर्थोपलब्धेः पूर्वं ज्ञानसंवित्तिसाधनस्य यत्फम् अर्थस्य ज्ञानाकारत्वम्, तदेवानेन भाष्येण निराक्रियते, यदि ज्ञानं नीलाकारं स्यात्, तर्हि नीलाकारविनिर्मुक्तं न समर्प्येत च तदाकारविनिर्मुक्तमिति, न तदाकरमित्यर्थः । अर्थस्य जडत्वात् ज्ञानोत्पत्तेः प्राग् न ज्ञातुं शक्यमिति न पूर्वं ज्ञायते इति । **न चार्थव्यपदेशमिति** । स्वच्छं चिन्मात्रं केवलं ज्ञानमेवावशिष्यतेऽन्यत्किमपि नास्ति जगतीति शून्यवादिनां भवतां मतम् । तथा च त्वन्मते अनादिवासनावशादपारमार्थिकनीलपीताद्याकारेण ज्ञानमेव स्फुरति, न तु कश्चिदपरः पारमार्थिकस्तत्र प्रकाशते इति ।

तदिदमसंगतम् । मृगतोयादिज्ञानस्येव नीलादिज्ञानस्यापि भ्रमत्वापत्तेः, सर्वथाऽसतोविषयस्य भानासम्भवाच्च ज्ञानस्य सविषयकस्यैव दर्शनात् निर्विषयकज्ञानानङ्गीकारात् । स्वप्नादावपि कदाचिदनुभूतस्यैवान्यथाभानम्, न तु सर्वथाऽसत इति विषयद्वारैव बुद्धेः प्रत्यक्षत्वम्, न स्वरूपत इति विषयानङ्गीकारे अप्रत्यक्षैव बुद्धिरित्याह तस्मादप्रत्यक्षाबुद्धिरिति ।

**भाष्यम्—अपि च काममेकरूपत्वे बुद्धेरेवाभावः नार्थस्य प्रत्यक्षस्य सतः । न चैकरूप्यम्, अनाकारमेव हि बुद्धिमनुमीमहे, साकारं चार्थं प्रत्यक्षमेवागच्छामः । तस्मादर्थालम्बनः प्रत्ययः । अपि च नियतनिमित्तः तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा तन्तूपादानेऽपि कदाचित् घटबुद्धिरविकलेन्द्रियस्य स्यात् । न चैवमस्ति । अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् ।**

**दोषान्तरमाह—अपि चेति** । विषयानभ्युगमे तन्तुष्वेव पटप्रत्ययोभवति, न मृत्पिण्डेषु इति नियमो न स्यात्, पटस्यासत्त्वाविशेषात् । तन्तुष्विवमृत्-पिण्डेष्वपि पटप्रत्ययोऽदूषितेन्द्रियस्यापि स्यात्, न चैवं दृश्यते । तस्मात् सालम्बन एव प्रत्ययो वाच्य इति, न व्यभिचारि प्रत्यक्षमिति ।

ननु बाह्यपदार्थस्वीकारेऽपि कस्मात्तन्तुभ्य एव पटोत्पत्तिर्न मृत्पिण्डेभ्यः बाह्यार्थस्योभयत्र साम्यात् । न च यत्कार्यजननशक्तिर्यत्र, तत एव तत्कार्यमिति निममः तथा च पटजननशक्तिः तन्तुष्वेवेति, तत एव पटोत्पत्तिः, न मृत्पिण्डेभ्यः तत्र तादृशशक्तिविरहादिति वाच्यम् । तन्तुज्ञाने एव पटज्ञानजननसामर्थ्यम्, न मृत्पिण्डज्ञानमिति व्यवस्थाया अन्यत्रापि वक्तुं शक्यत्वात् । तथा चोभयत्र शङ्कासमाधानयोस्तुल्यत्त्वादेकत्रैव विशिष्य पर्यनुयोगो नोचितः ।

उक्तं च । यथाविधं घटं दृष्ट्वा द्वैतवादी विचेष्टते ।
ज्ञात्वा तथाविधं ज्ञानम् अद्वैती किन्न चेष्टते ।

इति चेन्न । शून्यवादिनां शक्तेरप्यभावादीदृश्यव्यवस्थोपपादनासम्भवात् । शक्तादपि कारणात् सततकार्योत्पत्त्यदर्शनात्, शक्त्यभिव्यञ्जकं सहकारिकारणं वाच्यम् । तच्चास्मन्मते सम्भवति, देशकालनिमित्ततन्तुवायादीनां सत्त्वात् । त्वन्मते सहकारिणोऽप्यभावात्तद्व्यवस्था दुरुपपादैव ।

न च संवृत्तिरूपया शक्त्या व्यवस्था, तस्या मिथ्यात्वेन कार्योपयिकत्वाभावात् । सत्यत्वे च द्वैतापत्तिः । तद्वतपदार्थन्तरस्यापि स्वीकारापत्तिश्चेति वासनारूपैव शक्तिर्भवद्भिर्वाच्या । तस्याश्च नियामकाभावात् सर्वत्र ज्ञाने प्रसक्तौ, किंचिदेव ज्ञानं कस्यचिद् ज्ञानस्य निमित्तमितिनियमो न स्यात् इति ।

अपि च यदि वासनामात्रापेक्षया तन्तुज्ञानं पटज्ञानं जनयेत् तदा कारणान्तरापेक्षाकृतविलम्बाभावात् सर्वदैव पटज्ञानं जनयेत्, नैव वा कदाचिज्जनयेत् । न चैवमस्ति । तस्मात् कारणान्तरमेष्टव्यम् । यत्सत्त्वासत्त्वाभ्यां पटज्ञानस्य कादाचित्कत्वमुपपद्येत । किंच बीजज्ञानं विनापि अङ्कुरज्ञानदर्शनान्नोपादानज्ञानं कार्यज्ञानजनकं व्यभिचारादिति, कार्यज्ञाननियामकमन्यदेव वाच्यमिति भाष्यमतमेव युक्तम् । तदेवं बाह्यार्थग्रहणसामर्थ्यात् प्रत्यक्षं बाह्यार्थे प्रमाणम् । निरालम्बनत्वानुमानमपि बाह्यार्थाभावसाधनाय नोत्पत्तुमर्हति, प्रत्यक्षविरोधादिति प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयेन न बाह्यार्थाभावसिद्धिः । नेह नास्ति किंचनेत्याद्यागमस्यात्मप्रशंसापरत्वे नौपचारिकत्वान्न स्ववाच्यार्थे प्रामाण्यमिति, न बाह्यार्थबाधनाय सामर्थ्यम् ।

प्रत्युतविविधसाध्यसाधनाधिकारिबोधकवाक्यानि बाह्यार्थमेव साधयन्ति, न तदभावमिति । एवमुपमानार्थापत्त्योरपि द्वैते एव संभवान्नाद्वैतसाधकत्वमित्यलमतिप्रपञ्चनेन इति ।

इति कल्पकलिकायां शून्यवादः ।

**भाष्यम्—अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंन्निकृष्टेऽर्थे बुद्धिः ।**

पूर्वं विभिन्नसूत्रे लोकप्रसिद्धत्वात् प्रत्यक्षादीनि प्रमाणानि न परीक्षितव्यानीत्युक्तम् । ततः शुक्तिरजतादिज्ञाने प्रत्यक्षस्य व्यभिचारे दर्शनात्तत्पूर्वंकत्वाच्चानुमानादेर्व्यभिचार इति, तानि परीक्षितव्यानीत्युक्तम् । तदनन्तरं यद् व्यभिचारि, तन्न प्रत्यक्षम्, यत् प्रत्यक्षम्, तन्न व्यभिचारि । कोदृशं तत्प्रत्यक्षं यन्न व्यभिचारीत्यपेक्षायां सत्संप्रयोग इत्यादिलक्षणमभिहितम् । तदव्यभिचारसमर्थनाय बौद्धमतं च निराकृतमित्येतावता प्रबन्धेन प्रत्यक्षस्याव्यभिचारित्वं समर्थितम्, तत्पूर्वकत्वाच्चानुमानादेर्व्यभिचारसन्देहो निराकृतः । इदानीं स्वलक्षणेनाप्यनुमानस्याव्यभिचारित्वादपरीक्ष्यत्वमुच्यते **अनुमानमिति** । एवं लक्षणकमनुमानं न परीक्षितव्यम् एवं लक्षणकत्वादव्यभिचारिप्रत्यक्षपूर्वकत्वाच्चेत्याशयः । **ज्ञातसम्बन्धस्येति** । ज्ञातः निश्चितः सम्बन्धः व्याप्तिरूपः साध्यसाधनयोर्येन, स ज्ञात-सम्बन्धः, तस्य साध्यसाधनव्याप्तिनिश्चयवतः पुरुषस्येति यावत् । एकदेशस्य सम्बन्धिनोरेकतरस्य सम्बन्धानुयोगिनो हेतोः पक्षे दर्शनादेकदेशान्तरे तादृशसम्बन्धप्रतियोगिनि चक्षुराद्यसन्निकृष्टे साध्येऽर्थे विषयित्वं सप्तम्यर्थः । तद्विषयिणी या बुद्धिस्तदनुमानमित्यर्थः ।

अथ वा षष्ठचर्थे बहुव्रीहिः ज्ञातः सम्बन्धो यस्य स ज्ञातसम्बन्धः सपक्षो महानसादिः, तस्य य एकदेशः हेतुर्धूमादिः, तस्य पर्वतादौ दर्शनादेकदेशान्तरे तत्रैव वह्निबुद्धिः, सपक्षे हि साध्यसाधनयोर्व्याप्तिनिश्चयो भवतीति भावः ।

ज्ञातश्चासौ सम्बन्धश्चेति कर्मधारयो वा । सम्बन्धिद्वयनिरूपितः सम्बन्धः एकदेशी, तस्य य एकदेशः सम्बन्धानुयोगी हेतुर्धूमादिस्तस्य पर्वतादौ दर्शनादेकदेशे तादृशसम्बन्धप्रतियोगिनि वह्न्यादौ साध्ये या बुद्धि-

रित्यर्थः । ज्ञातः सम्बन्धो यस्य साध्यसाधनद्वयस्य तज्ज्ञातसम्बन्धं साध्यसाधनोभयम्, तस्य य एकदेशः साधनम्, तस्येत्यर्थः पूर्ववत् ।

अत्र समुदायिवाचकावेकदेशशब्दौ, न च पुरुषैकदेशसमुदायानां अत्रानिर्देशान्नान्यपदार्थत्वं युक्तम्, एकदेशस्य तु लक्षणवाक्ये निर्देशात्तस्यैवान्यपदार्थत्वं युक्तमिति वाच्यम् । निर्दिष्टस्यैवान्यपदार्थत्वं भवतीति नियमे मानाभावादाकाङ्क्षानिवर्तनक्षमस्यानिर्दिष्टस्यापि अन्यपदार्थत्वेन बहुव्रीहावाश्रयणात् । अत एव स्वर्गकामो यजेत इत्यादौ बहुव्रीहिपक्षे पुरुषस्य लाभः, अन्यथा तस्यानिर्दिष्टत्वेनान्यपदार्थत्वेनाग्रहणे तत्र बहुव्रीहिर्न स्यात्, एकदेशशब्दस्य समस्ततया गुणत्वेन विशेष्यतयान्वययोग्यताविरहात् । अन्यत्रान्वयाभ्युपगमे साकांक्षत्वेनासमर्थत्वापत्त्या समासाभावप्रसङ्गाच्च ।

न च तथापि ज्ञातसम्बन्धस्यैकदेशिपरत्वे तदपेक्षस्यैकदेशशब्दस्यासमर्थत्वापत्त्या दर्शनशब्देन सह समासानुपपत्तिस्तदवस्थैवेति वाच्यम् । देवदत्तस्य गुरुकुलमितिवन्नित्यसापेक्षस्य समासाङ्गीकारात् । न खलु एकदेशः कश्चित् स्वतन्त्रः पदार्थः—किन्तु कस्यचित् कश्चिदेकदेशो भवति इत्येकदेश इत्युक्तौ कस्यैकदेश इतिनियमेनैकदेशिनः आकाङ्क्षा भवति । अतः नित्यसापेक्षत्वस्य सामर्थ्यविघातकत्वं नास्तीति न समासानुपपत्तिरिति स्पष्टमन्यत्र ।

सम्बन्धरूपव्याप्तिकथनम् ।

कः पुनः सम्बन्धो व्याप्तिः ? येन केनापि सम्बधेन यो नियमः स एव सम्बन्धो व्याप्तिः, न तु संयोगसमवायादिरूपसम्बन्धविशेषनियतः, कृत्तिकारोहिण्युदयादौ व्यभिारात् । व्याप्यत्वं पुनः यो यस्य देशकालाभ्यां न्यूनः समो वा स तस्य व्याप्यः, व्यापकश्च यो यस्य देशकालाभ्यामधिकः समो वा स तस्य व्यापकः । एवं च व्याप्यस्य व्यापकापेक्षया समन्यूनदेशकालत्वाद् व्याप्येऽवगते यदि व्यापकोऽत्र न स्यात् तर्हि व्यापकत्वमेव तस्य भज्येतेति व्याप्यो व्यापकमवगमयति । व्यापकस्य तु व्याप्यापेक्षया समाधिकदेशकालत्वात् व्याप्यदेशकालातिक्रमणेऽपि व्यापकत्वाक्षतेर्न व्याप्यावगमकत्वमिति ।

ननु घटो गन्धवान् पृथिवीत्वादित्यादौ व्यापकेनापि व्याप्यानुमानं दृश्यते, दृश्यताम् । किन्तु तत्रापि गन्धत्वावच्छिन्नापेक्षया पृथिवीत्वस्य व्याप्य-

त्वमप्यवगतमिति, तत्र व्यापकत्वव्याप्यत्वयोः सत्त्वेऽपि गमकत्वं व्याप्यत्वेनैव, न तु व्यापकत्वेन । विषम-व्याप्तिके वह्निमान् धूमादित्यादौ व्याप्यत्वस्यैव गमकत्वदर्शनात् अत्रापि तस्यैव गमकत्वाङ्गीकारौचित्यात्, अन्यथा विषाणित्वेन गोत्वानुमानमपि स्यात् इति ।

ननु निखिलसाध्यसाधनाधिकरणीभूतदेशकालयोरर्वाग्दृशः प्रत्यक्षीकर्तुमशक्यतया यत्र क्वचन देशे काले च सामानाधिकरण्यमात्रदर्शनेन व्याप्त्यवगमे वैपरीत्यस्यापि सम्भवाद् व्याप्यत्वावधारणमेव दुर्घटमिति गतमनुमानप्रत्याशया । महानसादिगतवह्निधूमयोरेव व्याप्त्यवधारणे तु तादृशव्याप्तेः पक्षे पर्वतादौ विरहादनुमानस्यैवासम्भवापत्तेः । न च नैयायिकानामिव भवतां सामान्यलक्षणाप्रत्यासत्तिरस्ति, यया सर्वसाध्यसाधनयोः सकृदेव प्रत्यक्षीकरणाद् व्याप्त्यवगमः शक्यसम्पादनः स्यादिति चेत्, न । व्यभिचारदर्शनासहकृतः यत्र क्वचनदेशे काले वा साध्यसाधनसहचारग्रहस्य सामान्यतः व्याप्तिनिर्णायकत्वाभ्युपगमान्न दोषः । नहि व्याप्यत्वावगमाय निखिलसाध्यसाधनतदधिकरणदर्शनापेक्षा, अन्यथा व्याप्त्यवगमवेलायामेव पक्षस्यापि साध्यवत्त्वेनावगमादनुमानवैयर्थ्यापत्तेः । न चैकत्र सामानाधिकरण्यदर्शनेऽपि परत्र साध्याव्यधिकरणे हेत्वभावपरिच्छेदो न स्यादिति वाच्यं माभूत्परिच्छेदः । किन्तु साध्याभावाधिकरणे हेतुदर्शनं नाभूदितिव्यभिचारदर्शनाभानसहकृतं भूयः सहचारदर्शनं सामान्यतः व्याप्तिनिर्णायकमित्येवाङ्गीकारान्न दोषः ।

नन्वेवं व्याप्येन व्यापकावगमाङ्गीकारे ब्रह्महत्यायामधर्मत्वेन हिंसात्वस्य व्याप्यत्वावगमाद् अग्नीषोमीयहिंसायामधर्मत्वानुमानं स्यादिति चेत् ? न । हिंसात्वहेतोः सोपाधिकत्वात् । तथा हि निषिद्धत्वं विनापि सुरापानादावधर्मप्रयोजकत्वेन दृष्टम् । हिंसात्वं तु निषिद्धत्वं विना न क्वचिदधर्मप्रयोजकत्वेन दृष्टमिति ब्रह्महत्यादावपि प्रयोजकत्वेन निषिद्धत्वस्यैवाधर्मत्वव्याप्यत्वं स्वीकर्तुमुचितम्, न हिंसात्वस्यैति, निषिद्धत्वं हिंसात्वे स्वगतां व्याप्तिं सान्निध्यादुपदधाति स्फटिके आरुण्यं जपाकुसुममिवेति ध्येयम् ।

किंच सत्प्रतिपक्षितोऽपि हेतुः । तथा हि–अग्नीषोमीयहिंसा धर्मः विहितत्वादग्निहोत्रादिवत् । अग्नीषोमीयादिहिंसायामधर्मत्वानुमाने आगमविरो-

धोऽपि । तस्या अधर्मत्वे स्वर्गादिफलं न स्यात् । नहि अधर्मेण स्वर्गो भवतीति कस्यचिदभिमतम् । एवमव्यवस्थितहेतुनानुमाने यागोऽधर्मः क्रियात्वाद् हिंसादिक्रियावदित्यपि स्यात् । इति सर्वं एव व्यवहारोऽधर्मेणोपप्लुत इति न किंचित् परित्राणाय स्यादिति, प्रमाणान्तरेण साध्यवत्त्वात्मना पक्षे प्रमिते सिद्धसाधनदोषादनुमितिरेव न भवतीति प्रमाणान्तरेण साध्यवत्त्वेनाप्रमितस्य पक्षस्यानुमेयत्वं हेतुमत्त्वेन दृष्टान्ताप्रमितौ व्याप्यावगमासम्भवात् प्रमाणान्तरेण हेतुमत्त्वेन प्रमितस्य गमकत्वं प्रतिज्ञावाक्ये वह्निमान् धूमादिति सामानाधिकरण्येन पर्वते वह्निरिति वैयधिकरण्येन वा धर्मधर्मिणो निर्देशः कर्तव्यः । तत्र सामानाधिकरण्यवैयाधिकरण्ययोरन्यतरत्र विशिष्याग्रह एवमेव निर्देष्टव्यम् । नैवमिति । साध्यपक्षयोरेकैकस्य, मिलितस्य वा न साध्यत्वम् । दृष्टान्ते लिङ्ग-दर्शनवेलायामेव साध्यस्य प्रत्यक्षत्वात् । पक्षस्यापि तत्र हेतुदर्शनसमये प्रत्यक्षत्वात् । अत एव नोभयस्यापि प्रमितिर्जिज्ञासाविरहात् । अपि च वह्निमात्रसाधने धूमस्य हेतोरपक्षधर्मत्वापत्तिः, धूमस्य बह्नावसत्त्वात् केवल-पक्षस्यापि साध्यतायां हेतोरगमकत्वापत्तिः, दृष्टान्ते महानसादौ हेतुना सह पक्षस्याननुवृत्तेर्व्याप्तिग्रहासम्भवो वा । अत एव नोभयस्यापि उक्तदोषात् । अथ माभूद्धर्मधर्मिणोः समस्तयोर्व्यस्तयोर्वा साध्यता तत्सम्बन्धस्यैव सास्तु इति चेत् ? न । प्रतिज्ञावाक्ये षष्ठ्या, नाम्ना वा तदनिर्देशात् । नहि लोके पर्वतस्याग्निरग्निपर्वतसम्बन्धो वेति प्रयुज्यते । न च दृष्टान्ते हेतुना तादृश-सम्बन्धानुगमदर्शनमपि । किंच सामान्यतः सम्बन्धसत्त्वं न साधयितुमर्हं तस्य सिद्धत्वात् । न च पर्वतादाविवात्राकारद्वयं येनैकेनाकारेण सिद्धत्वेऽपि आकारान्तरेण साध्यत्वं स्यात् इति । न च सम्बन्धं पक्षीकृत्य वह्निमत्त्वं साधयितुं शक्यम्, सम्बन्धमात्रस्य वह्निमत्त्वाभावात् । सम्बन्धविशेषस्तु अनुमानात् प्रागसिद्ध इति, न तस्य पक्षता । न च तत्र हेतोरपि दर्शनमिति विशिष्टो धर्मी अनुमानज्ञानविषयः । सम्बन्धं विना विशिष्टो न भवितुमर्हं-तीति विशिष्टसाधनादेवार्थात् सिध्यतः सम्बन्धस्य प्राप्ताप्राप्तविवेकन्यायेना-नुमेयत्वम्, न तु स्वातन्त्र्येण । अत एव दण्डीत्यादौ सम्बन्धस्य गम्यत्वमुप-पद्यते, प्रकृति-प्रत्ययाभ्यां दण्डतत्सम्बन्धिनोरभिधानादेवार्थात्तत्सम्बन्ध-प्रतीत्युपपत्तेः । तस्माद्विशेष्यभावापन्नयोर्धर्मिणोरेव साध्यत्वम् ।

अत्र किं विशेषणं किं विशेष्यमित्यपेक्षायां केचिदाहुः धर्मिगतो नित्य-

त्वादिर्धर्मः कृतकत्वादिहेतुना साध्यते, स तु धर्मः विशेषणं वा विशेष्यो वा भवतु, न तत्राग्रहः । इदं विशेषणम्, नेदम् इति । तन्न मनोरमम् । पर्वतो वह्निमान् धूमवत्त्वादित्यादौ पक्षस्य पर्वतादेः साध्ये विशेषणविधयाभानोपगमे धर्मिणोऽप्राधान्यापत्तौ हेतुवाक्योक्तस्य धूमादेः तत्रान्वयो न प्रतीयेत, किन्तु प्राधान्येनोपस्थिते साध्ये एव झटिति सम्बन्धः प्रतीयेत । तत्रासम्भवमवधार्य पश्चात् कृच्छ्रेण धर्मिसम्बन्धः कल्पनीयः स्यात्, अथ वा पर्वतस्य धूमवत्त्वादिति पुनः पक्षस्य षष्ठयन्तस्योपादानं कर्तव्यं भवेदिति, धर्मविशिष्टस्य धर्मिणः एव साध्यत्वं युक्तम् । न च धर्मिणो विशेष्यतया भावाङ्गीकारे उदाहरणस्थलेऽपि प्राधान्याद् धर्मिणैव हेतोः सम्बन्धः स्यात्, न साध्येन, तस्य गुणत्वादितिवाच्यम् । यत्र यत्र धूमः, तत्र तत्र वह्निरित्युदाहरणे पुनः साध्यस्योपादानात् प्राधान्येनोपस्थिते साध्ये हेतोरन्वयात्, प्रतिज्ञावाक्ये साध्यस्य विशेषणविधयाभानेऽपि दोषविरहादिन्यन्यत्र विस्तरः ।

न च व्याप्येन व्यापकावगमो भवतीति पूर्वोक्त्या विशिष्टस्य धर्मिणः साधनव्यापकत्वाभावात्तदनुमानं न सम्भवतीति वाच्यम् । व्यापकस्वरूपमात्रधियोऽनुमानत्वाभावाद् विशिष्टधर्मिणोऽनुमानं विशेषणविधया व्यापकावगमो भवत्येवेति तात्पर्येण तथोक्तेः ।

यस्मिन्नर्थे स्वस्य यादृशी अनुमितिर्भवति तत्रार्थे तादृश्येवानुमितिः परस्य येन वाक्येन जायते तद्वाक्यं साधनमित्युच्यते, तस्य वाक्यस्यावयवास्त्रयः प्रतिज्ञाहेतूदाहरणानि । तत्र साध्यनिर्देशः प्रतिज्ञा, साध्यः स्वधर्मविशिष्टो धर्मी इत्युक्तम् । परस्यापि तादृशमनुमानं जायतामिति इच्छया पूर्वसाधनाङ्गं प्रतिज्ञावाक्यं वक्तव्यम् पर्वतो वह्निमानिति । न तु वह्निमान् पर्वत इति । उद्देश्यविधेययोर्वैपरीत्यापत्तेः । न चोद्देश्यस्य विधेयेन नियमात् पर्वतो वह्निमानेवेति बोधः स्यात्, ततश्च हेतोरपि ततो निवृत्तिः प्रतीयेनेतेति वाच्यम् । नियमेन विरुद्धधर्मनिवृत्तेरेव बोधनेनाविरुद्धधर्मनिवृत्तेरबाधनात् । अत एव शङ्खः पाण्डर एवेत्युक्तौ पाण्डरत्वाभावतन्नियतनीलादीनामेव निवृत्तिर्बोध्यते, न तु द्रव्यत्वप्रमेयत्वादीनाम्, तेषां तदविरोधित्वात् । एवं प्रकृतेऽपि बह्नयभावतन्नियतधर्माणां निवृत्तिबोधेऽपि तदविरोधिनो धूमादेर्निवृत्यबोधनान्न दोष इति ।

**असन्निकृष्टे** इति विशेषणेन शीघ्रप्रवृत्तिशीलेन प्रत्यक्षादिप्रमाणेन तेन तद्विपरीतेन वा रूपेण परिच्छिन्नस्य पक्षत्वं व्यवच्छिद्यते, प्रमाणपरिच्छिन्ने प्रमाणान्तप्रवृत्तेर्निष्फलत्वात् । तदुक्तं नहि करिणि प्रत्यक्षे चीत्कारेण तमनुमिमतेऽनुमातारः (ता. टी.) इति । न च महानसादौ असकृद्दृष्टस्यैवाग्नेः पर्वतेऽनुमानात्तस्यापि नैष्फल्यम् । न च देशान्तरकालान्तरव्यक्त्यन्तरभेदेनाप्रमितप्रमापकत्वम् । निखिलसाध्यतद्देशकालानां व्याप्त्यवगमकाले एव प्रमितत्वात् । अन्यथा निखिलसाध्यसाधनेषु व्याप्तिग्रह एव न स्यादिति वाच्यम् । वह्निमत्त्वादिना सामान्यतः पर्वतादेर्ज्ञानेऽपि पर्वतत्वादिविशेषधर्मेण तदानीं ज्ञानाभावात्तेन रूपेण जायमानानुमानस्याप्रमितप्रमाकतया वैफल्याभावादिति ।

**प्रभाकरमतोपन्यास-निरासौ ।**

यत्तु स्मरणाभिमाननिरासार्थमसन्निकृष्टग्रहणमित्युक्तम् । तदसत् । तथा सति विपरीतरूपेण परिच्छिन्नेऽनुमाननिरासानुपपत्तेः । तद्व्यावर्तनाय विशेषणान्तरोपादानविरहादित्यवधेयम् । एकस्मिन् विषये विरुद्धप्रमाणद्वयसम्प्राप्ते पूर्वप्रवृत्तेन प्रमाणेन पश्चात् प्रवर्तमानस्य प्रमाणस्य बाध एव भवति, द्वयोरेकत्र समावेशासम्भवात् । बाधो द्विविधः—पूर्वमिथ्यात्वज्ञापनलक्षणः उत्तरोत्पत्तिनिरोधलक्षणश्च । आद्यो यत्र पूर्वज्ञानमनपेक्ष्योत्तरज्ञानमुत्पद्यते तत्रोत्तरज्ञानेन पूर्वज्ञाने मिथ्यात्वं ज्ञाप्यते अन्यथोत्तरज्ञानस्यात्मलाभ एव न स्यात् । यथा शुक्ताविदं रजतमिति ज्ञानं स्वविपरीतेन नेदं रजतमिति ज्ञानेन बाध्यते । अत्रेदं रजतमितिज्ञानमप्रबाध्य नेदं रजतमिति ज्ञानमात्मलाभाय न प्रभवतीति, परेण पूर्वबाधः । नहि पुरोवर्ति वस्तु रजतारजतोभयात्मकम्, येन प्रमाणज्ञानद्वयावकाशः स्यात् । वस्तुनः परिनिष्ठितत्वेन विरुद्धधर्मद्वयासम्भवात् । नापि कदाचित् कस्यचिद्रजतं कस्यचित् कदाचिदरजतमिति विकल्पः । विकल्पस्य साध्यधर्मतया सिद्धे वस्तुन्यभावान्नापि गत्यन्तरमिति बाध एवेति ।

द्वितीयः—पूर्वप्रवृत्तेन प्रमाणेन पश्चात्प्रवर्तमानस्य विरोधिनः प्रमाणस्यानुत्पत्तिलक्षणः एकेन प्रमाणेनेदमित्थमेवेति प्रमेये निश्चिते, विरोधिनः प्रमाणस्योपपत्तुमवकाश एव न भवति । यथा वह्निरुष्ण इति प्रत्यक्षेण

पूर्वप्रवृत्तिशीलेन निर्णीते हेतुदर्शनव्याप्तिस्मरणादिसध्रीचीनस्यानुष्णत्वग्राहिणोऽनुमानस्योत्पत्ति निरोधलक्षणो बाधः। यावदनुमानमुत्पित्सति तावत् शीघ्रप्रवृत्तेन प्रत्यक्षेणानुमानस्य विषयापहरणात्तदीयमुखव्याप्त्यादिर्निरुद्धयते यावत्कृतकत्वेनाग्नौ उष्णत्वमनुमातुमिष्यते, तावत्पूर्वमेव प्रत्यक्षेण तत्रोष्णत्वनिर्णयात् कृतकत्वस्य व्यभिचारित्वमवगम्यते इत्यनुमानमुखव्याप्तिनिरोधात्तत्रानुमानानुत्पत्तिरेव। एवं प्रमाणान्तरेऽपि शीघ्रप्रवृत्तिशीलेन प्रमाणेन मन्थरप्रवृत्तिकस्य प्रमाणस्यानुत्पत्तिलक्षणो बाधो बोध्यः।

न चैवं पूर्वप्रवृत्तेन प्रत्यक्षेण चन्द्रतारादिपरिमाणे परिच्छिन्ने तद्विरोधिनः पश्चात्प्रवर्तमानस्य शब्दस्यापि अनुत्पत्तिलक्षणो बाधः स्यादिति वाच्यम्, दूरत्वादिदोषेण सांशयिकतया प्रत्यक्षस्य स्वयं अप्रतिष्ठितत्वात्। परिनिष्ठितं हि प्रमाणं स्वविरोधिप्रमाणं वाधते। यत्तु दोषादिवशात् स्वयमप्रतिष्ठितं भाति, तत् परिनिष्ठितेन परेण बाध्यते। तथा च परिनिष्ठितं बाधकमपरिनिष्ठितं च बाध्यं परिनिष्ठितत्वं च दोषः बाधज्ञानाभावादवसेयमिति दिक्।

अनुमित्सितरूपेण, तद्विपरीतेन वा परिच्छिन्नः सन्निकृष्टः, तद्विपरीतोऽसन्निकृष्ट इति, साध्येऽसन्निकृष्टविशेषणात् प्रतिज्ञाभासा निराकृताः। सिद्धसाधनेन बाधेन चानुमितिजननसमर्थं वाक्यं प्रतिज्ञाभासः सिद्धसाधनस्थले नैष्फल्यादेव नानुमानम्। नहि करिणि दृष्टे पादेन तस्यानुमित्सा कस्यापि अनुभवसिद्धा। प्रमाणान्तरविरोधेपि नानुमानम्।

तत्र प्रत्यक्षविरोधे वह्निरनुष्णः कृतकत्वादित्यादौ यथा नानुमितिस्तथा दर्शितम्।

अनुमानविरोधे शब्दोऽश्रावणः गुणत्वाद्रूपवदित्यादौ बलवता श्रावणत्वानुमानेनाश्रावणत्वानुमितेरनुत्पत्तिः। ननु कथमश्रावणत्वानुमानापेक्षया श्रावणत्वानुमितेर्बलवत्त्वम्। श्रोत्रशब्दज्ञानयोरन्यत्र कार्यकारणभावज्ञानं विनात्र प्रतिषेधो दुर्घटः अप्रमितप्रतिषेधायोगादिति कार्यकारणभावोऽन्यत्रावश्यमधिगन्तव्य इति शब्दज्ञानश्रोत्रयोरपि कार्यकारणभावो गृह्यते अविशेषात्। ततश्च पश्चात्प्रवर्तमानायाः श्रावणत्वानुमितेर्दुर्बलत्वेन बाध्यत्वमेवेति।

यत्तु दिङ्नागेनेदं प्रत्यक्षविरोधोदाहरणमित्युक्तम् । तदसत् । श्रावणत्वस्यानुमेयत्वेन प्रत्यक्षत्वाभावात् श्रावणत्वं हि जन्यज्ञानत्वं नहि श्रोत्रं ज्ञानं चोभयं श्रोत्रग्राह्यमिति न श्रावणत्वस्य प्रत्यक्षत्वं, किन्तु अनुमेयत्वमेवेति, न, प्रत्यक्षविरोधोदाहरणमिति ।

शब्दविरोधस्तावत्त्रिधा प्रतिज्ञानपूर्वसंजल्प-सर्वलोकप्रसिद्धिभेदात् । उच्चारणधर्मधर्म्युक्तिभिः प्रतिज्ञाविरोधः पुनस्त्रिधा । उच्चारणविरोधः यावज्जीवमहं मौनीति अत्रैतदुच्चारणादेव प्रतिज्ञातमौनित्वस्य बाधः । धर्मोक्त्या बाधो यथा सर्वं वाक्यं मृषेति । अत्र सर्ववाक्यस्य मृषात्वे प्रतिज्ञावाक्यमपि मृषा स्यात् ततश्चान्येषाममृषात्वं स्यात् । नहि अन्येषाममृषात्वं विना सर्वं मृषेति वाक्यस्य मृषात्वं सम्भवति इति, मृषात्वेनैव मृषात्वबाधः । धर्म्युक्त्या जननी मे वन्ध्या । अत्र जननीरूपधर्म्युक्त्या तस्या बन्ध्यात्वबाधः । सोऽयं वचनविरोधः । पूर्वसंजल्पविरोधो यथा बौद्धशब्दा नित्या इति । अत्र तेषां नित्यत्वे बौद्धशब्दत्वं कथमिति बौद्धशब्दत्वकथनादेव नित्यत्वबाधः । सर्वलोकप्रसिद्धिविरोधः—शशी न चन्द्र इति । अत्र चन्द्रपदेन शशिविषयको बोधः सर्वेषां जायते । यदि शशी चन्द्रपदवाच्यो न स्यात्तर्हि ततस्तद्विषयकबोधो न स्यात् । भवति च स सर्वेषामिति, शशी तत्पदाभिधेय इति तत्पदानभिधेयत्वं बाध्यते । वस्तुतस्तु अत्र न शब्देन प्रतिज्ञातार्थो बाध्यते, किन्तु प्रत्यक्षानुमानार्थापत्तिभिरेव शब्दस्पर्शितामात्रेण शब्दबाधोऽभिहित इति निपुणैरवधेयम् ।

शब्दबाधस्योदाहरणं पुनरिदं—नरशिरः कपालम्, शुचि, प्राण्यङ्गत्वात् शुक्तिशङ्खवत्, नारं स्पृष्ट्वास्थीत्यागमबाधः । अग्निहोत्रं न स्वर्गसाधनं क्रियात्वात् भोजनवत् । अग्नीषोमीयहिंसा प्रत्यवायकरी हिंसात्वात् ब्रह्महत्यादिवदित्यादौ श्रुतिविरोधः स्पष्ट एव । जीवी चैत्रो गृहे नास्तीति प्रत्यक्षेणावगतं जीविनश्चैत्रस्य गृहासत्त्वं बहिःसत्त्वं विनानुपपद्यमानं बहिःसत्त्वाभावप्रतिज्ञानेऽर्थापत्तिविरोधः । इयञ्च दृष्टार्थापत्तिः । अस्याः शेषमुदाहरणचतुष्टयं वार्त्तिकादवसेयम् । श्रुतार्थापत्तिः पीनो देवदत्तो दिवा न भुङ्क्ते अत्र पीनत्वं भोजनं विनानुपपद्यमानं दिवानिषेधाद् रात्रौ कल्पयति, तत्र तदभावप्रतिज्ञायां श्रुतार्थपत्तिविरोधो बोध्य इति ।

शशः शृङ्गवान् पशुत्वादित्यादावनुपलब्ध्या शशे शृङ्गाभावनिर्णयाद् भावविरोधः एवं धर्मधर्म्युभयेषाम्, तत् स्वरूपविशेषयोश्च प्रत्यक्षादिबाधस्योदाहरणं वार्तिके विस्तृतमिति तत एवावधेयम्। विस्तरभयान्न तदुदाहृतमिति।

एवं च प्रतिज्ञाभासादयो दोषा असन्निकृष्टविशेषणेन निराकृताः। एकदेशदर्शनादित्यनेन असिद्धा निरसनीयाः। अत्र दर्शनशब्दो निश्चयवाचीति, यस्मिन् हेतौ वादिप्रतिवादिनोरेकैकस्योभयस्य वा अज्ञान-संशय-विपर्ययाः सन्ति, स अनिश्चायकत्वादसिद्धोऽनेन व्यवच्छिद्यते। वह्निर्न दाहकः शैत्यादत्रोभयासिद्धो हेतुः। नैयायिको यदा मीमांसकं प्रति शब्दोऽनित्यः कृतकत्वादिति प्रयुङ्क्ते, तदा प्रतिवाद्यसिद्धो वेदितव्यः। एवं वादि-प्रतिवाद्युभयापेक्षया सन्दिग्धासिद्धिरपि त्रिधा।

ननु अन्यतरासिद्धस्य हेतोर्दूषणत्वे कथात्रयस्यान्त एव स्यात्। वादिना स्वपक्षे हेतुभिः साधिते प्रतिवादी श्रमसाध्यं तन्निराकरणौपयिकं तर्कसहायमुपालम्भमुत्सृज्य तन्निराचिकीर्षयाऽतिसुलभमसिद्धयुद्भावनमेव कुर्यात्। तथा च चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः करणैर्जायमानत्वादिति मीमांसकेनोक्ते नन्वयमस्माकमसिद्धो हेतुरितीयता वाङ्मात्रेण सौगता विजयिनो भवेयुरित्यपि सुकरः खण्डनप्रकारः। तथा च सर्वे सर्वत्र कथाधिकारिणो भवेयुरिति चेत्? वाङ्मात्रेणासिद्धयुद्भावनस्यादोषत्वात्। किन्तु वाद्युक्तो हेतुरुभाभ्यान्निरूप्यमाणो यदि न सङ्गच्छते तदा तस्यासिद्धत्वम्। यदि वादिना तत्वतः समर्थ्यमानोऽपि हेतुर्दूषणान्तरमपश्यता एतदनंगीकारे मम विजयः अन्यथा पराजय इति दुराशामात्रेण प्रतिवादिना न प्रतिपद्यते, तदा सभापतेर्मध्यस्थस्य सभ्यानाञ्च सम्प्रतिपत्तितो नान्यतरासिद्धत्वमिति, नैकान्ततः प्रतिवादिसम्प्रतिपत्तेरपेक्षा। यदि च प्रतिवाद्येव वादिप्रोक्तं हेतुं परस्मै असिद्धं प्रतिपादितवान्, तदा तस्य दूषणत्वमेवेति दिक्।

अनैकान्तिकविरुद्धौ च हेत्वाभासौ ज्ञातसम्बन्धपदेन व्युदस्तौ। अनैकान्तिके विरुद्धे च व्याप्तेरभावात्। ज्ञातसम्बन्धपदेन च व्याप्तिसद्भावः प्रतिपाद्यते तत्रानैकान्तिकः संशयहेतुः, विरुद्धश्च विपर्ययहेतुः—

अनैकान्तिकस्त्रिविधः साधारणासाधारणविरुद्धाव्यभिचारिभेदात् । सपक्षे विपक्षे चोभयत्र वर्तमानः साधारणः । यथा शब्दो नित्यः प्रमेयत्वादिति, अत्र प्रमेयत्वं च सपक्षेषु घटादिषु विपक्षेषु आकाशादिषु वर्तत इति नित्यत्वानित्यत्वयोरुभयसहचरितप्रमेयत्वस्य शब्दे दर्शनात्तत्साध्यस्य संशायकमेव, न निश्चायकमिति संशायकस्य निश्चायकत्वेनोपादानमयुक्तमिति तस्य दोषत्वम् । सपक्षविपक्षोभयव्यावृत्तः पुनरसाधारणः । यथा क्षितिर्गन्धवती पृथिवीत्वादित्यादौ पृथिव्यतिरिक्ते गन्धाभावान्नात्र सपक्षत्वमिति ततो व्यावृत्तं विपक्षाच्च जलादेर्व्यावृत्तत्वं पक्षमात्रवृत्तित्वेनासाधारणं विपक्षव्यतिरेकाच्चास्य संशायकत्वम् । सपक्षादन्वयो विपक्षव्यतिरेकश्चेति द्वयं साध्यनिर्णयाङ्गम् । तत्रानैकान्तिके सपक्षान्वयो विपक्षव्यतिरेकश्चेति द्वयं साध्यनिर्णयाङ्गम् । तत्रानैकान्तिके सपक्षान्वयो विद्यते, किन्तु विपक्षव्यतिरेको नास्ति इति विपक्षव्यतिरेकप्रयुक्तमेव तस्य संशायकत्वमेवमसाधारणस्य विपक्षव्यतिरेकवत्त्वे सपक्षान्वयाभावात्तत्प्रयुक्तमेव संशायकत्वं एकैकाङ्गवैकल्यस्योभयत्र साम्यात् साधारणमिवासाधारणमपि संशायकमिति भावः । इदमसाधारणस्य संशायकत्वं बौद्धमतेन बोध्यम् । स्वमते असाधारणं यथा न संशायकं तथाग्रे वक्ष्यते ।

वायुरप्रत्यक्षः द्रव्यत्वे सति रूपशून्यत्वादाकाशवत् । वायुः प्रत्यक्षः महत्वे सति द्रव्यत्वाद् घटवदित्यादौ विरुद्धाव्यभिचारित्वं बोध्यम् । अयमेव नैयायिकैः सत्प्रतिपक्ष इति व्यवह्रियत इति । दृष्टान्तदोषाः वार्तिके प्रपञ्चिता इति तज्जिज्ञासुभिस्तदेव द्रष्टव्यमिति ।

**भाष्यम्—तत्तु द्विविधम्–प्रत्यक्षतो दृष्टसम्बन्धं सामान्यतो दृष्टसम्बन्धं च । प्रत्यक्षतो दृष्टसम्बन्धं यथा धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम् । सामान्यतो दृष्टसम्बन्धं यथा देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य, आदित्यगतिस्मरणम् ।**

स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मबोधनस्यैव विधापदार्थत्वेन प्रकृते सामान्यतो दृष्टसम्बन्धोदाहरणे गतिप्राप्तिसम्बन्धेऽपि प्रत्यक्षतो दृष्टसम्बन्धत्वमस्तीति तयोर्विरोधाभावात् कथं द्वैविध्योपपत्तिः ? नहि भवति पदार्थोऽष्टविधः घटद्रव्यगुणकर्मसामान्यविशेषसमवायाभावभेदा-

विना तदवान्तरभेदशास्त्रलक्षणस्यानाकाङ्क्षितत्वात् सामान्यलक्षणाभिधानानन्तरं विशेषलक्षणाभिधानस्यैव सर्वत्र दर्शनाच्च। न च लक्षणमपि साधु, शब्दमात्रगतत्वात्।

शास्त्रलक्षणन्तु-प्रवृत्तिर्वा निवृतिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयत ॥ श. प. श्लो. ४।

इत्येव प्रामाणिकैः स्वीक्रियते इति। न च वायुर्वै क्षेपिष्ठा देवतेत्याद्यर्थवादानां वस्तुस्वरूपमात्रकथनपराणामपि शास्त्रत्वम्। विधिवाक्यैकवाक्यतयैव तेषां शास्त्रत्वाङ्गीकारेण स्वातन्त्र्येण तत्त्वाभावादिति।

स्यादेतत्—यद्यपि लिङादेरेव तत्प्रवर्तकत्वमर्थः, तथापि तावन्मात्रस्य प्रयोगाभावात्तद्धटितस्य पदस्य प्रयोगेऽपि ततः कस्यचित्प्रवृत्तेरजननादर्थवादाद्युपवृंहितवाक्यघटकप्रत्ययस्य प्रवर्तकत्वेन शास्त्रत्वम्, न प्रत्ययमात्रस्य, न वा पदमात्रस्येति बोध्यम्—इति।

अत्रोच्यते स्वतन्त्रवेदवाक्यव्याचिख्यासया प्रवृत्तस्य भाष्यकारस्य प्रकृतोपयोगिलक्षणकथनमेव युक्तम्, न शब्दमात्रस्य लक्षणाभिधानम्—अनुपयोगात्। नहि लौकिकवाक्यदृष्टान्तेन वेदप्रामाण्यम् समर्थनीयम्, येन तदपेक्षया तस्यापि लक्षणकरणापेक्षा स्यात्। न च तर्हि प्रत्यक्षानुमानयोरपि लक्षणकथनं न शोभते इति वाच्यम्। अर्थबोधौपयिकाक्षरश्रवणाय प्रत्यक्षस्योपयोगात्। नहि प्रत्यक्षेणावधारितवर्णराशिः शब्दादर्थं बोद्धुं शक्नोति न च रूपान्तरेण श्रुतः शब्दः साधुधियं जनयति। अनुमानस्यापि विश्वजिदादिफलकल्पनायामुपयोगात्। न चैवं लौकिकवाक्यस्य प्रकृते कश्चिदुपयोग इति, न शब्दमात्रलक्षणं कृतम्। गामानयेत्यादिलौकिकवाक्यस्य विधिप्रत्ययघटितत्वेऽपि न शास्त्रत्वम्। लोके तथा व्यवहाराभावात्। एवं च धर्माधर्मोपदेशपराणि चतुर्दश अष्टादश वा विद्यास्थानानि शास्त्रत्वं लभन्ते। यद्यपि शिष्यतेऽनेनेति शास्त्रं लौकिकवाक्यमपि वक्तुं शक्यते, तथापि तादृशव्यवहाराभावात् पङ्कजादिपदवत्तेषु रूढमेव।

ननु शब्दविशेषस्य शास्त्रस्य प्रामाण्यजननशक्तिः शब्दसामान्याधीनैव, न तु स्वातन्त्र्येण तस्य शक्तिविशेषे मानाभावादिति, शास्त्रस्यापि शब्दसामान्यशक्त्यधीनत्वाच्छब्दसामान्यप्रामाण्याय तल्लक्षणकथनमावश्यकम्।

तादृशमग्निमनुमिमते, तदा तादृशमनुमानं पूर्वदृष्टव्यक्तिसजातीयव्यक्तिविषयत्वात् प्रत्यक्षदृष्टसम्बन्धमुच्यते। तथा च यत्र साध्यसाधनयोर्व्यक्तिविशेषयोः प्रत्यक्षेण सम्बन्धो गृह्यते, तदनुमानं प्रत्यक्षतो दृष्टसम्बन्धम्। यत्र तु सामान्ययोरेव व्याप्तिर्गृह्यते, तदनुमानं प्रत्यक्षतो दृष्टसम्बन्धमुच्यत इति, एतत्तात्पर्येण द्वैविध्यमनुमानस्योक्तं भाष्यकृता। अक्षरार्थोऽपि ईदृश एव प्रतीयते, अन्यथा प्रत्यक्षसमान्ययोर्मिथोर्विरोधाभावेन विकल्पानुपपत्तिः सामान्यसम्बन्धस्यापि प्रत्यक्षग्राह्यत्वात्। प्रत्यक्षस्य प्रतिपक्षः प्रमाणान्तरमेव, न सामान्यम्। न चैवं प्रयुज्येत तस्याप्ययमेवार्थः प्रतीयते प्रत्यक्षविशेषेण प्रत्यक्षसामान्येन वेति सामान्यविशेषयोरेव पक्षप्रतिपक्षभावो न प्रत्यक्षसामान्ययोरिति भावः।

ननु प्रत्यक्षतो दृष्टसम्बन्धस्य व्यक्तिविशेषानुमानार्थमेवाङ्गीकार्यम्, तथा च धूमाकृतिदर्शनादितिभाष्ये धूमसामान्याभिप्रायकाकृतिपदोपादानमसंगतमिति चेत्? न, एतादृशभाष्यस्य सामान्यतो दृष्टसम्बन्धानुमानपरत्वात्। न चैतादृशस्थलेऽपि सामान्यतो दृष्टसम्बन्धानुमानपरत्वात्। न चैतादृशस्थलेऽपि सामान्यतो दृष्टसम्बन्धानुमानाभ्युपगमे एतदुदाहरणायादित्यगतिदेशान्तरप्राप्तिपर्यन्तानुधावनं किमर्थम्। विशेषासंकीर्णसामान्योदाहरणप्रदर्शनार्थत्वात्तादृशाभिधानस्य।

केचित्तु आकृतिपदमवयवसंस्थानपरम्। तथा च गोमयेन्धनप्रभवधूमविशेषदर्शनात्तादृशाग्निविशेषज्ञानमित्याशयो भाष्यकृताम्। अत एव चोदाहरणद्वयं परस्परासंकीर्णं साधु संगच्छते इत्याहुः।

अत्र चानुमानप्रकारः पूर्वमेव प्रदर्शित इति नेह पुनरुच्यते इत्यलमतिप्रसङ्गेन।

**इति कल्पकलिकायामनुमानपरिच्छेदः।**

**भाष्यम्—शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम्।**

**शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानमिति** भाष्यम्। ननु प्रत्यक्षानुमाने निरूपिते, तदवान्तरप्रमाणभेदस्य शब्दस्य निरूपणमुचितम्, तदुपेक्ष्य शास्त्रस्य लक्षणाभिधानमप्रासंगिकमवान्तरधर्मप्रकारकज्ञानगोचरेच्छां प्रति सामान्यधर्मप्रकारकज्ञानस्य कारणतया, शब्दसामान्यलक्षणं

विना तदवान्तरभेदशास्त्रलक्षणस्यानाकाङ्क्षितत्वात् सामान्यलक्षणाभिधानानन्तरं विशेषलक्षणाभिधानस्यैव सर्वत्र दर्शनाच्च । न च लक्षणमपि साधु, शब्दमात्रगतत्वात् ।

शास्त्रलक्षणन्तु-प्रवृत्तिर्वा निवृतिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयत ॥ श. प. श्लो. ४ ।

इत्येव प्रामाणिकैः स्वीक्रियते इति । न च वायुर्वै क्षेपिष्ठा देवतेत्याद्यर्थवादानां वस्तुस्वरूपमात्रकथनपराणामपि शास्त्रत्वम् । विधिवाक्यैकवाक्यतयैव तेषां शास्त्रत्वाङ्गीकारेण स्वातन्त्र्येण तत्त्वाभावादिति ।

स्यादेतत्—यद्यपि लिङादेरेव तत्प्रवर्तकत्वमर्थः, तथापि तावन्मात्रस्य प्रयोगाभावात्तद्धटितस्य पदस्य प्रयोगेऽपि ततः कस्यचित्प्रवृत्तेरजननादर्थवादाद्युपवृंहितवाक्यघटकप्रत्ययस्य प्रवर्तकत्वेन शास्त्रत्वम्, न प्रत्ययमात्रस्य, न वा पदमात्रस्येति बोध्यम्—इति ।

अत्रोच्यते स्वतन्त्रवेदवाक्यव्याचिख्यासया प्रवृत्तस्य भाष्यकारस्य प्रकृतोपयोगिलक्षणकथनमेव युक्तम्, न शब्दमात्रस्य लक्षणाभिधानम्—अनुपयोगात् । नहि लौकिकवाक्यदृष्टान्तेन वेदप्रामाण्यम् समर्थनीयम्, येन तदपेक्षया तस्यापि लक्षणकरणापेक्षा स्यात् । न च तर्हि प्रत्यक्षानुमानयोरपि लक्षणकथनं न शोभते इति वाच्यम् । अर्थबोधौपयिकाक्षरश्रवणाय प्रत्यक्षस्योपयोगात् । नहि प्रत्यक्षेणावधारितवर्णराशिः शब्दादर्थं बोद्धुं शक्नोति न च रूपान्तरेण श्रुतः शब्दः साधुधियं जनयति । अनुमानस्यापि विश्वजिदादिफलकल्पनायामुपयोगात् । न चैवं लौकिकवाक्यस्य प्रकृते कश्चिदुपयोग इति, न शब्दमात्रलक्षणं कृतम् । गामानयेत्यादिलौकिकवाक्यस्य विधिप्रत्ययघटितत्वेऽपि न शास्त्रत्वम् । लोके तथा व्यवहाराभावात् । एवं च धर्माधर्मोपदेशपराणि चतुर्दश अष्टादश वा विद्यास्थानानि शास्त्रत्वं लभन्ते । यद्यपि शिष्यतेऽनेनेति शास्त्रं लौकिकवाक्यमपि वक्तुं शक्यते, तथापि तादृशव्यवहाराभावात् पङ्कजादिपदवत्तेषु रूढमेव ।

ननु शब्दविशेषस्य शास्त्रस्य प्रामाण्यजननशक्तिः शब्दसामान्याधीनैव, न तु स्वातन्त्र्येण तस्य शक्तिविशेषे मानाभावादिति, शास्त्रस्यापि शब्दसामान्यशक्त्यधीनत्वाच्छब्दसामान्यप्रामाण्याय तल्लक्षणकथनमावश्यकम् ।

तथा चोक्तं इन्द्रियादिव्युदासेन शब्दे यावन्न साध्यते।
तावन्न तद्विशेषस्य कुतो वाऽवसरो भवेत् ॥ चो. सू. श्लो. ८

इति चेत् सत्यं लक्षणकथनमावश्यकम्, किन्तु विशेषलक्षणकथनेन सामान्यलक्षणमर्थात् सिद्धयतीति, विशिष्य तल्लक्षणं नाभिहितम्। प्रवर्तकं वाक्यं शास्त्रमित्युक्ते, अर्थाद् गम्यते अप्रवर्तकं वाक्यं शब्द इति। यच्चोक्तं शब्दमात्रगतत्वाल्लक्षणमिदमतिव्यापकम्। तदपि न। सामान्यवाचिनोः शब्दार्थपदयोः तद्विशेषचोदनाधर्माधर्मपरत्वात्। तथा च चोदनाविज्ञानादसन्निकृष्टे धर्माधर्मरूपेऽर्थे ज्ञानमित्यर्थः। तथा च न लौकिकवाक्येऽतिव्याप्तिः, तेषां धर्माधर्मपरत्वाभावात्। न च पूर्वं चोदनाप्रामाण्यं प्रतिज्ञातम्। तत्किमिदानीं शास्त्रस्याव्यभिचारित्वमुच्यते। शास्त्रचोदनोपदेशानामर्थान्तरत्वात्। प्रवर्तनासामान्यवाचकमपि चोदनापदं वेदाध्ययनानन्तरार्थकाथशब्दसमभिव्याहाराद् यथा वैदिकचोदनामात्रपरम्, तथा शब्दपदं शास्त्रपरम्, अर्थपदं धर्माधर्मपर, एवं तदन्तर्गतं च शास्त्रमितिवृत्तिकारोक्तौ शास्त्रपदं चोदनापरमेव, तस्या एवाव्यभिचारित्वेनापरीक्ष्यत्वसम्भवात्, प्रकृतोपयोगित्वाच्च।

पुनरनुमानेऽन्तर्भावयन्ति वैशेषिकादयः शब्दम्। ननु यः शब्दः यस्यार्थस्य बुबोधयिषया प्रयुज्यते, स तमेवार्थं बोधयति। धूमादिलिङ्गन्तु स्वाव्यापकमाज्यादिकमेव बोधयति, न तु यत्किञ्चिदिति तयोर्वैलक्षण्यात् कथमनुमानमिति चेत् न हस्तचेष्टादिलिङ्गानामभिधायकपुरुषेच्छानुकूलयत्किञ्चिदर्थबोधकत्वेन वैलक्षण्याभावात्। न च तथापि येन केनचिदुपपादितं प्रदर्शितं च धूमादिलिङ्गं व्यापकमर्थमनुमापयति। शब्दस्तु आप्तोक्त एवेति वैलक्षण्यम्, हस्तचेष्टादीनामप्याप्तकृतानामेव प्रत्यायकत्वेनाविशेषात्। अनाप्तस्य शब्द इव चेष्टापि नार्थनिश्चयजननी प्रतारणयाऽन्यथा विनियोगसंशयात्। आप्तोक्तत्वहेतोर्भागासिद्धत्वञ्च, वैदिकवाक्ये तदभावात्।

न च गृहीतव्याप्तिकस्यैव लिङ्गस्यानुमापकत्वम्, शब्दस्तु अगृहीतसम्बन्धोऽपि बोधको भवति स्वर्गापूर्वदेवतादौ तथादर्शनादिति वाच्यम्। अर्थापत्त्यादिप्रमाणेन स्वर्गापूर्वादौ गृहीतसम्बन्धस्यैव प्रत्यायकत्वाभ्युपगमात्। न च शब्दस्तुल्याकारतयाऽर्थं बोधयति, लिङ्गन्तु न तथेति वाच्यम्। प्रत्यक्षसूत्रे तन्निराकरणात्। तुल्येनापि प्रतिबिम्बेन बिम्बानुमानदर्शनाच्च। न चाति-

स्वच्छादर्शोदरप्रतिहतं चाक्षुषं तेजः परावृत्य मुखं गृह्णातीति प्रत्यक्षमेवेदं नानुमानमिति वाच्यम् । लौकिकानां तत्र प्रत्यक्षत्वासम्प्रतिपत्तेः, भूमिगत-चरणचिह्ने तादृशगतानुमाने व्यभिचारस्य दुर्वारत्वाच्च ।

अत्रोच्यते—पदस्य, वाक्यस्य वा पदार्थबोधं प्रति लिङ्गमुच्यते, नाद्यः पदस्य केवलार्थविषयकतया, अनुमानस्य च विशिष्टविषयकतया तयोः समानविषयकत्वाभावात् । न च कोस्तीति प्रश्ने देवदत्त इत्युक्ते अस्ति पदोच्चारणं विनापि केवलदेवदत्तपदादेव स्थितिविशिष्टदेवदत्तार्थबोधो दृश्यत इति पदस्यापि केवलस्य विशिष्टविषयकत्वमस्त्येवेति वाच्यम् । प्रश्नवाक्यस्थास्तिवदसम्बन्धेनैव तस्य विशिष्टार्थबोधकत्वेन केवलस्य-तत्वाभावात् । एवं द्वारमित्यादावपि पिधेहीति क्रियावाचकपदाध्याहारादेव तस्य विशिष्टार्थबोधकत्वमास्थेयम् न च संख्यादिविशिष्टार्थबोधक-त्वेन पदस्य विशिष्टबोधकत्वम् । अव्ययादौ तदभावात्, जातेरेव पदार्थत्वेन संख्यादेरन्वयायोगाच्च । न द्वितीयः विशिष्टवाक्यार्थस्यापूर्वत्वेन वाक्योच्चारणात्प्राक् तदप्रत्ययेन धर्मिणोऽप्रसिद्धत्वात् । प्रमाणान्तरेण सिद्धो धर्मो व्यापकधर्मविशिष्टतयानुमानेन साध्यत इति न्यायमार्गः । वाक्योच्चा-रणानन्तरन्तु विशिष्टार्थस्य वाक्यत एवाधिगमात् कृतमनुमानेन । वाक्येन हि यादृशविशिष्टार्थाधिगमः, ततो मात्रयाप्यधिकस्य भानाभावात् । किं च पर्वतो बह्निमान् धूमादित्यादौ स्वतन्त्रप्रत्यक्षेण गृहीतस्य धर्मिणः स्वतन्त्र-स्मृतेन वह्निना विशिष्टतयानुमानमिति विशेष्यग्रहणपूर्वकं विशिष्टग्रहणम् ? यत्र तु न विशेष्यविशेषणयोः स्वातन्त्र्येण ग्रहणं नापि तत्पूर्वकमिति द्वयो-र्भेदान्नानुमानेऽन्तर्भावः ।

ननु तर्हि मास्तु अर्थः पक्षः, स्वतन्त्रगृहीतः शब्द एवास्तु पक्षः । स एव स्वतन्त्रस्मृतार्थेन विशिष्टः साध्यतामिति चेत् ? न । शब्द-सामान्यस्यानैकान्तिकत्वात् । तत्तच्छब्दत्वस्य च प्रतिज्ञार्थैकदेशत्वात् । धर्म धर्मिणारभेदात् ।

अपि च केन सम्बन्धेन शब्दस्यार्थविशिष्टत्वं साध्यते, न तावत्संयोग-समवायाभ्याम्, शब्दार्थयोः तदसम्भवात् । नापि देशकालाभ्यामिदानी-मुच्चरितरामरावणादिपदे तदभावात् । नहि यत्र देशे काले वा यः शब्दः,

तत्र देशे काले च तदर्थं इति नियमः कस्यचिदभिमतः। अथ नार्थविशिष्टत्वं शब्दस्य साध्यते, किन्तु तादृशार्थप्रतीतिविशिष्टत्वमित्यतीताद्यर्थकप्रतीतेरिदानीमपि सत्त्वान्न दोष इति चेत् ? न। विशिष्टार्थप्रतीतेरेवानुमानफलत्वेन तस्यां जातायां फलाभावादेवानुमानाप्रवृत्तेः, न च विशिष्टार्थबोधजननशक्तिः साधनीया तस्या अनतिरिक्तत्वे प्रतिज्ञार्थैकदेशता, अतिरिक्तत्वेऽपि वाच्यशक्तेरिव वाचकशक्तेरपि आकृतावेव स्वीकारेण, तस्याश्च व्यक्त्यभिन्नतया तद् द्वारेण सैव प्रतिज्ञार्थैकदेशतेति न पक्षधर्मत्वम्। नापि सपक्षान्वयः यत्र यत्र धूमस्तत्र तत्राग्निरितिवत् यत्र यत्र शब्दस्तत्र तत्रार्थं इति नियमप्रदर्शनासम्भवात्। नित्यविभुत्वेन शब्दस्य सर्वदेशकालसम्बन्धितया अर्थस्य चाऽतथात्वात्। आकृतिरूपस्यार्थस्य सर्वदेशकालसम्बन्धित्वेऽपि तस्य सर्वशब्दसाधारण्यात् सर्वशब्दात् सर्वार्थबोधापत्तिः। न चार्थज्ञाननियतं शब्दज्ञानम् अर्थज्ञानं विनाप्यव्युत्पन्नस्य पुरुषस्य शब्दज्ञानदर्शनात्। न चागृहीतशक्तिकात्पदादर्थज्ञानाभावेऽपि गृहीतशक्तिकादर्थबोधो जायत एवेति, तत्रार्थज्ञाननियतत्वं तादृशशब्दज्ञानस्यास्त्येवेति वाच्यम्। तादृशार्थबोधाय शक्तिकल्पनाया आवश्यकत्वेन त्वदीयान्वयकल्पनाया अनङ्गत्वापत्तेः। शब्दे यावत् स्वाभाविकार्थप्रत्यायनसामर्थ्यं न ज्ञायते, तावत्ततो नार्थप्रत्ययः, ज्ञाते तस्मिन् तादृशार्थप्रत्ययस्तत एवोत्पद्यत इति, शब्दज्ञानस्यार्थज्ञानान्वयकल्पना मृषैव। अर्थज्ञानशब्दज्ञानान्वयकल्पनातः पूर्वमेवार्थज्ञानस्य जातत्वात् तं प्रति तादृशान्वयज्ञानस्यानङ्गत्वात्। सम्बद्ध एव शब्दोऽर्थं प्रत्यायतीति, नानुमानम्। यदन्वयापेक्षमेवार्थं प्रत्याययति तल्लिङ्गं यथाधूमादि। शब्दस्तु अन्वयानपेक्ष एव स्वाभविकशक्तिवशादर्थं प्रत्याययतीति नास्यानुमानत्वमितिः विवेकः।

किं च महानसादौ येन यादृशोऽग्निसंयोगो दृष्टः तेन पर्वतादौ तादृशाऽग्निसंयोग एवानुमीयते, तथा शब्देऽपि अनुमानात्प्राग् यादृशमर्थप्रत्यायनसामर्थ्यं शब्दे उपलब्धम्, तादृशस्यैवानुमानं स्यात्। एवञ्च व्याप्त्यभावेऽपि तादृशसम्बन्धावगमादेवार्थप्रत्यय इति न तस्यानुमानत्वमिति सिद्धम्। एवं विपक्षव्यतिरेकोऽपि न रामरावणादिपदे व्यभिचारादर्थस्येदानीमसत्त्वेऽपि शब्दस्य सत्त्वात्। नचार्थाज्ञानाद् व्यतिरेकः। अव्युत्पन्नानामर्थाज्ञानेऽपि शब्दविषयकज्ञानोपलब्धेः। न च ज्ञायमानसम्बन्धार्थाज्ञानाद् व्यतिरेकः,

तस्य प्रत्यायकत्वरूपसम्बन्धग्रहोत्तरकालिकत्वेन पूर्वमसत्त्वादेवान्वयवदनङ्गत्वम् । तथा चैवं प्रयोगः । शब्दो नानुमानं पक्षसत्त्वादिरूपत्रयरहितत्वात् प्रत्यक्षवत् । सर्वं चैतत्पदस्य प्रमाणत्वमभ्युपेत्योक्तम् ।

वस्तुतस्तु पदं न प्रमाणम् । तथा हि चतुर्द्धा अर्थे शब्दप्रयोगो भवति परोक्षे अपरोक्षे ज्ञाते अज्ञाते च । तत्र पूर्वविज्ञाते प्रत्यक्षे च यः प्रयुज्यते, तस्य परिमतप्रमापकत्वेन न प्रामाण्यम् । अनुवादकत्वात् अज्ञातबुद्धेरुत्पादाभावादेव न प्रमाणत्वम् । ज्ञाते तु स्मृतिवदनुवादकत्वात् न प्रामाण्यम् । स्मृतेश्च न प्रमात्वं गृहीतग्राहित्वात् । अस्तु वा पदं प्रामाणमनुमानञ्च किमायातमागमस्यैतेन आगमस्तु वाक्यार्थे प्रमाणमेव तस्य सम्बन्धग्रहणापेक्षाविरहादित्यग्रे स्फुटीभविष्यति ।

इति कल्पकलिकायां शब्दपरिच्छेदः ।

**भाष्यम्—अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना । यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्य अदृष्टस्य कल्पना ।**

**अथोपमाननिरूपणम्**

गवाभिज्ञो ग्रामीणः गवयाभिज्ञं वनेचरं पृच्छति कीदृशो गवय इति ? वनेचरः प्रसिद्धगोसादृश्यादप्रसिद्धं गवयं येन वाक्येन ज्ञापयति, तद्वाक्यमुपमानम् । सादृश्यप्रतिपादकं वाक्यमिति यावत् । तच्च वाक्यं—यथा गौस्तथा गवय इति । अनेन वाक्येन प्रसिद्धगोसादृश्याभिधानद्वारा अप्रसिद्धगवयपदवाच्यतावगतिरूपं फलमिति प्राचीननैयायिकाः । तन्न । गोसदृशो गवय इति वाक्यस्य आप्तोपदेशः शब्द इति लक्षणलक्षितागमे एवान्तर्भावेन पृथक् प्रमाणत्वाभावात् । न च संज्ञासंज्ञिसम्बन्धपरिच्छेदफलकत्वेन भेदः । तथा सति लौकिकवैदिकवाक्यानामनेकविधार्थबोधफलकत्वेन प्रमाणानन्त्यापत्तेरित्यतो नव्यनैयायिका उपमानमन्यथा वर्णयन्ति । तथा हि यथा गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य वनं गतवतः गवयचक्षुःसन्निकर्षादुत्पन्नं गोसदृशोयममिति प्रत्यक्षम्, तदेव संज्ञासंज्ञिसम्बन्धपच्छिेदफलत्वादुपमानमिति ।

एतदपि न मनोरमम् । विकल्पप्रसक्तेः किमेतज्ज्ञानं गवयालम्बनम्, सादृश्यालम्बनम् वा । नाद्यः, गवयस्य प्रत्यक्षत्वात् । नान्त्यः, गोसदृशो गवय

इति वनेचरवाक्येन गवयगतसादृश्यस्य पूर्वमेवाधिगतत्वेन तज्ज्ञानस्य स्मरणत्वापातात्। न च तथापि सादृश्यविशिष्टो गवयो न प्रत्यक्षेण, न वा स्मरणेन गृहीत इति, विशिष्टाग्राहकमुपमानमतिरिच्यते इति। मैवम् गोसादृश्यविशिष्टगवयज्ञानस्यातिदेशवाक्यावगतार्थापेक्षयाऽधिकार्थगोचरत्वे प्रत्यक्षत्वाभ्युपगमादेव तदुपपत्तेः अनधिकार्थभानाभ्युपगमे तु गृहीतग्राहित्वेन तस्यैवाप्रमाणत्वात्।

न च गवयं पश्यतोऽतिदेशवाक्यस्मरणोत्तरं जायमानगोसादृश्यविशिष्टज्ञानं स्मरणाव्यवहितेन्द्रियव्यापारजन्यत्वान्न प्रत्यक्षमिति वाच्यम्। प्रत्यक्षसूत्रे इन्द्रियसम्बद्धमात्रस्य प्रत्यक्षत्वाभिधानात्। स्मरणात् पूर्वमेव प्रत्यक्षमिति निवेशाभावात् स्मरणात्पूर्वमुत्तरं च प्रत्यक्षं निर्वाधम्।

न च तथापि गोसादृश्यविशिष्टगवयप्रत्यक्षस्य गवांशे स्मर्यमाणविषयत्वत् कथं प्रत्यक्षमिति वाच्यम्। एकस्यापि ज्ञानस्य विषयभेदेन प्रामाण्याप्रामाण्योभयस्वीकारात्। तथा च गवांशे स्मर्यमाणविषयत्वादप्रामाण्यं विशिष्टगवयांशे तु प्रामाण्यमेवागृहीतग्राहित्वात्। श्रुतातिदेशवाक्येति विशेषणमपि व्यर्थम्। अश्रुतादिदेशवाक्यस्यापि गोदर्शिनो वनं गतस्य गवयं पश्यतः गोसादृश्यविशिष्टगवयज्ञानदर्शनात्। न चाश्रुतातिदेशवाक्यस्य सादृश्यज्ञानेपि संज्ञासंज्ञिसम्बन्धपरिच्छेदो न भवतीति वाच्यम्। तादृशसम्बन्धपरिच्छेदाभावेऽपि विशिष्टज्ञानजननादेवोपमानफलोपपत्तेः।

न च तन्मते संज्ञासंज्ञिसम्बन्धपरिच्छेद एव फलम्, न सादृश्यविशिष्टज्ञानमिति तदर्थं तद्विशेषणमावश्यकमिति वाच्यम्। गोसदृशो गवय इति वनेचरवाक्यस्य तदानीं गवयस्याप्रत्यक्षत्वेन कश्चिद् गोसदृशो यस्य गवयसंज्ञेत्येतावन्मात्रबोधकत्वेनापर्यवसिततया गवयदर्शनानन्तरमयं गोसदृशो गवयपदवाच्य इत्येतत्पर्यन्तं व्यापारोपगमादेव तदुपपत्तेरिति।

न च वाक्येनावगतोऽप्यर्थः पुनरुपमानेन प्रत्यभिज्ञेयः। वनेचरवाक्यबोधितारिक्तभानाभावेन प्रत्यभिज्ञासम्भवात्। वाच्यवाचकशक्तेश्चातीन्द्रियतया तद्वाक्यबोधितदेशेऽपि स्मरणकल्पनाया एवौचित्यात्। न चोपमानेनातीन्द्रियार्थंप्रत्यभिज्ञानमपि कल्प्यते इति वाच्यम्। तथापि देशकालादेरधिकस्य भानाभावेन तत्कल्पनानवकाशात्। न चाश्रुतारण्यकवाक्यस्य

गोसादृश्यज्ञानं शब्दजनिततादृशप्रत्ययानुपरञ्जितं श्रुतातिदेशवाक्यस्य तु तत्तदुपरञ्जितमिति, वैलक्षण्यात्तद्विशेषणभावव्यकम् । विशेषणविशिष्टस्य प्रत्यक्षत्वोपपादनात् तादृशोपरञ्जनानुपरञ्जनकृद्विशेषस्याकिञ्चित्करत्वात् । तस्मादिन्द्रियप्रत्यक्षाद्यनवगतप्रमेयाभावान्नोपमानं प्रमाणान्तरमित्याशङ्क्योपमानं प्रमाणान्तरमित्येतत्प्रदर्शनाय तत्स्वरूपमाह—**उपमानमपीति भाष्यम्** । पूर्वानुभूतगोः वनं गतवतो गोसदृशं गवयं पश्यतो सन्निकृष्टे गवि यत्स्मरणमनेन गवयेन सदृशो मदीयो गौरिति तत्सदृशस्मरणमुपमानमिति ।

न च गोप्रतियोगिकसादृश्यविशिष्टगवयप्रत्यक्षजनितं गवयप्रतियोगिकगवानुयोगिकसादृश्यस्मरणं स्मरणत्वादेव न प्रमाणमिति कथमुपमानं प्रमाणान्तरम्, न च पूर्वानुभूतार्थविषयकप्रत्यभिज्ञावदस्यापि प्रामाण्यम्, तत्र पूर्वाननुभूतैतद्देशकालादेरधिकस्य भानेन प्रामाण्योपपादनेऽपि अत्रानुभूतार्थाधिकभानाभावेन तदुपपादनासम्भवात्, सादृश्यं गवयश्चेति द्वयमुपमानस्य विषयः । तत्र सादृश्यस्य स्मरणं गवयस्य प्रत्यक्षं जायत इति । किमपरं प्रमेयमवशिष्यते यत्रोपमानं प्रमाणं भवेदिति चेत् ।

मैवम्, गवयप्रतियोगिकगोनिष्ठसादृश्यस्य केनाप्यग्रहणात् गोरिन्द्रियसन्निकर्षाभावान्न तन्निष्ठं सादृश्यं प्रत्यक्षेण ग्राह्यं सादृश्यप्रतियोगिनोगवयस्याननुभूतत्वान्न स्मरणो नापि सादृश्यविशिष्टगवयदर्शनानन्तरं तु उपमानेन गवि गवयसादृश्यं गृह्यते इत्येतत्प्रमाणान्तरम् । यथा पर्वते प्रत्यक्षे अग्नौ च स्मर्यमाणेऽपि अग्निविशिष्टं पर्वतं गमयदनुमानं प्रमाणम्, तथैकस्य ज्ञानान्तरविषयत्वेऽपि विशिष्टं ग्राहयदुपमानमपि प्रमाणमेव ।

तदयं भाष्यार्थः—यत्सादृश्यं दृश्यमानमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, तदुपमानं प्रमेयबुद्धिजनकमेव सादृश्यमिन्द्रियप्रत्यक्षमुपमानम् । यथा गवयदर्शनमिति सादृश्यविशिष्टगवयदर्शनं गोस्मरणस्य जनकमिति ।

अत्र बौद्धाः । ननु सादृश्यं नाम न किञ्चिद्वस्तु, तद्धि धर्मिणोऽव्यतिरिक्तम्, व्यतिरिक्तं वा । नाद्यः धर्मिमात्रबुद्ध्यापत्तेः । नान्त्यः गवाश्ववद् भेदेन प्रतीत्यापत्तेः । किं च सादृश्यस्य वस्तुत्वे प्रतियोगिज्ञानं विनापि जातिवद् गृह्येत, प्रतियोगिसापेक्षमेव सादृश्यमित्यपि न । सापेक्षत्वम् हि उत्पत्तौ, ज्ञप्तौ वा । न चोभयत्र सम्भवति देवदत्त इव यज्ञदत्त आसीदित्यादौ मृतेऽपि

यज्ञदत्ते देवदत्तसादृश्यस्योत्पत्तेः ज्ञप्तेश्च दर्शनात् । तस्मात्स्ववासनाविलसितमेव सादृश्यं न किञ्चित् प्रमेयमिति, तज्ज्ञानमाभास एवेति ।

अत्रोच्यते । सादृश्यमस्ति प्रमेयम्-सर्वेषामिदमनेन सदृशमित्यबाधितासन्दिग्धबुद्धिदर्शनाज्जातिवत् । यच्चोक्तं सादृश्यस्य वस्तुत्वे जातिवत्प्रतियोग्यपेक्षा न स्यादिति । तदयुक्तम् । सम्बन्धिद्वयनिरूपितत्वात्सादृश्यं सम्बन्धवत् यथासम्बन्धग्रहे सम्बन्धिनोरपेक्षा, तथा सादृश्यग्रहेंऽपि । भूयोऽवयवसामान्ययोगो हि जात्यन्तरस्य जात्यन्तरे सादृश्यम् । न च प्रतियोगिनि अस्मर्यमाणे तत्सम्बन्धितया सादृश्यं शक्यग्रहमिति प्रतियोगिग्रहः सादृश्यग्रहेऽपेक्ष्यते ।

यदप्ययुक्तं मृतेऽपि सादृश्यबुद्ध्युत्पत्तिदर्शनात् । नोत्पत्तौ ज्ञप्तौ वा प्रतियोग्यपेक्षेति । तत्सत्यम् । न वयमुत्पत्तौ ज्ञप्तौ वा सत्तया प्रतियोगिनोऽपेक्षेति ब्रूमः, किन्तु स्वज्ञाने स्वसम्बन्धितया स्मर्यमाणस्य प्रतियोगिनोऽपेक्षेत्येव ब्रूमः । एवं च प्रतियोगिनोऽसत्त्वेपि तदीयस्मरणान्नतदनुपपत्तिः ।

यदपि तत्र धर्मिणो भेदाभेदविकल्पः, तदपि न । सर्वत्र धर्मधर्मिणोर्भेदाभेदोभयस्वीकारात् । अत्रावयवग्रहणं सम्बन्धान्तरस्य, जातिग्रहणं धर्मान्तरस्योपलक्षणार्थम् ।

तदयं निष्कर्षः वस्त्वन्तरस्य स्वावयवेषु गुणेषु कर्मसु वा यैः सामान्यैः येन प्रकारेण योगः, तेनैव प्रकारेण वस्त्वन्तरस्य, योगः सादृश्यमिति न तत्त्वान्तरम्, नाप्यवस्तु । अत एवानयोरल्पसादृश्यम् अनयोश्चातिसादृश्यमित्यवयवसामान्ययोगाल्पभूयस्त्वनिबन्धनः सादृश्याल्पभूयस्त्वव्यवहारः सूपपद्यते, तत्त्वान्तरत्वे तु जात्यादिवत्तन्न स्यात् । अवयविनोः सादृश्यं गौरिव गवयः अवयवयोः पद्मदलाक्षीत्याद्युदाहरणानि बोध्यानि ।

सादृश्यं पुनरनित्यम्, जातिवन्नित्यत्वानङ्गीकारात् । सम्बन्धिनोरुत्पत्तिविनाशाभ्यां तदुत्पत्तिविनाशस्वीकारात् । अथ वा नित्यमेव जातिवदेकाश्रयविनाशेऽपि अपराश्रयसद्भावात् ।

ननु व्यासज्यवर्तमानं सादृश्यं द्वित्वादिवत् कथमेकाश्रयग्रहणेन गृह्यते ? मैवं व्यासज्यवृत्तित्वानङ्गीकारात् जातिवत् प्रत्येकाश्रयपरिसमाप्तत्वमेवेति । गवयग्रहणेऽपि गोसादृश्यं गृह्यते गवि स्मर्यमाणे पूर्वं गवयप्रत्यक्षं ततो

गोस्मरणं ततः सादृश्यविशिष्टगवयप्रत्यक्षम् । न च स्मरणव्यवहितेन्द्रियव्यापारजन्यत्वात् कथं प्रत्यक्षत्वम् ? तदानीमपि इन्द्रियव्यापारोपरमाभावाद् गवयद्वारेन्द्रियसन्निकर्षत्वेन तत्त्वे बाधकाभावात् ।

शाक्यवैशेषिकादयस्तूपमानमनुमानेऽन्तर्भावयन्ति । तदयुक्तम् । प्रमेयो गौस्तद्गतं सादृश्यं न लिङ्गं प्रागुपमानात्तदग्रहणात् गोप्रतियोगिकगवयगतसादृश्यस्य पक्षे गवि असत्त्वात् । अत एव सादृश्यविशिष्टगवयस्यापि न लिङ्गत्वम्, पक्षवृत्तित्वाभावात् ।

न च गौर्गवयसदृशः गोप्रतियोगिकगवयनिष्ठसादृश्यप्रतियोगित्वात् यत् यन्निष्ठसादृश्यप्रतियोगि तत्तत्सदृशं यथा युगपद् दृश्यमानयोः सदृशयोः परस्परमेकैकं सदृशमिति । मैवं । युगपत् सदृशद्वयवस्तुनोदर्शनाभावेऽपि केवलं गामवलोक्य वनं गतस्य गवयं पश्यतः गवयसदृशो गौरिति प्रत्ययो भवति न चेद्मनुमानं अतः प्रमाणान्तरमुपमानमिति सिद्धम् ।

**उपमानप्रमाणस्य प्रयोजनानि ।**

प्रयोजनं च सौर्यं चरुं निर्वपेदाग्नेयवदित्यादौ बोध्यमत्राग्नेयभावना सौर्यभावनया एवं व्रीह्यपचारे तत्सादृश्यान्नीवाराणां तत्प्रतिनिधित्वेन लाभ इति दिक् ।

**इति कल्पकलिकायां उपमाननिरूपणं समाप्तम् ।**

## अथ अर्थापत्तिनिरूपणम्

**अर्थापत्तिरपीति** भाष्यम् । प्रमाणेनावगतस्याप्यर्थस्य येनार्थेन विनोपपत्तिर्न भवति, तादृशार्थान्तरकल्पनाऽर्थापत्तिः, अङ्गुल्यग्रे करियूथशतमित्याद्युपपत्तयेऽर्थान्तरकल्पना माभूदिति प्रमाणेनेत्युक्तम् । उदाहरणं यथा पीनो देवदत्तो दिवा न भुङ्क्ते । अत्र भोजनं विना श्रुतमपि पीनत्वं नोपपद्यत इति पीनत्वोपपत्तये दिवाभोजनप्रतिषेधात् रात्रिभोजनं कल्प्यते । इयं द्विधा श्रुतार्थापत्तिः दृष्टार्थापत्तिश्च । आद्या प्रमाणविषया, अन्त्या तु प्रमेयविषयेति, श्रुतस्य दृष्टार्थापत्तावन्तर्भावेऽपि नानयोरभेदः ।

श्रुतातिरिक्तप्रमाणपूर्विका अर्थापत्तिः षोढा । तत्र प्रत्यक्षप्रमाणपूर्विका यथा प्रत्यक्षदृष्टदाहान्यथानुपपत्त्या वह्नौ दाहानुकूलशक्तिकल्पना । देशान्तरप्राप्तिलिङ्गानुमितादित्यगत्या सूर्ये गतिशक्तिकल्पना आनुमानपूर्विका ।

शब्दपूर्विका तु श्रुतार्थापत्तिरेव, सा चोदाहृता । उपमानान्यथानुपपत्त्योपमानं प्रति ग्राह्यशक्तिकल्पनोपमानपूर्विका । अभिधायकत्वान्यथानुपपत्या पूर्वं शब्दे वाचकत्वकल्पना, ततः प्रत्युच्चारणं शब्दानां भेदे सर्वत्र शक्तिग्रहासम्भवात् वाचकत्त्वानुपपत्तिः शब्दसाम्येन वाचकत्वाभ्युपगमे लिङ्गाभासजज्ञानवदप्रमाणत्वापत्तिरित्यनुपपत्तिमालोच्य पुनः शब्दानित्यत्वकल्पना या सार्थापत्तिपूर्विकार्थापत्तिः । अभावपूर्विकार्थापत्तिरिहैव भाष्यकारेणोदाहृता जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनेतिभाष्येऽभावपूर्विकार्थापत्तेरुदाहरणम् । अन्यासामप्यर्थापत्तीनां सूचनाय, न त्वियमेवेति सूचनाय ।

केचित्तु नार्थापत्तिः प्रमाणान्तरं किन्त्वनुमानमेव । यथा धूमो वह्निं विनानुपपद्यमानो वह्निं गमयति, एवं जीविनो गृहासत्त्वं बहिःसत्त्वं विनानुपपद्यमानं बहिस्सत्त्वं गमयतीति ।

तन्न गृहासत्त्वस्य हेतोश्चैत्रे बहिर्देशे वा विरहात् । असत्त्वविशिष्टस्य गृहस्य च कस्यचिद्धर्मत्वाभावात्, तदानीं गृहमेव प्रतीयते, न चैत्रः, न वा बहिर्देश इति । न चाप्रतीयमानस्य धर्मो गृहासत्त्वम् । न च चैत्रादर्शनहेतुः गृहादर्शननिमित्तकाभावनिश्चयोत्तरजायमानबहिःसत्त्वबुद्धेस्तद्धेतुकत्वाभावेन तस्य लिङ्गत्वायोगात् । तावतापि पक्षधर्मत्वाभावाच्च देवदत्तस्य बहिर्देशस्य च प्रत्यक्षत्वाभावेन नानुमेयत्वमपि । न च गृहनिष्ठाभावप्रतियोगित्वादहमिव यथाहं यदा न गृहे तदा बहिरेवेति वाच्यम्, भूते व्यभिचारात् ।

अस्तु तर्हि विद्यमानत्वे सतीति हेतौ विशेषणम्, विद्यमानत्वस्यानिर्णयाद्धेतोः सन्दिग्धासिद्धेः कार्यकारणबुद्ध्योर्यौगपद्यासंभवान्न हेतुनिर्णयकाले साध्यनिर्णयः, किन्तु पूर्वं हेतुनिश्चयस्ततः साध्यानुमितिः । एवं च प्रकृते विद्यमानत्वम्, गृहासत्त्वं च बहिःसत्त्वज्ञानमन्तरा संबद्धं न बोद्धुमर्हम्, मिथो विरोधात् । विद्यमानो गृहे वा बहिर्वास्तीत्यविवादम् बहिःसत्त्वमन्तर्भाव्य विद्यमानत्वगृहासत्त्वसमुच्चयस्य प्रतिपत्तौ तु विद्यमानश्चैत्रो गृहेऽसन् गृहे वा बहिर्वेति बुद्धिः स्यात् । सा च न सम्भवति, एकस्मिन् चैत्रे एकदैव गृहसत्त्व-तदभावयोः समुच्चयासम्भवात् । ततश्च बहिर्देशमन्तर्भाव्य सत्त्वासत्त्वसमुच्चयो वाच्यः । तथा च विद्यमानत्वसंसृष्टगृहासत्त्वरूपलिङ्गावगमसमये एव बहिःसत्त्वस्य ज्ञातत्वात् किमपरं ज्ञातव्यमवशिष्यते यदर्थमनुमानमत्र स्यात् ।

ननु अर्थापत्तेः प्रमाणान्तरत्वेप्ययं दोषः विद्यमानत्वगृहासत्त्वयोरेकैकस्य व्यभिचारेण बहिर्देशज्ञापकत्वायोगात् संसृष्टोभयमेव गमकं भवतापि वाच्यं ततश्च पूर्वोक्तरीत्या तदुभयसंसर्गज्ञानेनैव बहिःसत्त्वस्यावगमात् प्रमेयाभावात्कथमर्थापत्तिरपीति चेत् ? उच्यते । इयमेव संसृष्टधीरर्थापत्तिशब्देन व्यवह्रियते ।

**अर्थापत्तेः प्रमाणान्तरत्वम्** प्रमाणप्रमितपदार्थद्वयस्यैकत्र मिथो विरोधः कारणमस्याः । अविरोधाय देशभेदेनोभयव्यवस्थापनं फलम् । यथा प्रकृते विद्यमाने चैत्रे गृहावच्छेदेनासत्त्वं बहिर्देशावच्छेदेन सत्त्वमित्येकस्मिन्नेव भावाभावयोः समावेशात् प्रमाणद्वयस्य परस्परमविरोधः अन्यथा ज्योतिःशास्त्रात् शतवर्षजीवित्वमवगतम्, प्रत्यक्षेण च तदभावो दृश्यते, न चान्यतरस्मिन् बलाबलभावागमः । न चोभयमेकत्र युगपद् युज्यते । मिथो विरोधात् । तथा च नद्यास्तीरे पञ्च फलानि सन्ति, न सन्तीति वाक्यवद् विरोधोऽसमाधेयः स्यादित्यर्थापत्तिरनुमानात्प्रमाणान्तरमेवेति सिद्धम् ।

**प्राभाकरमतस्योपन्यासनिरासौ ।**

केचित्तु अनुमानादर्थापत्तेः प्रमाणान्तरत्वे कारणमिदं यस्य प्रायः गृहे एव दर्शनं जायते, तस्य तत्रादर्शने तदीयजीवने सन्देहो भवति-जीवति न वेति । संदिग्धं जीवनं कथं बहिःसत्त्वं गमयेत्केवलमसत्त्वं मृतेऽपि सम्भवाद् व्यभिचारि; विशिष्टश्च हेतुः सन्दिग्धः, सन्दिग्धेन हेतुना नानुमानम्, किन्तु निश्चितेनैव । अर्थापत्तिः पुनः सन्दिग्धेनापि लिङ्गेन भवतीत्यर्थापत्त्या बहिः सत्त्वकल्पनेन तदीयजीवनसन्देहः समुच्छिद्यते इत्याहुः ।

तन्न । गृहादर्शनजन्यतदीयजीवनसंशयस्य बहिर्भावकल्पनयोच्छेदासम्भवात् । संशयोच्छेदो हि द्विधा भवति—संशयनिमित्तोच्छेदाद्वा, तदीयैकतरकोटिनिर्णयाद्वा, अत्र च गृहासत्त्वदर्शनं तदीयजीवनसंशयनिदानमुक्तम् । तच्च न बहिःसत्त्वकल्पनया च्छेत्तुमलम् । जीवनसन्देहे बहिर्भावकल्पनानुपपत्तेः, न हि चैत्रो जीवति न वेति संशयानः स बहिरस्तीति कश्चित् कल्पयति, तत् कस्य हेतोस्तावतापि तदीयजीवनसंशयनिदानगृहासत्त्वदर्शनस्योच्छेदासम्भवात्, प्रत्युत बहिःसत्त्वकल्पने गृहासत्त्वदर्शनमतीव सुदृढं भवति । नाप्येकतरकोटिनिर्णयः । जीवति न वेति संशयस्य हि कोटिद्वयं

जीवनंतदभावश्च । न चैतयोरन्यतरद् बहिःसत्त्वं, किन्तु ततो भिन्नमेवेति कथं गृहासत्त्वनिमित्तार्थापत्या चैत्रो जोवतीति निश्चेतुं शक्यते । क एवं ब्रूयाद् यतः चैत्रो गृहे नास्ति ततो जीवतीति, मृतोऽपि गृहे नास्ति, न चासौ जीवतीति प्रत्युत गृहाभावदर्शनेन सन्दिग्धं तदीयं जीवनमिति, न तत एव निश्चेतुं शक्यम् । संशायकस्य निश्चायकत्वायोगाद् । अतः सन्दिग्धं जीवनं कारणान्तरेण निर्णीय वहिर्भावेन सम्बन्धयितव्यम् । यस्मादसौ जीवति, न च गृहे वर्तते, तस्माद् बहिरस्तीति बहिःसत्त्वनियतं जीवनसहितं गृहासत्त्वमवगम्यैव बहिर्भावः कल्पनीय इति निश्चितलिङ्गमूलकत्वादर्थापत्तेर्नेदृशरीत्यानुमानाद्भेदः साधयितुं शक्यते तस्मात् पूर्वोक्तरीत्यैव तयोर्भेदोऽवगन्तव्य इति ।

नन्वस्तु तर्हि अर्थापत्तिः प्रमाणम् अनुमानम्, पुनरस्यामेवान्तर्भावनीयम्, पृथक् प्रमाणकल्पने प्रयोजनाभावात् । यो यो धूमवान्, स स वह्निमानिति व्याप्तिग्राहकप्रमाणेनाविशेषात् सर्वेषां धूमवतामग्निमत्त्वमधिगतम्, पर्वतस्य धूमवत्त्वं च प्रत्यक्षेणावगम्यते, तद्यदि पर्वतो वह्निमान् न स्यात्, तदा सर्वधूमवदग्निग्राहकं प्रमाणं वा मिथ्या स्यात्, पर्वतो धूमवानिति प्रत्यक्षं वा मिथ्या स्यात्, न चोभयं समीचीनं स्यात् मिथोविरोधादित्युभयप्रमाणस्यामिथ्यात्वसिद्धयेऽर्थापत्त्या पर्वतस्याग्निमत्त्वं कल्प्यते इति, न तदर्थमनुमानापेक्षेति चेत् ?

मैवम् अनुमानं विना सर्वधूमवतामग्निमत्त्वग्रहासम्भवात् । सामान्यलक्षणप्रत्यासत्तिसद्भावे प्रमाणाभावात् । दृष्टान्तधर्मिषु वह्निधूमयोर्दर्शनात् सामान्यरूपेण व्याप्तिग्रहः सूपपद्यते इति नैतदर्थंनिखिलवह्निधूमाधिकरणावगमापेक्षा तथा च व्याप्तिग्राहकप्रमाणेन दृष्टान्तस्यैव साध्यसाधनवत्त्वेन ग्रहात्पर्वतस्याग्निमत्त्वं विना न तस्य मिथ्यात्वम्, न वा पर्वतो धूमवानिति प्रत्यक्षस्येति विरोधाभावेन नार्थापत्तेरवकाश इति भिन्नविषयत्वादनुमानमर्थापत्तिश्चेति पृथगेव प्रमाणम्, एवञ्च—यस्यानुमानेन निखिलधूमवतामग्निमत्त्वज्ञानमस्ति, तस्य पर्वतेऽग्निज्ञानं द्विधा भवति, महानसादौ गृहीतव्याप्तिस्मरणेनानुमानात्, प्रमाणद्वयस्यामिथ्यात्वान्यथानुपपत्त्यार्थापत्त्या चेति प्रमाणान्तरमेवार्थापत्तिर्नानुमानमिति दिक् ।

**इति कल्पकलिकायामर्थापत्तिनिरूपणम् ।**

**भाष्यम्—अभावोऽपि प्रमाणाभावो नास्ति इत्यस्य अर्थस्यासन्निकृष्टस्य । तस्मात् प्रसिद्धत्वात् न परीक्षितव्यं निमित्तम् ।**

**अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्यासन्निकृष्टस्येति ।** ननु न प्रमाणाभावः प्रमाणं सम्भवति, विपरीतत्वात् । नहि स्वाभावः स्वं भवति, भावाभावयोरविरोधप्रसङ्गात् । सत्यमत्र प्रमाणाभावो न प्रमाणसामान्याभावाभिप्रायकः, किन्तु पूर्वोक्तसदुपलम्भकप्रमाणपञ्चकाभावाभिप्रायकः । तथा च सत्यपि स्व-स्व-सामग्रीसन्निधाने यत्र पूर्वोक्तं प्रमाणपञ्चकं न प्रवर्तते, तत्राभावस्य प्रामाण्यम् । यथा घटे पूर्वोक्तप्रमाणपञ्चकाप्रसक्तौ अभावस्यैव प्रामाण्यं न चाप्रमीयमाणे घटे कथमस्य प्रामाण्यं प्रमितिकारणस्यैव तत्त्वात् । प्रमेयाभावे प्रमितेरयोगादिति वाच्यम् । पूर्वोक्तसदुपलम्भकप्रमाणतोऽप्रमीयमाणस्य घटादेरभावेनासद्रूपतया प्रमीयमाणत्वात्प्रमेयसत्त्वेन प्रामाण्योपपत्तेः सद्रूपासद्रूपाभ्यां घटादेः प्रमेयत्वात् ।

असद्रूपोऽभावः । स चतुर्विधः—प्रागभाव-प्रध्वंसाभावाऽन्योन्याभावात्यन्ताभावभेदात् । प्रागभावो यथा—क्षीरे दध्यभावः । प्रध्वंसाभावः—दध्निक्षीराभावः । अन्योन्याभावो—गवि अश्वाभावः । शृङ्गस्य यदसद्रूपं शशमूर्धावयवसमवेतम्, सोऽत्यन्ताभावः । एतत्प्रामाण्यानङ्गीकारे क्षीरादौ दध्यादेरिव दध्यादौ क्षीरादिसद्भावः स्यादिति वस्तुसांकर्यं स्यादिति । तथा च यदभूत्वा भवति, तत्कार्यं दध्यादि, यच्च तदुत्पत्तेः प्रागेवास्ति, तत्कारणमित्यभावनिबन्धनः कार्यकारणभावोऽभावस्यावस्तुत्वे न स्यात् । एवं घटः पटो न शशे शृङ्गं नास्तीत्यादिव्यवहारोऽपि प्रामाणिको न स्यात् । अपि चाभावो भावान्तरमेव क्षीरात्मैव दध्यभावो नापरः न चासौ क्षीरवृत्तिर्न क्षीरम् । क्षीरवृत्तित्वेऽपि क्षीरात्मत्वमेव धर्मधर्मिणोरभेदात् किंच गवादिवदभावस्याप्यनुवृत्तिव्यावृत्तिदर्शनात्तस्य वस्तुत्वमेवाभावोऽपि प्रागभावादिस्वरूपेण व्यावर्तते, अभावस्वरूपेण चानुवर्त्तते इत्यभावस्य प्रमेयस्य सत्त्वान्न प्रमेयाभावादस्याप्रमाणत्वम् । न च प्रमाणान्तरेण प्रमितत्वान्नास्य प्रमेयम्, तर्हि प्रत्यक्षप्रमेयस्यापि प्रमाणान्तरेण प्रमितत्वात्तेषामप्यसत्त्वापत्तिः । न च तानि प्रत्यक्षादिभिरेव प्रमितानि, तर्हि अभावोऽपि स्वप्रमाणेन प्रमित एवेति तुल्यम् । न चाभावस्यानुवृत्ति-

व्यावृत्तिप्रतीतिर्मिथ्यैवौपचारिकत्वाभ्युपगमे प्रत्यक्षादिष्वप्येवं वक्तुं शक्यत्वात्। तस्माद्विषयेन्द्रियसन्निकर्षादात्मनो यो घटादिलक्षणो ज्ञानपरिणामः, तदनुत्पत्तिरूपोऽभाव इन्द्रियादिवत्प्रमाणम्। नास्तीति बुद्धिः फलम्। नास्तीति बुद्धेः प्रमाणत्वपक्षे हानादिबुद्धिः फलम्।

तदयं भाष्यार्थः। यो नास्तीत्यस्यार्थस्य बोधकः प्रत्यक्षाद्यभावः, स एष अभावो नाम प्रमाणमिति।

ननु घटादिभावातिरिक्तमभावाख्यं न किञ्चिद्वस्तु। अत एव भावान्तरमभावोन्यो न कश्चिदनिरूपणादि(नि० वा० ११७)ति भवतामुक्तिरपि संगच्छते। भावरूपस्य प्रमेयस्य प्रत्यक्षादिभिरेव प्रमितत्वात्, तदतिरिक्तस्य प्रमेयस्याभावात् कथमभावस्य प्रमाणान्तरत्वमिति चेत्।

उच्यते योयमनुभवो घटे पटो नास्ति, तस्य किमालम्बनं किं घटस्वरूपमात्रम्, उतान्यदपि किञ्चित्। नाद्यः। तथा सति तत्र पटसत्त्वदशायामपि पटो नास्तीति प्रत्ययापत्तेः घटस्वरूपस्य तदानीमपि सत्वात्। न च केवलघटस्वरूपं तदालम्बनं पटसत्त्वदशायां केवलघटस्वरूपाभावान्न तादृशप्रत्ययापत्तिरिति वाच्यम्। घटे फलसद्भावदशायामपि तत्र पटासत्त्वे पटो नास्तीति प्रत्ययानुत्पत्तिप्रसङ्गात्। फलस्यापि तत्र सत्त्वेन केवलघटस्वरूपाभावात्। द्वितीये अभाव एव, नान्यः, अतिप्रसङ्गात्। न च यद् भवतामभावप्रत्यक्षकारणम्, तदेव नस्तादृशाभावव्यवहारकारणमिति वाच्यम्। घटादावपि यद् भवतां प्रत्यक्षकारणम्, तदेव नस्तादृशव्यवहारकारणमित्युक्तिसम्भवेन तेषामप्यपलापापत्तेः। योग्यप्रतियोगिदर्शनाभावस्याभावप्रत्यक्षकारणतया तदङ्गीकारे तवाभावाङ्गीकारापत्तेश्च। तथा च प्रमाणाभाववत् प्रमेयाभावोऽपि स्वीकार्यः, विनिगमनाविरहात्। न चाभावप्रमाणवादिनापि अभावविशिष्टाधिकरणग्रहणात् प्राक्यादृशाधिकरणं गृह्यते तादृशाधिरणग्रहणमेवाभावव्यवहारकारणमस्तु, कृतमभावस्वीकारेणेतिवाच्यम्। प्रतियोगितदभावज्ञानशून्याधिकरणग्रहणस्यास्माभिः तदानीं स्वीकारात् तवापि तथा स्वीकारेऽभावाङ्गीकारापत्तेः।

तस्मात् सर्वं वस्तु सदसदात्मकं स्वीकार्यम्, यथा घटः स्वरूपेण निरूप्यमाणः सन्, यदा स एव पटादिस्वरूपेण निरूप्यते, तदाऽसन्

भवति, एवं पटोऽपि स्वात्मना निरूप्यमाणः सन्, घटात्मना निरूप्यमाणेऽसन्निति, घटोऽसद्रूपेण पटे समवेतः पटश्च तद्वद्घटे समवेत इति स एवान्योन्याभावः, एवमत्यन्ताभावः संयोगेन भूतले निरूप्यमाणस्तत्र सत्, संयोगाभावात्मना भूतलादौ समवेतः स्वीयासद्रूपाकारं ज्ञानं जनयन्नत्यन्ताभाव उच्यते। एवं प्रागभावप्रध्वंसाभावौ बोध्यौ। तदेवं सदसदात्मके वस्तुनि केनचित्कदाचित्कंचिद्रूपं किंचिच्च कदाचिद् गृह्यते इति न प्रमाणान्तरस्यानवकाश इति।

तथा चोक्तं स्वरूपपररूपाभ्यां नित्यं सदसदात्मके।

वस्तुनि ज्ञायते कैश्चिद्रूपं किञ्चित् कदाचन(अ० परि० १२) इति। वस्तुनः। सदसदात्मकत्वेऽपि यदा सदंशस्योद्भवः, जिघृक्षा वा, तदा सदात्मनानुभवः, व्यपदेशश्च घटोस्तीत्यनुभवो घटज्ञानमिति व्यपदेशः। यदा चासदात्मनोद्भवः, जिघृक्षा वा, तदा नास्ति घट इति प्रत्ययः, घटाभावज्ञानमिति व्यपदेशश्च भवति। एकैकांशस्यानुभवे व्यवहारे च अपरापरांशः तिरोहितो भवति। कदाचिद् भावग्रहणेऽपि अभावांशो विशेषणतयानुवृत्तः प्रतीयते। यथा चैत्र एवायं नान्यः। अत्र चैत्रनिर्णयः वस्त्वन्तराभावानुवृत्त एव।

न च निर्णयस्य वस्त्वन्तराभावानुविद्धत्वे प्रत्यक्षादीनामनपेक्षत्वलक्षणं प्रामाण्यं न स्यात्। अयमेवेति पदार्थनिर्णयः प्रत्यक्षादि-प्रमाणानां फलम्। स च प्रत्यक्षेण भवितुं नार्हति, वस्त्वन्तराभावस्य विशेषणस्य अभावप्रमाणगम्यत्वेन प्रत्यक्षग्राह्यत्वाभावात्। अभावप्रमाणसापेक्षप्रत्यक्षस्य निर्णायकत्वाभ्युपगमेपि अनपेक्षत्वलक्षणं प्रमाणं व्याहतमेवेति।

मैवम्। अभावानुविद्धत्वस्य निर्णयलक्षणत्वाभावात्। अभावानुविद्धेऽपि संशयदर्शनात्। किं चैत्र एवास्ति किम्वा अन्योपीति अत्राभावानुवेधेऽपि चैत्रस्य सन्दिह्यमानत्वात्। कुतस्तर्हि भावान्तरानुविद्धत्वं निर्णयलक्षणमुक्तम्। केनोक्तम्? यथा तु कश्चिन्निर्णयः वस्त्वन्तराभावानुवृत्तो भवति। यथा अयमेव नान्य इत्येतावन्मात्रमुक्तम्, न तु निर्णयमात्रस्य लक्षणाभिधित्सया तथोक्तमिति। निर्णयस्तु ज्ञानविशेषः सर्वजनप्रसिद्धः, न घटादिवल्लक्षणमपेक्षते। तथा च भावज्ञानं क्वचिदभावानुविद्धम्, क्वचिन्न। अभावज्ञानं तु

सर्वं भावानुविद्धमेव । इदमिदं न भवति, इदमिह नास्ति इति प्रतियोगिज्ञानं विनाऽभावज्ञानासम्भवात् इति भावः ।

**तार्किकमतस्यानुवादः**

नैयायिकास्तु—अभावस्य प्रत्यक्षेणैव ग्रहणमिति निरूपयन्ति । तन्मते षोढा इन्द्रियसन्निकर्षः—संयोगसंयुक्तसमवेत-संयुक्तसमवेतसमवाय-समवाय-समवेत-समवाय-विशेषणविशेष्यभावभेदात् । संयोगेन द्रव्यस्य, संयुक्तसमवायेन गुणादेः, संयुक्तसमवेतसमवायेन गुणत्वादेः, समवायेन शब्दस्य, समवेतसमवायेन शब्दत्वादेः विशेषणविशेष्यभावेन चाभावस्य प्रत्यक्षं जायते इति ।

**तन्निरासः**

तदयुक्तम्, सदसतोः सम्बन्धानर्हत्वात् । नहि भावैरिवाभावैः सहेन्द्रियसंयोगो भवितुमर्हति, असदात्मनोऽभावस्येन्द्रियसंयोगाधारत्वासम्भवात् । न च त्वन्मते धर्मधर्मिणोरभेदादस्त्येवसंयोगः । भेदस्यापि स्वीकारेण तदंशेन संयोगाभावात् । न च संयुक्तसमवायेन ग्रहणमस्तु, समवायानङ्गीकारात् । अङ्गीकारेऽपि तस्यैन्द्रियकत्वानभ्युपगमात् । त्वन्मतेऽभावधर्मिणोः समवायाभावाच्च ।

अत एव न संयुक्तविशेषणतयापि सम्बन्धाभावेन विशेषतायोगात् । नन्विन्द्रियसन्निकर्षान्वयव्यतिरेकोनुविधायित्वाद् रूपादिबुद्धेरिवाभावबुद्धेरपि प्रत्यक्षत्वमेव, अन्यथा अन्धस्यापि घटाभावग्रहणापत्तेः । नहि विस्फारिताक्ष इव निमीलिताक्षो घटाभावं प्रत्येतुमर्हति, तत्कस्य हेतोः, अभावेन सहेन्द्रियसन्निकर्षाभावात् उन्मीलिताक्षस्याभावेन सहेन्द्रियसन्निकर्षादभावबुद्धिरुत्पद्यते इत्यन्वयव्यतिरेकाभ्यामभावस्यैन्द्रियकत्वमेव युक्तम् । अत एवाभावविशिष्टाधिकरणबुद्धेर्विशिष्टबुद्धित्वमपरोक्षाभावसत्त्वं चोपपद्यते, अन्यथाऽधिकरणस्य चक्षुषाभावस्य चानुपलब्ध्या ग्रहणे रूपरसादिबुद्धेरिव विशिष्टबुद्धित्वानुपपत्तिः । अभावस्येन्द्रियेणाग्रहणादपरोक्षत्वानुपपत्तिश्च । मैवम् । इन्द्रियान्वयव्यतिरेकयोरधिकरणग्रहणांशे एव स्वीकारेण अभावांशे तदनङ्गीकारान्नान्धस्य भूतलादौ घटाभावोपलब्धिः, तस्य चक्षुषाधिकरणग्रहणाभावात् । प्रतियोगितद्व्याप्येतरयावत्प्रतियोगिग्रहणसामग्रीसमवधाने सति

दृश्यादर्शनमभावे प्रमाणं, नादर्शनमात्रम्। तथा चालोकादिसामग्रीसमवधाने भूतलादौ सति घटे यश्चक्षुषा तमवधारयितुं क्षमः तस्यैव भूतलादौ घटाद्यभावग्रहणम्, नान्यस्येत्यधिकरणग्रहणायैवेन्द्रियोपयोगः नाभावग्रहणाय, चक्षुषा गृहीते भूतले, स्मृते च प्रतियोगिनि घटे अनुपलब्धिसध्रीचीनमनसाऽभावज्ञानोत्पत्तेः नेन्द्रियस्याभावग्रहणसामर्थ्यं कल्पनीयम्, प्रमाणाभावात्। अन्यथासिद्धत्वाच्चेन्द्रियस्य अभावांशेऽपरोक्षत्वं त्वनङ्गीकारपराहतम्, भावांशे एवोपरोक्षत्वाभ्युपगमात्।

मनसा तत्तायाः चक्षुषेदन्ताया भानात्प्रत्यभिज्ञाया यथा विशिष्टबोधकत्वम्, तथानुपलम्भसहकृतमनसा भावस्येन्द्रियेण भूतलस्य ग्रहणेन प्रमाणद्वयसम्पाताद्विशिष्टबोधकत्वमुपपद्यते। दृश्यादर्शनमिन्द्रियं च सहितमभावविशिष्टं भूतलादि प्रमापयति। तत्राधिकरणांशो चक्षुरादि व्याप्रियते, अभावांशे तत्सम्बन्धयोश्चानुपलब्धिः। यथा जिह्वागतेक्षुक्षीरादि द्रव्यं त्वगिन्द्रियेण गृह्यते, माधुर्य-तद्द्रव्यसम्बन्धश्च रसनेनेति इन्द्रियद्वयेन माधुर्यविशिष्टेक्षुक्षीरादिबुद्धिरिति संक्षेपः।

नन्विन्द्रियेऽभावबुद्धिजननसामर्थ्यकल्पनापेक्षया दृश्यादर्शने तादृशसामर्थ्यकल्पनायां लाघवाभावः। तत्रापि तादृशसामर्थ्यस्य क्लृप्तत्वेन कल्पनाभावात्। तथा हि कश्चित्प्रातः चत्वरं दृष्ट्वा तत्र गजमपश्यन् गजस्मरणाभावात्तदभावमप्यगृहीत्वा केवलं देशमवधानो गृहमागतः मध्याह्नसमये तत्र गज आसीदिति केनचित् पृष्टः ज्ञातत्वात्तं देशं स्मरन्नपि तत्र पूर्वमगृहीतं गजाभावं तदैव गृह्णाति। न चेदमभावग्रहणमिन्द्रियेण सम्भवति, प्रातःकालिकाभावेऽसन्निकृष्टे इन्द्रियसन्निकर्षाभावात्। इन्द्रियस्य सन्निकृष्टग्राहित्वात्। न चानुपलब्धिजन्याभावप्रत्यक्षेऽप्यधिकरणेन्द्रियसन्निकर्षस्य हेतुत्वेन व्यवस्थापनादसन्निकृष्टप्रातःकालिकचत्वरेण सममिन्द्रियसन्निकर्षासम्भवादनुपलब्धेरयोग्यत्वात्कथमनयाप्यभावग्रहणमिति चेत्?

सत्यम्। प्रत्यक्षयोग्यता-विरहेऽपि स्मृतियोग्यता तत्राक्षतैव। यदि प्रातःकाले चत्वरे गजः स्यात् तदा तदानीं चत्वरवद्गृह्येत् तथा मध्याह्नसमये स्मरणेच्छायां सत्यां चत्वरवत्स्मर्य्येतापि। तदिदं प्रातःकालिकचत्वराधिकरणकगजास्मरणं मध्याह्नसमये प्रातःकालिकचत्वराधिकरणगजाभावं बोधयतीत्यनुपलब्धेरभावग्रहणसामर्थ्यं स्पष्टमेवेति नाक्लृप्तकल्पना।

**न च प्रमाणाभावः प्रमाणमिति** भाष्योक्तिः स्मरणाभावस्याप्यभाव-प्रमापकत्वकल्पनायां व्याकुप्येतेति वाच्यम् । गजस्मरणाभावस्यापि प्रातः-कालिकचत्वराधिकरणकगजाभावस्मारकतया फलतः प्रमाणाभावत्वात् । स्मरणस्य प्रमाणफलत्वात् । प्रमाणेनाधिगतं वस्तु यथा कालान्तरे स्मर्य्यते, तथा स्मरणभावेन प्रातःकाले चत्वरे गजाभावो मध्याह्नसमये स्मर्य्यत इति प्रमाणसादृश्यात्प्रमाणत्वमिति भावः ।

ननु प्रमाणान्तरकल्पनापेक्षयाऽनुमेयत्वमेवास्तामभावस्येति चेत् । लिङ्गाभावात् । न तावत्प्रतियोगिनो घटादेर्भावस्य लिङ्गत्वं तदग्रहणे एवा-भावबुद्ध्युत्पत्तेरगृहीतस्य लिङ्गत्वायोगात् । तद्ग्रहणे च तदभावबुद्धेरभावात् । न च विरुद्धयोर्भावाभावयोरेकत्रैकदावस्थानं विरोधस्यैव भङ्गापत्तेः न वाधि-करणस्य भूतलादेर्लिङ्गत्वमभावाग्रहणे तद्धर्मतया भूतलस्य ग्रहणासम्भवादेव तस्य तद्धर्मित्वानुपपत्तेः । तद्धर्मतया ग्रहणे पुनरनुमेयाभावादेवानुमानाप्रवृत्ते-र्लिङ्गग्रहणेनैवाभावविशिष्टाधिकरणावगतेरुत्पादात् । स घटतदभावोभयानुगतस्य भूतलस्यानैकान्तिकत्वाच्च, कस्यचिद् भावस्य केनचिदभावेन सह दर्शनाद-भावसामान्येन सम्बन्धावधारणे तु सर्वाभावानुमानं स्यात् । कतिपयाभावेन सह दृष्टसम्बन्धस्यापि भूतलस्य न सर्वाभावानुमापकत्वं भावान्तरैरपि सह-दर्शनेनानैकान्तिकत्वात् ।

किंचाभावग्रहणं विना तत्सम्बन्धो भूतलादौ नावगन्तुं शक्यते, सम्बन्ध-ग्रहं प्रति सम्बन्धिग्रहस्य हेतुत्वात् । न चासौ प्रत्यक्षः, पूर्वोक्तयुक्तेः । नाप्यनुमानेनाऽस्य ग्रहणं सम्भवति, अन्योन्याश्रयात् । अनुमानेनाभावग्रहणे सम्बन्धग्रहणं सम्बन्धग्रहणे चानुमानमिति तस्मादभावग्रहणं प्रमाणान्तरेणैव वाच्यम्, तच्चानुपलब्धिरेवेति ।

ननु अनुपलब्धिर्ज्ञाताऽभावधीहेतुः, अज्ञाता वा । सत्तामात्रेणेन्द्रियवत् । आद्ये भूतले घटाभावोऽनुपलब्ध्या ग्राह्यः, अनुपलब्धिरपि उपलब्ध्यभाव एव इत्यभावात्मकतयाऽनुपलब्ध्यन्तरेण ग्राह्या, तदपि स इति पुनरन्यापेक्षाया-मनवस्था ध्रौव्यम् । अन्त्ये व्यभिचारः, सत्यामुपलब्धावनिश्चितायां नाभा-वधीः । यथा पुस्तकमध्यनिहितपत्रबुभुत्सया पुस्तकमितस्ततः परावर्त्याव-लोकितमपि नोपलब्धम् । तथापि कियत्पृष्ठमवलोकितं भवेदिति संशयानः

तदभावं न निश्चिनोति । क्वचिच्चासत्यामपि योग्यानुपलब्धौ तन्निश्चयादभावमधिगच्छति । यथा तत्रैव सम्यगनवलोकितमिति प्रतिपत्रं सम्यगवलोकितं पुस्तकम्, न च पत्रं प्राप्तमिति योग्यानुपलब्धिभ्रमेण तदभावमवधारयति, तस्मादनुपलब्धिलिङ्गकानुमानेनैवाभावग्रहणमित्येव युक्तम् । न चानिश्चिताया अनुपलब्धेर्लिङ्गत्वायोगात्तन्निश्चयावश्यकत्वेन पुनः सैवानवस्थेति चेद् ? भ्रान्तोसि, नानुपलब्धिरूपलब्ध्यभावरूपा, किन्तु एकज्ञानसंसर्गिणोरन्यतरस्योपलब्धिरेवैकतरस्यानुपलब्धिः, न तूपलब्ध्यभावः । यथा घटभूतलयोर्घटवद्भूतलमिति ज्ञानसंसर्गिणोर्यदा भूतलमात्रस्यैवोपलब्धिर्भवति, तदा सा भूतलमात्रोपलब्धिरेव घटानुपलब्धिः । सा च स्वयं प्रकाशा इति, न तत्प्रकाशनायोपलब्ध्यन्तरापेक्षा, येनानवस्थाशङ्काकलङ्कादिः सम्भाव्येतापि । भूतलमात्रस्वरूपोपलब्धिश्च चक्षुरादिनेतीयमेव घटप्रत्यक्षानुत्पत्तिर्घटाभावस्य लिङ्गम् ।

प्रयोगश्चैवं बोध्यः दृश्यं सत् यद् यत्र नोपलभ्यते, तत्तत्र नास्ति यथा बुद्धिसत्त्वे पुरुषः ।

**धर्मकीर्तिमतस्य निरासः**

अथवा दृश्यस्य सत्तादर्शनव्याप्ता, व्यापकस्य दर्शनस्य निवृत्तौ तद् व्याप्यदृश्यसत्तापि निवर्तते । यथा धूमव्यापकस्याग्नेर्जलह्रदादौ निवृत्तौ धूमस्यापि निवृत्तिरेवं दर्शननिवृत्तौ दृश्यनिवृत्तिर्बोध्येति सौगताः ।

अत्रोच्यते—अनुपलब्धिलिङ्गकानुमानेनाभावग्रहणमिच्छतां भवतां किमनुपलम्भसामान्येन घटाभावानुमानमिष्टम्, किम्वा अनुपलम्भविशेषेण । नाद्यः, असम्भवात् । नहि सामान्यव्याप्त्या घटाभावविशेषोऽनुमातुं शक्यः, विशेषणसम्बन्धाग्रहणात् । न चाभावसामान्ये घटाभावबुद्धिरहिता । अभावविशेषे तु सा बुद्धिः, न चेयमनुपलम्भसामान्येनानुमेया व्यभिचारात् । सत्यपि घटे वस्त्वन्तरानुपलम्भस्य सत्वात् । द्वितीये कोयमनुपलम्भविशेषः, घटानुपलम्भ इति चेत् ? सत्यमेतदहं जानामि, किन्तु घटानुपलम्भः भूतलस्वरूपोपलब्धिरन्यतरस्वरूपोपलब्धिः, घटोपलम्भाभावो वा विवक्ष्यत इति पृच्छामि, तत्र नाद्यः, तस्याः साधारणत्वात् घटवत्यपि भूतले भूतलस्वरूपो-

पलब्धिर्भवति । न च घटाभावबुद्धिस्तत्रेति । न द्वितीयः, घटवद्भूतल-बुद्धेरपि भूतलस्वरूपावगाहितया तस्यां सत्यामपि घटाभावबुद्धिप्रसंगात् । न चान्यतरमात्रबुद्धिर्विवक्षितेति नोभयबुद्धावतिप्रसंगः, मात्रपदार्थनिर्वचना-सम्भवस्य पूर्वमेव प्रदर्शितत्वात् । अन्त्ये तस्या अप्युपलब्ध्यन्तरगम्यतया-त्वदुक्तैवानवस्था त्वयि आपतेत् । एवं यत्र यन्नोपलभ्यत इति पूर्वोक्तो हेतुनिरसनीयः । दर्शननिवृत्या दृश्यस्य घटादेर्निवृत्तिरनुमीयते दर्शननिवृत्ति-रप्यभावस्वरूपेति, सापि दर्शननिवृत्यन्तरेणैवानुमेयेत्यनवस्थापिशाची तद-वस्थैव । तस्मादभावग्राहकः प्रमाणाभावः प्रमाणान्तरमेव इत्येव युक्तः पन्थाः ।

ननु प्रमाणानुत्पत्तिरूपस्य प्रमाणाभावस्य तुच्छतया कथमस्य प्रमाणत्वं युज्यते । किन्न युज्यते । 'यादृशी शीतला देवी तादृशः खरवाहनः' इति न्यायेन यादृशं प्रमेयमभावाख्यम्, तादृशमेवाभावाख्यं प्रमाणमपि । प्रत्यु-ताऽस्य भावरूपत्वे प्रमाणप्रमेययोर्विरूपत्वापत्त्याऽनौचित्यं स्यात् । न च सर्वत्र भावभूतस्यैव प्रमाणत्वं दृष्टमिति कुतोऽत्र तद्विपरीतस्य प्रमाणत्वम् ? तर्हि सर्वत्र भावस्यैव लिङ्गत्वमपि दृष्टमिति लिङ्गत्वमस्य कथमित्यत्रापि दृष्टिर्दीयताम् । एवं प्रमाणत्ववत् प्रमेयत्वमपि न स्यात्तथा च इदमिह नास्ति इदमिदं न भवतीत्यादिव्यवहारोच्छेदः स्यादिति बलादभावस्य वस्तुत्वं स्वीकार्यम्, न तुच्छत्वमिति । प्रमाणत्वमपि सम्यगेवेति संक्षेपः ।

**स्वतन्त्राभावप्रमाणस्य प्रयोजनम्**

अभावप्रमाणस्येह स्वतन्त्रोपयोगस्तु 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' इत्यादौ श्रुत्युक्ताङ्गफलातिरिक्ताङ्गफलाभावे आगमाभाव एव प्रमाणम्, नान्यत् । प्रयोगश्च प्रमाणाभावः प्रत्यक्षादिप्रमाणभिन्नः, अभावशब्दवाच्य-त्वात् प्रमेयाभाववत् । तथा प्रमेयाभावः स्वानुरूपेण प्रमाणेन प्रमेयः, प्रमेयत्वाद् भावाख्यप्रमेयवदिति ।

ननु केचित्पौराणिकाः सम्भवैतिह्याख्यं प्रमाणद्वयमधिकं स्वीकुर्वन्ति । भाष्यकारेण तत्किमर्थं न लक्षितमिति चेत् ?

अयं भावः सम्भवो हि व्याप्यसंख्यापरिमाणाभ्यां व्यापकसख्यापरि-माणावगमः । यथा सम्भवति सहस्रे शते, प्रस्थे च कुडवमिति । सहस्रेण

तदन्तर्गतसंख्यायाः, प्रस्थेन परिमाणेन तदन्तर्गतकुडवपरिमाणस्य च ज्ञानं व्याप्तिमूलकत्वादनुमानमेव ।

अनिर्दिष्टप्रवक्तृकवचनपरम्परा ऐतिह्यम् । तद् यदि प्रमाणम्, तर्हि आगमेष्वेवान्तर्भूतम्, नोचेदप्रमाणमेव । यथेह वटे यक्ष इति ।

नैयायिकाभिमतं प्रातिभाख्यं प्रमाणं पूर्वमेव निरस्तम् । लोकप्रसिद्धि-रपि प्रत्यक्षादौ अन्तर्गतैवेति, षडेव प्रमाणानि । न न्यूनानि, नाधिकानि ।

तथा च भगवद्रामायणे 'रामषड्युक्तयो लोके याभिः सर्वोऽनुदृश्यत इति ।

**इति कल्पकलिकायामभावप्रामाण्य-परिच्छेदः ।**

लोकप्रसिद्धस्वतःप्रमाणभावप्रत्यक्षाद्यन्तर्गतशब्दस्यापि स्वतःप्रामाण्याङ्गी-कारेण प्रतिज्ञाते धर्मं प्रति चोदनाप्रामाण्ये साधितेऽपि, ऐहिकपश्वादि-फलकानां चित्रादिचोदनानामनुष्ठानोत्तरफलोत्पादे प्रत्यक्षादिभिरसंवाद-विसंवादाभ्यां पुनरप्रामाण्यं शङ्कते—**ननु प्रत्यक्षादोन्यन्यानोति भाष्यम् ।**

ननु अतथाभूतमप्यर्थं ब्रूयाच्चोदना यथा यत् किञ्चन लौकिकं वचनं नद्यास्तीरे पञ्चफलानि सन्ति इति, तत्तथ्यमपि भवति, वितथमपि भव-तीति पूर्वभाष्येणैव चोदनाप्रामाण्यस्याक्षिप्तत्वात् पुनस्तदाक्षेपे पौनरुक्त्य-मिति वाच्यम् । आक्षेपहेतुविषयभेदात् । पूर्वत्र प्रत्यक्षादि-प्रमाणान्तराधि-गतार्थे एव शब्दप्रामाण्यम्, न स्वातन्त्र्येण अतीन्द्रियेषु स्वर्गाद्यर्थेषु प्रत्यक्षा-दीनां प्रवृत्त्यसम्भवान्न चोदनाप्रामाण्यमित्याक्षेपः । अत्र तु ऐहिकपश्वादि-फलासु चित्रादिचोदनासु यदि अनुष्ठानानन्तरं पश्वादयः फलानि उपलभ्येरन् तर्हि प्रत्यक्षादिसम्वादात् प्रामाण्यम्, नो चेत् प्रमाणान्तरविसंवादादेवा-प्रामाण्यमुपपादयितुं शक्यते कृतं शब्दपारतन्त्र्यविचाराडम्बरेण । तस्मात् पूर्वाक्षेपः पारलौकिकफलविषयः । अयन्तु ऐहलौकिकफलविषयः प्रत्यक्षा-दिविसंवादनिमित्तकः । प्रमाणान्तरयोग्यार्थप्रतिपादकं वचनं तदसंवादवि-संवादाभ्यामप्रमाणम् भवति । प्रमाणान्तरायोग्यार्थप्रतिपादकन्तु स्वार्थे अवि-श्वासमात्रमुत्पादयति नार्थव्यतिरेकं स्वप्नदृष्टद्वीपान्तरार्थवचनवदिति भेदः ।

अथ वा सूत्राणि व्याचक्षाणो भाष्यकारः सूत्रोक्तमाक्षेपं पूर्वमदर्शयत्, इदानीं वृत्तिकारमतेन तमेवाक्षेपं दर्शयति । तदाक्षेपाभेदेऽपि व्याख्यातृ-

भेदान्न पौनरुक्त्यम् । अनिमित्तं विद्यमानोपलम्भनत्वादि' तिवदता सूत्रकृतापि प्रमाणान्तरासंवाद-विसंवादाभ्यां प्रामाण्यमाक्षिप्यते, न तु शब्दस्य प्रत्यक्षादिपारतन्त्र्येणेति पूर्वं भाष्यकृत आक्षेपः, सूत्रकारेण तु अत्रैव प्रथममाक्षिप्यते इति न पौनरुक्त्यमिति प्रमाणान्तरसंवादात् प्रत्यक्षादीनामस्तु प्रामाण्यमित्याह—**प्रत्यक्षादीनीति** ।

प्रत्यक्षादिप्रमाणासंवाद-विसंवादाभ्यां शब्दस्य न प्रामाण्यमित्याशयेनाह—**शब्दस्त्विति** ।

**भाष्यम्—ननु प्रत्यक्षादीनि अन्यानि भवन्तु नाम प्रमाणानि शब्दस्तु न प्रमाणम् । कुतः अनिमित्तं विद्यमानोपलम्भनत्वात् अनिमित्तमप्रमाणं शब्दः । यो हि उपलम्भनविषये नोपलभ्यते स नास्ति । यथा शशस्य विषाणम् । उपलम्भकानि चेन्द्रियाणि पश्वदीनाम् । न च पशुकामेष्ट्यनन्तरं पशवः उपलभ्यन्ते । अतो नेष्टिः पशुफला । कर्मकाले च फलेन भवितव्यम् । यत्काले हि मर्दनं तत्काले मर्दनसुखम् । कालान्तरे फलं दास्यतीतिचेत् न । कालान्तरे फलमिष्टेरित्यवगच्छामः । कुतः यदा तावदसौ विद्यमाना आसीत् । तदा फलं न दत्तवती । यदा फलमुत्पद्यते तदासौ नास्तीति । असती कथं दास्यति ।**

अनिमित्तशब्दार्थमाह—**अप्रमाणमिति** विसंवादं दर्शयितुमाह **यो हीति** । प्रमाणाभावः प्रमेयाभावसाधक इत्याह यथा **शशस्य विषाणमिति** न चोपलम्भकाभावादनुपलम्भ इत्याह **उपलम्भकानि चेन्द्रियाणि इति** । तथा चोपलम्भकसामग्रीसमवधाने योग्यं यन्नोपलभ्यते, तन्नास्त्येव । यथा—**शशस्य विषाणमिति** । निगमयति—**अतो नेष्टिरिति** । तथा चायं प्रयोगः चित्रादिवाक्यमप्रमाणं प्रत्यक्षादिप्रमेयार्थकत्वे सति तद्विसंवादात् विप्रलम्भकवाक्यवत् । तथा चित्रा न पशुफला स्वकाले तदजनकत्वात् भुजिक्रियावदिति ।

ननु कालान्तरे पशुफलसम्भवान्नाप्रामाण्यमित्याशङ्क्य निषेधति-**कर्मकाल इति** । अत्रैव दृष्टान्तमाह—**यत्काले हि मर्दनं तत्काले मर्दनसुखमिति** । अयं भावः । यद् यस्य साधनम्, तत्स्वकाले एव जनयति यथा मर्दनं तत्सुखम्, तथा यद् यस्य साध्यं तत्तदुत्पत्तावेव भवति । यथा मर्दनसुखं तद्धि मर्दनसमये

एव भवति । एवं च यदि चित्रा पशुसाधनं स्यात् तर्हि चित्रोत्पत्तिसमये एव पशुफलं स्यात्, नान्यदा एवं यदि पशुफलं चित्रासाध्यं स्यात्, तदा चित्रोत्पत्तिसमये एव स्यात्, न कालान्तरे । न चैतद् दृश्यते । तस्मान्न पशुफलेति पूर्वोक्तानुमाने भाष्योक्तं मर्दनम्, तत्सुखं चेति वैधर्म्योदाहरणं बोध्यमिति ।

ननु साध्यसाधनतत्सम्बन्धस्यैव विधिबोधितत्वेनानन्तर्यस्य विध्यर्थत्वाभावादनन्तरं प्रत्यक्षादियोग्यस्य पश्वादिफलस्यानुपलम्भेऽपि न तदप्रामाण्यम्, कालान्तरे फलोत्पत्त्यापि तत्साध्यसाधनबोधकविधेः प्रामाण्यमक्षतमेवेत्याशङ्क्य निराकुरुते—**न कालान्तर इति** । अयं भावः विधिवाक्ये यद्यपि आनन्तर्यस्योपादानं नास्ति, तथापि कालान्तरस्यापि उपादानं नास्ति । अथ चित्रादिकर्मणा पशुफलोत्पादं बोधयतीति कर्मस्वभावादानन्तर्यं लभ्यते, विनष्टस्य हेतुत्वासम्भवात् । तथा चानन्तरफलोपलम्भाभावेन प्रत्यक्षादिबाधः स्फुट इति । न च स्वर्गादिफलबोधकवाक्यस्येव चित्रादि—वाक्यस्यापि अपूर्वद्वारा कर्मफलयोरानन्तर्यमादायोपपत्तिः । तेन स्वार्थबोधवेलायामेव देहान्तरोपभोगयोग्यस्य कालान्तरभाविनः स्वर्गादिफलस्य तदानीमुत्पत्त्यसम्भवेनापूर्वमन्तर्भाव्यैव तयोः साध्यसाधनभावो बोध्यते । चित्रादिवाक्येन तु पश्वादिफलस्यानन्तरकालेऽपि सम्भवेनापूर्वमनन्तर्भाव्यैव तयोः साध्यसाधनभावो बोध्यते इति सामर्थ्यादानन्तर्यलाभ इत्याशयात् । सामर्थ्यस्य शब्दैकदेशत्वात्तद्बाधः शब्दबाध एव तथा चोक्तमर्थाद्वा कल्पनैकदेशत्वादि(जै० सू० अ० १ पा० ४ सू० ३०)ति । कर्मस्वभावलब्धमानन्तर्यं तत्र शब्दविशेषणं न भवति । यत्रानन्तर्यविपरीतं कालान्तरमुपादीयते, तत्रापूर्वद्वारा साध्यसाधनयोरानन्तर्यं गम्यते । यत्र तु न तथा । यथा चित्रादिवाक्ये, तत्रानन्तर्यं शब्दविशेषणमेवेति, चित्रानन्तरमेव पशुफलं बोध्यते, तत्रानन्तरफलानुपलब्ध्या प्रत्यक्षादिविरोधः स्पष्ट एवेति । एवं यत्रापि कालान्तरे पश्वादिकं दृश्यते, तत्रापि दृष्टस्य प्रतिग्रहादेरेव कारणत्वं युक्तं स्वीकर्तुम् । अदृष्टकारणत्वकल्पनापेक्षया दृष्टकारणत्वस्यैवौचित्यादित्याह—**प्रत्यक्षञ्च फलकारणमन्यदुपलभामहे** । अन्यत् चित्रादिभ्यः प्रतिग्रहादि ।

**भाष्यम्—प्रत्यक्षं च फलकारणमन्यद् उपलभामहे । न च दृष्टे कारणे सति अदृष्टं कल्पयितुं शक्यते प्रमाणाभावात् । एवं दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति मन्यामहे । दृष्टिविरुद्धमपि भवति किञ्चिद्वचनम् । पात्रचयनं विधाय आह "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" इति प्रत्यक्षं शरीरकं व्यपदिशति । नच तत् स्वर्गं लोकं यातीति । प्रत्यक्षं हि तत् दह्यते । नचैष "याति" इति विधिशब्दः । एवञ्जातीयकश्च प्रमाणविरुद्धं वचनमप्रमाणम् । अम्बुनि मज्जन्ति अलावनि, ग्रावाणः प्लवन्ते इति यथा । तस्मादग्निहोत्रादिचोदनासु अपि अनाश्वासः । तस्मान्न चोदनालक्षणोऽर्थो धर्मः ।**

न चैहिकफलानामप्रामाणिकत्वेऽप्यामुष्मिकफलानां प्रामाण्यमेवेत्याशङ्कय निराचष्टे—**एवं दृष्टापचारस्येति** । दृष्टफलकस्य वेदस्याप्रामाण्ये तज्जातीयस्यादृष्टफलकस्याप्यप्रामाण्यमेव । तथा चैवं प्रयोगः स्वर्गादिफलबोधको वेदोऽप्रमाणं वेदत्वाद् दृष्टफलबोधकवेदवदिति प्रत्यक्षाद्यनुपलब्धिविरोधेनाप्रामाण्यं प्रदर्श्य प्रत्यक्षादिविरोधादप्रामाण्यं प्रदर्शयितुमाह—**दृष्टविरुद्धमिति** । मृतस्याग्निहोत्रिणः सहपात्रैर्दाहो भवति चितायां पात्राणि निधाय दाहसमये एषोक्तिः । 'एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'ति । न चात्मनः स्वर्गगमने कथं प्रत्यक्षादिविरोधः, प्रत्यक्षविषयत्वादात्मान इत्यत आह **शरीरकं व्यपदिशतीति** । तस्यैव यज्ञायुधसम्बन्धः, नात्मनः । एवं यजमानत्वमपि शरीरस्यैव, वर्णविभागयोग्यत्वात्, कर्तृत्वाच्च । न त्वात्मनः, विभुत्वेन कर्तृत्वायोगात् वर्णविभागाभावाच्च, तदानीं तत्सद्भावे प्रमाणाभावाच्च । तस्मात् शरीरस्यैव स्वर्गगमनमभिधीयते । तत्र प्रत्यक्षविरोधोस्त्येव ।

चित्राद्युदाहरणापेक्षयाऽत्र वैलक्षण्यं प्रदर्शयितुमाह—**न चैष यातीति । विधिशब्द इति** । अयं भावः—विधौ सति भविष्यत्ताऽपि फलस्य स्यात्, तथा च प्रत्यक्षादिभिर्न साक्षात्प्रतिरोधो भवेत्, किन्तु चित्रादिवाक्यवत् कर्मस्वभावाधीनमानन्तर्यं प्रत्यक्षाद्यसंवादेन बाध्येत इति प्रमाणान्तरसम्वादाभावमूलक एवात्रापि प्रामाण्याक्षेपः, न तु प्रत्यक्षादिविसम्वादमूलकः तथा च तस्य पूर्वमेवोदाहृतत्वात् पुनस्तदुदाहरणं निष्फलं स्यात् । विध्यभावे-

तस्मिन् काले स्वर्गगमनं बोध्यते। एष यातीति वर्तमानापदेशात्तथा च शरीरस्य चितायामेव भस्मीभावात् तस्य स्वर्गगमनं प्रत्यक्षविरुद्धमिति, प्रत्यक्षविसंवादेनायमप्रामाण्याक्षेप इति पूर्वोत्तरयोराक्षेपयोर्वैलक्षण्यं साधूपपद्यते।

ननु विधिस्वीकारेपि विरोधोऽस्त्येव, कालान्तरे फलमपि सत एव भविष्यति, नासतः। शरीरदाहस्तु प्रत्यक्षेणैवाधिगत इति, भस्मीभूतस्य शरीरस्य कथं कालान्तरेपि स्वर्गफलभोक्तृत्वमिति चेत्? सत्यम्। यदि विधिः स्यात्? तर्हि तत्प्रामाण्यान्यथानुपपत्या शरीरातिरिक्तात्मकल्पनया प्रत्यक्षादिविरोधपरिहारः स्यादपि। अनुवादकत्वे तु तस्य स्वार्थप्रामाण्याभावान्न स्वार्थोपपादनायार्थान्तरकल्पकत्वमिति शरीरस्वर्गगमनबोधकत्वमेव। तत्र च प्रत्यक्षविरोधः प्रदर्शित एवेति।

एवमदितिर्द्यौरदितिरन्तरिक्षं वनस्पतयः सत्रमासतेत्येवंजातीयका मन्त्रार्थवादाः प्रत्यक्षादिप्रमाणविरुद्धार्था एव। अतः सर्वेषु अप्रामाण्यं साधनीयम्। प्रयोगश्च यज्ञायुधीयवाक्यमप्रमाणं प्रत्यक्षविरुद्धार्थप्रतिपादकत्वात् ग्रावाणः प्लवन्ते इत्यादि वाक्यवत्। अग्निहोत्रादिवाक्यं मृषावेदवाक्यैकदेशत्वात् चित्रादिवाक्यवदिति। तदाह—तत्सामान्यादग्निहोत्रचोदनासु अपि अनाश्वास इति। धर्मे चोदनाया अप्रामाण्यमुपसंहरति—**तस्मादिति**।

**इति कल्पकलिकायां चित्राक्षेपवादः**

**भाष्यम्—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम् तु शब्दः पक्षं व्यावर्तयति। अपौरुषेयः शब्दस्यार्थेन सम्बन्धः। तस्य अग्निहोत्रादिलक्षणस्यार्थस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य। तथा च चोदनालक्षणः सम्यक् प्रत्यय इति पौरुषेये हि शब्दे यः प्रत्ययः तस्य मिथ्याभाव आशङ्क्येत। परप्रत्ययो हि तदा स्यात्। अथ शब्दे ब्रुवति कथं मिथ्येति। नहि तदानीमन्यतः पुरुषादवगतिमिच्छामः। ब्रवीत्युच्यते—बोधयति। बुद्धयमानस्य निमित्तं भवति इति शब्दे च निमित्ते स्वयं बुद्धयते। कथं बिप्रलब्धं ब्रूयान्नैतदेवमिति। न चास्य चोदना स्याद्वा न वा इति सांशयिकं प्रत्ययमुत्पादयति। न च मिथ्यैतत् इति कालान्तरे देशान्तरे अवस्थान्तरे पुरुषान्तरे वा पुनरव्यपदेश्यप्रत्ययो**

**भवति। योऽप्यस्य प्रत्ययविपर्य्यासं दृष्ट्वा अत्रापि विपर्य्यंस्यिष्यति इत्यानुमानिकः प्रत्ययः उत्पद्यते। सोऽप्यनेन प्रत्यक्षेण प्रत्ययेन विरुद्धच-मानो बाध्यते। तस्माच्चोदनालक्षण एव धर्मः। स्यादेतदेवम्। नैव शब्दस्यार्थेन सम्बन्धः। कुतोऽस्य पौरुषेयता अपौरुषेयता वेति, कथं स्याच्चेदर्थेन सम्बन्धः। क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। यदि संश्लेषलक्षणं सम्बन्धमभिप्रेत्योच्यते। कार्यकारणनिमि-त्तनैमित्तिकाश्रयाश्रयिभावसंयोगादयस्तु सम्बन्धाः शब्दस्यानुपपन्ना एवेति।**

सिद्धान्तवादी वेदप्रामाण्यं साधयति—**औत्पत्तिकस्त्वित्यादिना।**

ननु पूर्वोक्तानाक्षेपाननुद्धृत्य स्वपक्षसाधनाय कीदृशोऽवसर इति चेत्? सत्यम्। अयमभिप्रायः, वेदप्रमाण्ये साधिते सति, तत एव सर्वाक्षेपपरिहारः सुकर इति, वेदप्रामाण्यमेव पूर्वं साधनीयम्। तथा चैवं प्रयोगः वेदवाक्यं प्रमाणं स्वार्थे वक्त्रनपेक्षत्वात् पदार्थपदबुद्धिवत्। वेदवाक्यजन्यः प्रत्ययः समीचीनः नित्यवाक्योत्पन्नत्वात् वाक्यबुद्धिवत्। निर्दोषकरणजन्यत्वाद्वा तद्वदिति। अत्रत्यं भाष्यं द्वितीयसूत्रोक्तार्थप्रायम्, नापूर्वं किञ्चिदुच्यते इति तद्व्याख्यानेनैवेदमपि व्याख्यातप्रायमिति पुनर्व्याख्यानमुपैक्षिषि।

सिद्धान्तवादिना सम्बन्धनित्यत्वमंगीकृत्य चोदनाया स्वतःप्रामाण्ये स्थापिते, सम्बन्ध एव नास्ति शब्दार्थयोः, कुतस्तन्नित्यत्वमित्य-भिप्रायेण पूर्वपक्षी प्रत्यवतिष्ठते—**स्यादेतदेवमिति। नैव शब्दस्या-र्थेनेति।** तथा च शब्देनार्थप्रत्ययोऽनियत-निमित्तक इति, वेदार्थस्य ज्ञानम-प्रमाणमित्याशयः।

सति सम्बन्धेऽनिष्टमाह—**क्षुरमोदकेति।** नन्विदमयुक्तं सम्बन्धिनोरेक-स्याधिकरणेऽवश्यमपरेण स्थातव्यमिति नियमाभावात्। पितापुत्रादिषु समानदेशताया अदर्शनादिति, न मुखादिषु क्षुरादिशब्दसद्भावेऽपि पाटनादिरिति चेत्, न सम्बन्धान्तराणामग्रे निराकरिष्यमाणतया शब्दार्थयोः संश्लेषस्यैव सिद्धौ तन्निराकरणायैवैतद्भाष्यप्रवृत्तेः। तथा च संश्लेषे सति भाष्योक्तं दूषणं स्यादिति न सोपि सम्बन्ध इति तथा चैवं प्रयोगः शब्दो-ऽर्थेन न संयुज्यते अर्थदेशान्तरमदर्शनाद् विन्ध्यो हिमवता यथा।

यस्तु शब्दार्थयोः संश्लेषं मत्वा भिन्नदेशत्वं नाङ्गीकुरुते, स भाष्योक्त-क्षुरपाटनादिदोषप्रदर्शनद्वारा समाधेय इति, सम्बन्धान्तरं निराकुरुते—**कार्यकारणेति** । न तावत् शब्दार्थयोः कार्यकारणभावः सम्बन्धः, उभयोर्नित्यत्वात् ।

ननु वर्णपदवाक्यादिस्फोटविकल्पाच्छब्दोऽव्यवस्थितः, अर्थोऽपि व्यक्त्याकृतिविकल्पादव्यवस्थित एवेति, गवाद्याकारं ज्ञानं गवादिशब्दः, तज्जनितं च गवाद्याकारं ज्ञानं गवाद्यर्थ इति, ज्ञानस्वरूपयोः शब्दार्थयोः कार्यकारण-भावसम्बन्धः किन्नोपपद्यते । न असम्भवेन निरालम्बनज्ञानस्य पूर्वमेव निरासात् नित्यविभुत्वादपि शब्दस्य, न संयोगादयः । युतसिद्धत्वाच्च न समवायः । भिन्नदेशत्वान्नाश्रयाश्रयिभावोपि इति ।

**भाष्यम् उच्यते यो हि अत्र व्यपदेश्यः सम्बन्धः तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च यः सङ्ग्नासङ्ग्निलक्षणः । आह यदि प्रत्यायकः शब्दः प्रथमश्रुतः किन्न प्रत्याययति । उच्यते सर्वत्र नो दर्शनं प्रमाणम् । प्रत्यायकः इति हि प्रत्ययं दृष्ट्वा अवगच्छामः न प्रथमश्रुतः इति प्रथमश्रवणे प्रत्ययमदृष्ट्वा यावत्कृत्वः श्रुतेन इयं संज्ञा अयं संज्ञीत्यवधारितं भवति, तावत्कृत्वः श्रुतादर्थावगम इति ।**

सिद्धान्तमाह उच्यते । यदि शब्दार्थयोः सर्वथाऽसम्बन्धस्स्यात्, तदा त्वदीयासम्बन्धसाधकानुमानप्रयोगो विफलः स्यात् । परप्रतिपत्तये शब्दः प्रयुज्यते, यदि च त्वदीयानुमानप्रयोगात्परोऽर्थं प्रतिपद्यते, तदा प्रतिज्ञा-विरोधः । असम्बद्धार्थस्य प्रतीत्यसम्भवेन सम्बन्धस्वीकारात् । अथ न प्रतिपद्यते, तदा प्रयोगवैयर्थ्यं लोकानुभवविरोधश्च । शब्दतो व्युत्पन्नस्य सर्वस्य बोधदर्शनात् । तस्माच्छब्दार्थयोः सम्बन्धः स्वीकार्यः ।

ननु सुहृद्भावेन भवत एव पृच्छामि शब्दार्थयोः कः सम्बन्ध इति । साधु पृच्छ्यते अवहितः शृणोतु भवान् । प्रत्यायप्रत्यायकभाव एव तयोः सम्बन्ध इति । ननु एतदपि तादृगेव, सति सम्बन्धे हि प्रत्यायप्रत्यायकभावो भवेत्, नासति । शब्दार्थप्रतीतौ सत्यां तस्य प्रत्यायकत्वम्, सति प्रत्यायकत्वे ततोऽर्थप्रतिपत्तिरिति प्रत्यायकत्वेनैव प्रत्यायकत्वं सम्बन्धं साधयन् भवान्

कथं नात्माश्रयादोषादुत्पद्यते । वाच्यवाचकभावः सम्बन्ध इति चेत् ? अलं पर्याय-शब्दोपादानाऽम्बरेण । कः पुनरसाविति पृष्टो न शक्ष्यति तदपि निर्वक्तुम् ।

ननु अलमावेगेन अवधार्य शृणोतु यावन्निर्णयम् । वाचकत्वमभिधायकत्वम् । वाच्यत्वमभिधेयत्वं घटादिशब्दोच्चारणानन्तरं घटाद्यर्थावबोधो भवतीति तावन्निर्विवादम् अत्र घटाद्यर्थावबोधफलको व्यापारः अभिधानक्रिया, तच्च शब्दज्ञानमेव, न तु परिस्यन्दादिः नित्यविभौ तदसम्भवात् । तदेवार्थावबोधफलतया निरूप्यमाणमभिधानक्रियेति कथ्यते । तस्यामेव क्रियायां तादृशबोधविषयतयाऽर्थस्य यत्कर्मत्वम्, तदेवाभिधेयत्वम् । इदमेव वाच्यत्वमपि । तस्यामेवाभिधानक्रियायां शब्देनार्थः प्रतीयते । शब्दोऽर्थं प्रत्याययति इति द्विविधविवक्षादर्शनात्, शब्दस्य यत् करणत्वम्, कर्तृत्वं वा, तदेव वाचकत्वमिति । न चैवं देवदत्तः पटं घटं चानयतीत्यादौ पटघटयोरेकानयनक्रियान्वयेन तयोरपि मिथः सम्बन्धः स्यात्, न चैतद् भवतीति एकाभिधानक्रियायां कर्मतयार्थस्य कर्तृतया शब्दस्यान्वयेऽपि कथं मिथः सम्बन्धः सिध्येदित्यलं समययापनेनेति वाच्यम् । परस्परमनपेक्ष्य क्रियान्वयिनामुद्देश्यानां मिथः सम्बन्धाभावेऽपि परस्परमपेक्ष्यैव क्रियान्वयिनां तूपादेयानां क्रियाद्वारा मिथो नियमसम्बन्धस्वीकारात् । तथोद्देशोपादेययोरप्यस्ति मिथः सम्बन्धः । उद्देशो हि घटाद्यर्थः स्वाबोधायाभिधाव्यापारमुपादत्ते, तं विना शब्देनार्थावबोधासम्भवात् । व्यापारश्च स्वांशभूतं शब्दमित्यस्ति शब्दार्थयोरेकाभिधानक्रियानियमात् सम्बन्ध.नियमश्च । यस्यामभिधानक्रियायां घटादिः करणं कर्ता वा, तस्यामेव क्रियायां पृथुबुध्नोदरादिरर्थः कर्म, यस्यां पुनरसौ कर्म तस्यामेव घटादिपदं करणं कर्तृ वेति ।

नन्वेवमपि एकस्यामभिधानक्रियायां कर्मतयार्थस्य, करणतया शब्दस्य सम्बन्धेन कर्मकरणकारकयोः शब्दार्थयोः कथं मिथः सम्बन्धः ? सत्यम् । न कारकाणां साक्षान्मिथः सम्बन्धः, क्रियायामेव साक्षादन्वयात्, तथापि पश्चात्तेषामपि क्रियाद्वारा सम्बन्धः स्वीक्रियते । स एवानेनोच्यते । यथा यजेत स्वर्गकाम इत्यादौ भावनायां साध्यतया स्वर्गस्य, साधनतया यागस्यान्वये पश्चाद् यागः उपकारकः, स्वर्गः उपकार्य इति तयोरुपकार्योपकारकभावः सम्बन्धः प्रतीयते; तथाभिधानक्रियायां शब्दस्य करणतया-

ऽर्थस्य कर्मतयाऽन्वये जाते, पश्चाद् व्यवहारोपयोगिनोऽर्थस्यावबोधसंस्कारं कुर्वन् शब्दः उपकारको भवति, अर्थश्चोपनार्थं इत्युपकार्योपकारकभावः। स एव नियमापरपर्यायो वाच्यवाचकभावलक्षणः सम्बन्ध इति।

नन्वेवं तर्हि शाब्दस्य नियमाधीनत्वादनुमानत्वापत्तिः ? वैषम्यात्। महानसादौ बह्निधूमयोः प्रत्यक्षेण साहचर्यनियमे गृहीते, पश्चात्तद्द्वारा-धूमस्य गमकत्वं गृह्यते, न त्वादौ गमकत्वमेव गृह्यते। शब्दे तु प्रयोजक-व्यवहारेण गमकत्वमेव गृह्यते, न सम्बन्धान्तरमित्यत एव शब्दस्य गमकत्वं सिद्धयति।

न चैवम्, ततोऽर्थावगमे तस्य गमकत्वं गमकत्वे गृहीते ततोऽर्थावगम इत्यन्योन्याश्रयः। पूर्वपूर्वप्रयोजकद्वारा उत्तरोत्तरस्य ग्रहणेऽन्योन्याश्रया-भावात्। न च प्रयोजकव्यवहारेण शक्तिग्रहोपगमे वाक्ये एव शक्तिः सिद्धयेन्न पदे इति पदस्य वाचकत्वानुपपत्तिः स्यादिति वाच्यम्। अयं शब्दो-ऽस्यार्थस्य वाचकः, अयमर्थोऽस्य शब्दस्य वाच्य इति शक्तिग्राहकव्यवहारेण तदुपपत्तेः। न च यत्र प्रयोजकवृद्धोच्चरितवाक्यात्तदर्थे प्रयोज्यवृत्ति-मुपलभ्याऽनुमानेन शक्तिग्रहो भवति, तत्र वाक्ये एव शक्तिग्रहः स्यात्, न पदे इति, तस्य वाचकत्वानुपपत्तिस्तत्राप्यन्वयव्यतिरेकाभ्यां गवादिशब्दस्य गोत्वादिवाचकत्वनिर्णयात्। न च लोके जात्याकृतिविशिष्टे गवादि-शब्दप्रयोगाद्विशिष्टवाचकत्वमेव गवादिशब्दस्य, न गोत्वादिवाचकत्वम्, तत्कथमुच्यते निष्कृष्टा गोत्वादिवाचकत्वं तस्य। अनेकजातिगुणद्रव्य-कर्मभेदविशिष्टगवाद्यर्थे व्यवजीहीर्षया गवादिशब्दो लोकैः प्रयुज्यते, तेषां शक्यलक्षणाविवेकाभावेऽपि सामान्यतो व्यवहारासिद्धेर्न तद्विवेकः ज्ञात्रे तु तत्प्रयोजनोपलम्भाद्विदुषां तद्विचार आवश्यक इति।

प्रयोजनं च बलाबलसिद्धिः सामान्यवाचकानां विशेषाभिधित्सया प्रयोगो लक्षणयैव यथा गोशब्दस्य हलवहनयोग्ये गवि, यथा वा आहवनीये जुहोतीत्यत्र होमसामान्यवचनो जुहोतिशब्दः पत्नीसंयाजेषु लक्षणया प्रवर्तते। तत्र विशेषवाचकेन गार्हपत्येन बाध्यते। सामान्यवाची शब्दः पूर्वं स्वार्थं सामान्यमभिधाय, पश्चात्तद्वशेन विशेषे लक्षणया प्रवर्तते इति विशेषा-पेक्षया पश्चात् प्रवृत्तिशीलस्य दुर्बलत्वम्, विशेषस्तु शीघ्रमेव स्वार्थं प्रत्यायय-

तीति सामान्यापेक्षया प्रबल इति । जातिमात्रवाचकत्वनिर्णयोपायस्त्वन्वय-व्यतिरेकविवेकः गोत्वशून्येऽश्वादौ द्रव्यत्वसत्त्वादेः सत्त्वेऽपि गोशब्दो न प्रयुज्यते, शावलेयादिव्यावृत्तेषु अपि बाहुलेयादिषु गोशब्दः प्रयुज्यते इति, गोत्वसत्त्वासत्त्वाभ्यां गोशब्दप्रयोगसत्त्वासत्त्वदर्शनाद् गोशब्दस्य गोत्ववाचकत्व-निर्णय इति । अर्थंप्रतिशब्दस्य गमकत्वे सिद्धे, तत एव तद्विशेषाभिधाय-कत्वमपि सिद्ध्यति ।

यत् सत्तामात्रेण स्वसम्बद्धं वर्तमानमर्थं गृह्णाति तदिन्द्रियम् । यत्तु व्याप्यतया ज्ञायमानं व्यापकं गमयति तल्लिङ्गम् । यत्तु गमकत्वावगमादेव गमयति, तदभिधायकमिति गमकविशेषा एव इन्द्रियलिङ्गशब्दा इति शब्दस्य गमकत्वमेवाभिधायकत्वमेतदेव च संज्ञासंज्ञिसम्बन्ध इति । तदाह भाष्ये संज्ञासंज्ञिलक्षण इति ।

ननु शब्दस्य स्वाभाविकप्रत्यायकत्वशक्तिस्वीकारे प्रथमश्रवणेऽर्थ-प्रत्ययापत्तिः । न चैवं दृश्यते, किन्तु अस्यार्थस्यैयं संज्ञेति पुरुषान्तरेण सम्बन्धे कृतेऽर्थबोधो भवतीति देवदत्तादिसंज्ञाशब्दवत् पौरुषेयत्वमेव वेदस्यापि । तथा चैवं प्रयोगः गवादिशब्दो न गोत्वादिवाचकशक्तिमान् सम्बन्धग्रहणात्पूर्वमप्रतिपादकत्वात् । देवदत्तादिशब्दवदिति । तदेतदाशंकते **यदि प्रत्यापक इति** । उत्तरमाह सर्वत्रेति यथा शब्दार्थव्यवहारदर्शनादर्थ-बोधौपयिकशक्तिः स्वीक्रियते, तथा तज्ज्ञानादेव शाब्दबोधदर्शनात् शक्तिः ज्ञानस्य सहकारित्वमपि इत्यभिप्रायेणाह—**सर्वत्र नोदर्शनमिति** । अन्वय-व्यतिरेकाभ्यां शक्तिज्ञानस्य सहकारित्वप्रदर्शनायान्वयमाह—**प्रत्यायक इति** । हीति व्यतिरेकमाह प्रत्यययमदृष्ट्वेति नावश्यमिहैव किन्तु अन्यत्रापीत्याह—

**भाष्यम्—यथा चक्षुः द्रष्टृ न बाह्येन प्रकाशेन विना प्रकाशय-तीति अद्रष्टृ न भवति । यदि प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि शब्दस्यार्थेन सम्बन्धः । कुतः ? स्वभावतो ह्यसम्बन्धावेतौ शब्दार्थौ । मुखे हि शब्दमुपलभामहे । भूमावर्थम्, शब्दोऽयं नत्वर्थः अर्थोयं न शब्द इति च व्यपदिशन्ति । रूपभेदोऽपि भवति । गौरितीमं शब्दमुच्चार-यन्ति सास्नादिमन्तमर्थमवबुद्ध्यन्ते इति । पृथग्भूतयोश्च यः सम्बन्धः, स कृतको दृष्टः यथारज्जुघटयोरिति ।**

**यथा चक्षुरिति** रूपादिसाक्षात्कारे चक्षुषः कारणत्वे आलोकं विना न चाक्षुषप्रत्यक्षमिति, तत्रालोकस्य सहकारित्वमेवं शाब्दबोधे शब्दस्य सहकारित्वमेवं शाब्दबोधे शब्दस्य सहकारिशक्तिज्ञानमिति, नैतद्विना प्रत्यायकत्वमिति, न सहकारिणा कारणशक्तिविपातः किन्तु तदुपकार एव ।

ननु कारणत्वाविशेषे कथं तद्विभागः? यत्फलं प्रति प्रत्यासन्नं तत्कारणम्, इतरत्तु सहकारि चक्षुषः प्रत्यासन्नत्वात् प्रत्यक्षं प्रति कारणत्वम्, बाह्यालोकस्य सहकारित्वम्, तदपेक्षया प्रत्यासन्नत्वाभावात् । क्वचित्तु विवक्षया बाह्यलोकस्यापि करणत्वम् ।

यथोक्तम् । उद्विग्नोह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि ।

किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मये(सं० ओ० श्लो० ३९)ति ।

ननु चक्षुरपेक्षयापि प्रत्यासन्नस्यात्ममनःसंयोगादेरेव करणत्वं युज्यते, न चक्षुषः । न सर्वज्ञानसाधारणकारणात्मनः संयोगाद्यपेक्षया तदसाधारण-कारणस्य चक्षुषोऽभ्यर्हितत्वात् । एवं लोकप्रसिद्धया शब्दस्य कारणत्वं शब्दस्य कारणत्वं शक्तिज्ञानस्य सहकारित्वं बोध्यम् ।

सम्बन्धस्य पौरुषेयत्वसाधने देवदत्तादिदृष्टान्तोऽपि साध्यविफलः तत्राप्यव्यक्तरूपेण शक्तेः स्वीकारात्, केवलं पुरुषेण ज्ञाप्यते नतूत्पाद्यते । शक्त्युत्पादने पुरुषसामर्थ्याभावादिति भावः ।

अस्तु शब्दार्थयोः सम्बन्धः, स तु कृतक एव । न नित्यः । यदि संज्ञात्वातिरिक्तः कश्चन शब्दार्थयोः सम्बन्धः, स्यात्, तदा स नित्यो-भवेदपि, स तु नास्तीत्याह—**स्वभावतो हीति** । सर्वस्य हि सम्बन्धोऽभिन्न-देशकालत्वे सम्भवति । न चानयोः कथंचिदभेदः । देशभेदं दर्शयति—**मुखे हि शब्दमुपलभामहे भूमावर्थं** स्वरूपतोपि भेदं दर्शयति—**शब्दोऽयं न त्वर्थः अर्थोऽयं न शब्दः** इति । शब्दार्थयोर्विशेषभेदं दर्शयति—**गौरितीमंशब्दमु-च्चारयन्ति सास्नायिमन्तमर्थमवबुध्यते इति** । सम्बन्धो हि मीमांसकमते कथञ्चिदभिन्नयोरेव, ययोस्तु सर्वात्मना भेद एव प्रतीयते, तयोर्न स्वाभाविकः सम्बन्धः, किन्तु कृतकः । तद्दर्शयति—**यथारज्जुघटयोरिति** । तथा च स्वाभाविकसम्बन्धाभावात् शब्दार्थयोः पौरुषेय एव सम्बन्धः स्यादिति नाती-न्द्रियार्थे शब्दस्यापि प्रामाण्यमित्याक्षेप्तुरभिप्रायः ।

**इति कल्पकलिकायां सम्बन्धाक्षेपवादः**

**भाष्यम्—अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इतिभगवानुपवर्षः। श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः। ते च श्रोत्रग्रहणाः।**

शब्दस्वरूपणनिरूपणाय पृच्छति-**अथ गौरित्य कः शब्द इति**। नन्वसरप्राप्तं शब्दार्थंसम्बन्धनित्यत्वनिरूपणमुपेक्ष्य, शब्दस्वरूपनिरूपणं किमर्थं क्रियते? तस्येदानीमजिज्ञासितत्वादिति चेत्? सत्यम्। सम्बन्धनिरूपणं सम्बन्धिनिरूपणाधीनम्, असति सम्बन्धिनि सम्बन्धायोगात्। संगिरन्ते हि वैयाकरणा वर्णातिरिक्तस्फोटं नाम शब्दम्। स च न प्रत्यक्षेणोपलभ्यते, अनुपलभ्यमानं च शशविषाणवन्नास्तीति, कथं सम्बन्धः स्यात्? कथं च तस्य नित्यत्वमिति। सम्बन्धनित्यत्वप्रतिपिपादयिषया सुखावबोधाय वर्णात्मकस्यैव शब्दत्वं बृद्धसंमत्या दर्शयति—**गकारौकारविसर्जनीया इति**। भगवानुपवर्ष इति उपवर्षग्रहणमादरार्थम्, न तु परमतमिदमिति सूचनार्थमिति। ये तु वैयाकरणा दृष्टविरुद्धं वर्णातिरिक्तं स्फोटं कल्पयन्ति, तेभ्यः कः स्वयमुत्तरं दातुमर्हति। न च तैरपि शब्दं कुरु, शब्दं माकार्षीः, शब्दकार्ययं माणवक इत्यादिलोकप्रत्यक्षानुसारेण पूर्वं वर्णा एव शब्द इति स्वीकृत्य पश्चात्तेभ्योऽर्थावबोधो न सम्भवतीत्यालोच्य स्फोटात्मकः शब्दः कल्पितः। तथैव मीमांसकैरपि व्याख्येयं किं प्रत्यक्षपरीक्षयेति चेत्? न। शब्दस्वरूपनिर्णयाय प्रत्यक्षस्य समर्थत्वात् बलाबलत्प्रमाणान्तराभावाच्च यदि प्रत्यक्षमत्राऽसमर्थं स्याद्, यदि वा बलवत्कारणान्तरं स्यात्, त्तदा वर्णारतिक्तः शब्दः सिद्धयेत्तच्च प्रकृते नास्तीति वर्णात्मकस्यैव शब्दत्वं प्रत्यक्षतो लभ्यते। तथा च श्रोत्रग्राहकत्वमेव शब्दसामान्यलक्षणम्, न प्रत्यायकत्वम्। तस्य धूमादावपि सत्त्वेन व्यभिचारित्वात्तदाह—**श्रोत्रग्रहणे हीति**। श्रोत्रग्रहणा इति श्रोत्रेण गृह्यन्ते इति। यद्वा गृह्यतेऽनेनेति ग्रहणं श्रोत्रग्रहणं येषामिति बहुव्रीहिरिति बोध्यम्। न च घटादौ प्रत्यक्षत्वस्य सावयवत्वेन व्याप्तत्वाद् वर्णानामपि प्रत्यक्षत्वेन सावयवत्वानुमानं स्यादिति वाच्यम्, प्रत्यक्षत्वस्य गुणादौ व्यभिचारात् एतेन वर्णेषु पुद्‌गलाख्यानवयवानिच्छन्तः सौगता पराबभूवुरिति। अनेकदेशगतत्वेऽपि स एवायं गकार इत्यबाधितप्रत्यभिज्ञया तस्यैकव्यक्तित्वमेव व्योभवत्। अतो न गत्वादिजातयोपि।

ननु व्यक्तिभेदाभावे अयं द्रुतो गकारः, अयं विलम्बित इति बुद्धिभेदो न स्यादिति चेत्, न। व्यञ्जकध्वनिभेदनिबन्धनानां द्रुतविलम्वादिधर्माणां भेदाद् वर्णभेदोपपत्तेः सौर्यादिधर्मभेदनिबन्धनदेवदत्तादिधर्मिभेदवत्। न च द्रुतादिविरुद्धधर्मभेदेन धर्मिभेद एव किन्न स्वीक्रियते। नीलादिभेदेन घटादिव्यक्तिभेदवत् त्वन्मतेऽपि गत्वादिषु द्रुतबिलम्वित्वादिभेदभानेपि गत्वादिभेदानङ्गीकारवन्ममापि व्यञ्जकव्यक्तिभेदानङ्गीकारात्। एतावान् परं विशेषः त्वन्मते व्यञ्जकगकारव्यक्तिभेदाद्गत्वे भेदभानं, मन्मते व्यञ्जकध्वनिभेदात् गकारव्यक्तौर्भेदावभास इति। गत्वादिजातिकल्पनागौरवं तवाधिकं नित्यत्वं सर्वगतत्वमेकत्वं चास्माभिर्व्यक्तौ कल्प्यं, त्वया तु एतत्सर्वं जातिं प्रकल्प्य, तत्र कल्पनीयं स्यादिति, धर्मिकल्पनापेक्षया धर्मकल्पनैव लघीयसी, धर्मस्य प्रत्येकसमवायित्वकल्पनापि नास्माकमित्यपरमनुकूलम्।

ननु गकारानुवृत्तव्यावृत्तबुद्धेः श्रोत्रेन्द्रियजन्यत्वाद् श्रोत्रग्राह्य एव विषयो वाच्यः। मन्मते गत्वजातेर्गकारव्यक्तेश्च श्रोत्रत्वात्सः बुद्धिरुपपद्यते, त्वन्मते नादस्य वायवीयत्वेनातीन्द्रियत्वात् कथमेतदुपपत्तिरिति चेत् ? न। नादसंस्कृतश्रोत्रेण तत्प्रत्यक्षत्वोपगमात्।

अयं भावः नादो न वायुः न वा तत् संयोगविभागात्मा, अपि तु वायुगुणः शब्दविशेषो नादः, स च द्विविधः—परिस्फुटवर्णात्मा, अपरिस्फुटवर्णात्मा च। आद्यो मनुष्यशब्दः, यत्र गकारादयः स्फुटमुपलभ्यन्ते। द्वितीयः शङ्खवीणादिनादः, तत्र वर्णानां स्फुटमनुपलम्भात्। शब्दत्वं पुनरुभयत्रानुगतं लक्ष्यते। ध्वन्यात्मकः शब्दः गकारादीनामभिव्यञ्जकः प्रभारूपमिव भावान्तराणाम्। स च नादः श्रोत्रदेशमागत्य श्रोत्रेन्द्रियं संस्करोति, संस्कृतेन श्रोत्रेण कदाचिदसौ वर्णानभिव्यञ्जयन् तैः सह गृह्यते। कदाचिद्वर्णरहितः स्वयमेव केवलं गृह्यते। यथा वीणादिध्वनौ शब्दोच्चारणे नादोपलब्धिः सर्वानुभवसिद्धा। दूरोच्चारितशब्दे वर्णरहितः केवलनाद, एव प्रतीयते, तथा दूरादापणादि शब्दश्रवणेपीति, न तिरोहितं सचेतसाम्।

अथवा अयं महान् शब्दः, अयमल्प इत्यादि प्रतीत्या महत्त्वाल्पत्वयोरपि शब्दे भानं दृश्यते। ते च गुणस्वरूपे इति, न साक्षात् शब्दे वर्तितुमर्हतः। गुणे न गुण इति तेषां सिद्धान्तात्। तथा च वैशेषिकैरपि शब्देऽविद्यमानमेव

महत्त्वादि नादसंस्कारानुरूपया धिया गृह्यते इत्येव वाच्यम् । तथास्माभिरपि श्रोत्रं प्राप्य क्षिप्रमन्यतोऽपसृतेषु नादेषु तत्संस्कारस्य श्रोत्रे स्वल्पकालमवस्थानाच्छब्दोऽपि क्षणमाविर्भूय तिरोभवन् द्रुत इति गृह्यते इति व्यञ्जकधर्माणां द्रुतादीनां व्यङ्ग्ये शब्दे भ्रान्त्यारोप इति सर्वं चतुरस्रम् । तथाचोक्तं—

'मधुरं तिक्तरूपेण श्वेतं पीततया तथा ।
गृह्णन्ति पित्तदोषेण विषयं भ्रान्तचेतसः ।।
मण्डूकवसयाऽक्ताक्षा वंशानुरगबुद्धिभिः ।
व्यक्तयल्पत्वमहत्त्वाभ्यां सामान्यं च तदाश्रयम् ।।' इति ।।

अथास्तु नादधर्मो द्रुतादिः, ह्रस्वत्वादिस्त्वकारादिधर्म एवाङ्गीकर्तव्योऽन्यथालिङ्गाभासजानुमानवत्तन्निमित्तकबुद्धेरपि अगमनमागमनमित्यादौ भ्रान्तिः स्यात् । तथा च ह्रस्वदीर्घाद्यकारानुवृत्तप्रत्ययानुरोधेनात्वजातिस्वीकार आवश्यक इति वर्णभेदः स्फुट इति चेत् ? न । उच्चारणधर्मस्य ह्रस्वत्वादेर्वर्णधर्मतया भानस्य भ्रमत्वात्, वर्णानां नित्यत्वे न स्वतो ह्रस्वत्वादिभेदस्य विरोधादेव वक्तुमशक्यत्वात् । वृद्धव्यवहारेणारोपितह्रस्वत्वादि विशिष्टे एव सम्बन्धग्रहान्न अगमनमागमनमित्यादौ तज्जनितबुद्धेर्भ्रमत्वम् । आरोपितस्फटिकारूण्यानुमितजपाकुसुमसान्निध्यबुद्धिवत् । तत्रारोपिते एव सम्बन्धग्रहणात्, एवमिहापि उच्चारणधर्मह्रस्वत्वाद्यारोपविशिष्टे एव सम्बन्धग्रहान्न तज्जनितबुद्धेर्भ्रमत्वम् । लिङ्गाभासे तु न तेन रूपेण सम्बन्ध ग्रह इति युक्तं तज्जनितबुद्धेर्भ्रमत्वम् । अत एव ह्रस्वदीर्घयोरेक एवायमकारः उच्चारणप्रयत्नगताल्पत्वमहत्त्वाभ्यां भिन्न एव प्रतीयते इति प्रत्यभिज्ञापि संगच्छते ।

एवमुदात्तादिरपि दीर्घादिवन्न वर्णधर्म इति न तद्भेदादपि वर्णभेदः, न च वर्णान्तराभिव्यञ्जकध्वनिभेदवत् द्रुतादिह्रस्वाद्युदात्ताद्यभिव्यञ्जकध्वनिभेदः कल्पनीयः स्यात्, तथा च तदपेक्षया वर्णभेद एव किन्न कल्प्यते इति वाच्यम् । एकजातीयवर्णाभिव्यक्तये एकजातीयध्वनीनामेवाभिव्यञ्जकत्वस्वीकारेण तद्गतमृदुत्वतीव्रत्वादिवशादेव द्रुतत्वादिभेदोपपत्तेः तदर्थं व्यञ्जकध्वनिभेदानङ्गीकारात् । न च वर्णनित्यत्वाभिधानं स्वपक्षाभिनिवेशेन, किन्तु न्याय्यत्वादेवमभिहितम् ।

गकारौकारविसर्जनीया इति भाष्यस्य गत्वादितात्पर्येणापि व्याख्यातुं शक्यत्वादिति दिक् ।

वर्णातिरिक्तशब्दानभ्युपगमेऽर्थप्रत्ययानुपपत्तिमाशङ्कते यद्येवमिति भाष्यम् ।

**भाष्यम्—यद्येवम् अर्थप्रत्ययो नोपपद्यते कथम्, एकैकाक्षरविज्ञाने अर्थो नोपलभ्यते ।**

अयं भावः—न तावत्क्रमेणाभिव्यक्तैर्गकारादिभिरवयवैरवयवी गोशब्द आरब्धुं शक्यते, तावतामवयवानामेकदाभिव्यक्त्यभावेन साहित्यानुपलब्धेः । सत्तया तदारम्भकत्वे तु सर्वदा तदारम्भः स्यात्, वर्णानां नित्यत्वात् विभुत्वाच्च । यथा अनित्यत्ववादिनां क्रमेणोच्चरितापवर्गिणां वर्णानामेकदावस्थानाभावेन साहित्याभावान्नावयव्यारम्भकत्वं, तथा नित्यत्ववादिनामपि अनभिव्यक्तानामारम्भकत्वे सर्वदा तदारम्भापत्त्याऽभिव्यक्तानामेवारम्भकत्वं वाच्यमिति, एकदा तेषामभिव्यक्त्यभावेनोपलब्धिकृतसाहित्याभावादनारम्भकत्वमेव वर्णानामिति भावः । किं चावयविनः सर्वत्रावयवपरिमाणाधिकपरिमाणदर्शनाद् विभूनां वर्णानां परिमाणाधिक्यं न कस्यापि परिमाणस्य सम्भवतीति नावयविनः समारम्भोवर्णैरिति । अवयविनिरासादेव गोशब्दत्वमपि गत्ववन्निरस्तं वेदितव्यम् । धर्मिणोऽभावे तद्धर्मसम्भवाभावात् । न च गोशब्दत्वसामान्यानभ्युपगमेऽवयविनो गोशब्दस्य प्रत्युच्चारणं भेदात् पूर्वोत्तरदिनोच्चरितगोशब्दयोर्गोशब्दत्वनिबन्धनानुवृत्तप्रत्ययो न स्यादिति वाच्यम् । इष्टत्वात् । अत्र गोशब्दद्वये समानक्रमाभिव्यक्तगकारादिवर्णैरेवानुवृत्तप्रत्ययोपपत्तेरिति ॥

अवयविवद् वर्णातिरिक्तः समुदायोऽपि निरसनीयः । एकार्थप्रतिपादकत्वरूपोपाध्यवच्छिन्नस्य तावद्वर्णसमूहस्य गौरित्येकः शब्दः इत्यादिव्यवहारसम्पादनक्षमत्वात् । ननु न वर्णानामर्थप्रत्यायकत्वं संभवति । तथा हि किन्ते प्रत्येकमर्थं प्रत्याययन्ति, संहत्य वा । नाद्यः प्रत्येकमर्थबोधादर्शनात् । नान्त्यः क्रमेणाभिव्यक्तानां तेषां साहित्यासम्भवात् । क्रमेण व्युत्क्रमेण चोच्चरितेभ्यः तावद्वर्णेभ्यो जराराजेत्यादौ समानबोधापत्तेः चेति चेत् ? न । यादृशक्रमानुपूर्वी विशेषविशिष्टेषु वृद्धव्यवहारादिनार्थं-

प्रत्यायनसामर्थ्यमुपलब्धं, तादृशक्रमादिविशिष्टानामेव वाचकत्वस्वीकारेण क्षतिविरहात् । नहि कश्चिदेकदा तावद्वर्णानुच्चारयितुं क्षमते इति, अवश्यभावी क्रमो विवक्ष्यते वाचकत्वग्रहे इति, तादृशक्रमस्यापि शब्दादर्थप्रत्ययेऽङ्गत्वमिति न व्युत्क्रमोच्चरितस्थले समानबोधापत्तिः । न च क्रमसाहित्ययोर्मिथोविरोधात्साहित्यलाभाय यौगपद्याश्रयणमेवयुज्यते इति वाच्यम् । असम्भवेन साहित्यत्यागात् । क्रमवतां संहत्यकारित्वमाग्नेयादिषु दृष्टमिति, न दृष्टविरुद्धं तत् ।

न च तत्र भिन्नकालवर्तिनामाग्नेयादीनां क्रमवतामपूर्वान्तरव्यापारद्वारा परमापूर्वसाधने साहित्यमस्त्येव, न तदभावः । वर्णेषु तादृशावान्तरव्यापारादर्शनान्न साहित्यमिति वैषम्यात्कथमाग्नेयवदेषां संहत्यकारित्वमिति वाच्यम् । फलानुमेयानामतीन्द्रियव्यापाराणां तत्रापि सत्त्वात् । यथा क्षीरपानादिजन्यसंस्काराणां स्वरूपतोऽदर्शनेऽपि पुष्टिकार्यदर्शनेन सद्भावोऽनुमीयते, एवमर्थावबोधदर्शनेन वर्णावान्तरव्यापाराणामपीति । न च वर्णावान्तरव्यापाराणां बोधाख्यफलानुमेयत्वे बोधात्प्राक् तदनुमानज्ञानाभावाद् गामभिधत्ते चैत्र इत्यादौ वर्तमानतया कथं तद्व्यपदेशः ? फलोत्पत्तेः प्राक् सत्त्वेऽपि तदज्ञानात् फलोत्पत्त्यनन्तरमतीतत्वादिति वाच्यम् । फलदर्शनेन वर्तमानत्वानुमानात् । तदेतत्सर्वमभिप्रेत्याह भाष्ये—**यद्येवमिति** । प्रत्येकं वर्णानां नार्थबोधकत्वम्, अनुपलम्भात् । समुदायस्य वाचकत्वन्तु दूरपराहतं, वर्णातिरिक्तसमुदायाभावादित्याह—

**भाष्यम्—नचाक्षरव्यतिरिक्तोऽन्यः कश्चिदस्ति समुदायो नाम । यतोऽर्थप्रतिपत्तिः स्यात् । यदा गकारः, न तदा औकारविसर्जनीयौ यदा औकारविसर्जनीयौ न, तदा गकारः । अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति, यतोऽर्थप्रतिपत्तिः स्यात् ।**

न चाक्षरेति । तथा चासत्त्वादेव न ततोऽर्थप्रत्ययाशेत्याह—यत इति । न च माभूदवयवातिरिक्तः समुदायः, संहत्यैव वर्णा अर्थप्रत्ययं कुर्वन्तु ग्रावाण इव पिठरधारणमित्याशङ्क्य क्रमेणाभिव्यक्तिशालिनां वर्णानां न संघात इति निराकुरुते—**यदागकार इति**। तथा चार्थप्रत्ययानुरोधेन वर्णातिरिक्तः कश्चन स्फोटाख्यः शब्दः स्वीकार्यः यतोऽर्थप्रतीतिरुपपद्येतेत्याह

अतो गकारेति । ननु स्फोटकल्पनायामपि न निस्तारः, तत्रापि एकैकस्य-वर्णस्य स्फोटाभिव्यञ्जकत्वं, समुदायस्य वेति विकल्पप्रसक्तेः । आद्य एकेनैव वर्णेन स्फोटस्याभिव्यक्तत्वाद्वर्णान्तरवैयर्थ्यम् । नान्त्यः । तावत्समुदायस्यै-कदाऽसम्भवात् ।

ननु एकैकस्य नादस्य स्फोटाभिव्यञ्जकत्वेऽपि नोत्तरनादवैयर्थ्यम् । पूर्वनादैरस्फुटोऽभिव्यक्तः तदुत्तरेण स्फुटतरस्तदुत्तरेणापि स्फुटतम इत्येवं विशेषतोभिव्यक्तये तत्साथंक्यात् ।

मैवं । तथासति यैर्नादैः स्फुटतमो भवति, स एव क्रियासमभिहारेणा-ऽऽवर्तनीयः । किमस्फुटाभिव्यञ्जकनादानुवर्तनक्लेशेन । न च न केनाप्येकेन नादेन स्फुटोभिव्यज्यते, किन्तु प्रत्येकं सर्वैरभिव्यज्यमानः, तथापि न सहसा प्रथमं स्फुटो भवति, अपितु पुनः पुनः श्रूयमाणो यथा दूरादवस्थितः सहकारः प्रथमं हस्तिपलालकूटादिसाधारणरूपेण प्रतिभाति । पुनरालोच्यमानो-वृक्षात्मना प्रकाशते, पुनस्सहकारात्मना स्फुटो भवति, तद्वदेव द्रष्टव्यम् ।

मैवं प्रत्यक्षविषये ईदृशी गतिर्भवति, दूरादिदोषेणागृहीतविशेष-स्योत्तरोत्तरप्रत्यक्षेण विशेषग्रहणात्, प्रकृते तु स्फोटे विशेषाभावाद् य एव एकेन नादेनाभिव्यक्तः, स एवापरेणापीति शतकृत्वोऽप्यभ्यासे विशेषग्रहणा-सम्भवादिति दिक् ।

ननु क्रमेणाभिव्यक्तानां वर्णानां युगपदवस्थानाभावान्मास्तु वाचकत्वं, तावद्वर्णविषयकस्मृतेरेव वाचकत्वमस्तु, तत एवार्थप्रतीतिरित्याशंक्य निराकुरुते—**अन्तर्हिते इति** । विलीन इत्यर्थः ।

**भाष्यम्—अन्तर्हिते शब्दे स्मरणादर्थप्रतिपत्तिश्चेत् । न । स्मृतेरपि क्षणिकत्वादक्षरैस्तुल्यता । पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्या-यक इत्यदोषः ।**

येनैव क्रमेण वर्णा अनुभूताः तेनैव क्रमेण स्मरणं जनयन्तीति नियमात् प्रत्येकवर्णानुभवाहितंसंस्कारजन्यानां तावत्स्मृतीनामपि क्षणिकत्त्वेन समा-हारासम्भवस्तुल्य इत्याह—**अक्षरैस्तुल्यतेति** ।

सिद्धान्तमाह—**पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इति** । ननु सर्वेषां वर्णानां प्रत्यायकत्वे सिद्धे साक्षात्साहित्याभावात्

परम्परया तत्सम्पादनाय संस्कारकल्पना स्यादपि । तत्तु नाव्यवधानादन्तिमवर्णस्यैव वाचकत्वस्वीकारादिति चेत् ? न । अन्तिमस्यैव प्रत्यायकत्वे तत एवार्थबोधसम्भवादितरोच्चारणवैयर्थ्यापत्तेः, अतः सर्वेषां प्रत्यायकत्वम् । आनन्तर्यन्तु बहुषु एकस्यावर्जनीयम्, इतरेषां च व्यवधानमिति, न व्यवहितस्य हेतुत्वम् ।

अथवा द्व्येकान्तरितयोर्गकारौकारयोः, अव्यवहितस्य च विसर्गस्यार्थप्रत्यायनसामर्थ्यं, नान्यथेति व्यवधानं विवक्षितमेव ।

ननु यथा एकस्यां सिकतायां तैलजननसामर्थ्यं नास्ति, तत्समुदायस्य खारीशतस्यापि तन्नास्ति, एकोऽन्धः दर्शनासमर्थस्तच्छतमप्यसमर्थमितिवदेकैकस्य वर्णस्यार्थप्रत्यायनसामर्थ्यविरहे, त एव समुदाय इति कथं तत्र तत्सामर्थ्यम् ।

न । एकैकस्य पुरुषस्य शिविकावहनसामर्थ्यविरहेऽपि तत्समुदायस्य पुरुषचतुष्टयस्य तत्र सामर्थ्यमिव वर्णसमुदायस्य तदङ्गीकारात्, न । तत्रापि किञ्चित् सामर्थ्यमस्त्येव, प्रकृतेऽपि तदङ्गीकारे बाधकाभावात् ।

स्फोटवादिनामपि एते दोषा समाः । अत एव **शब्दकल्पनायां, सा च, शब्दकल्पना चेति** भाष्य उक्तमिति । न च यदि स्फोटवदत्रापि दोषः, तर्हि तत् परित्यागे किं बीजम् । स्फोटसाधकप्रमाणविरहः, वर्णातिरिक्तकल्पनापदस्य सावयवत्वेन प्रतीतस्य विपरीतनिरवयवत्वकल्पना च । तस्मात् स्फोटाभिव्यक्तयेऽपेक्षितांशोऽर्थप्रत्ययार्थ एवाश्रयणीय इति । भाष्ये संस्कारशब्देन प्रोक्षणजन्यनिष्ठातिशयवत् पूर्वपूर्ववर्णोच्चारणजन्यान्तिमवर्णनिष्ठोऽतिशयविशेषो विवक्षितः । तथा च तादृशातिशयं विनान्तिमो वर्णो नार्थबोधाय प्रभवतीति, तदर्थं पूर्ववर्णानां सार्थक्यम् ।

अथवान्तिमवर्णनिष्ठं पूर्ववर्णानन्तरवृत्तित्वमेव भाष्ये संस्कारशब्देन विवक्षितम् । तेनैवान्तिमस्यानुग्रहाख्यं सामर्थ्यं पूर्ववर्णैः कृतमित्यदृष्टसंस्कारकल्पना न कार्या ।

वस्तुतस्तु भाष्ये संस्कारशब्देन वासनारूपएवार्थो गृह्यते, तस्य तत्रैव रूढेः । अनुभवजन्यः संस्कारो भवतीत्यत्र न कस्यचिद् विवादः । यथाहुः 'वस्तुधर्मो ह्येष यदनुभवः पटीयान् स्मृतिबीजमाधत्ते इति । तथा च

संस्कारस्वरूपे न कस्यचिद् विमतिः, तस्यार्थप्रत्ययहेतुत्वे परं विवादः। तत्र स्मृतिजननसामर्थ्यमिव स्मृतिकारणीभूतानुभवजननसामर्थ्यं न दुर्वचम्।

ननु स्मृतिहेतोः संस्कारस्य कथमर्थप्रत्ययसामर्थ्यम्। एकस्मिन्नप्यनेकसामर्थ्यस्य कर्मवत् संयोगविभागयोरित्यत्र वक्ष्यमाणत्वात्। न च संस्कारेऽदृष्टस्यार्थप्रत्ययहेतुत्वस्य कल्पना तवाधिका, तवापि संस्कारस्य स्फोटाभिव्यक्तिं प्रति सामर्थ्यकल्पनाधिकैव। अपि च यथा मया संस्कारस्यार्थप्रत्ययहेतुत्वं कल्प्यते, तथा भवता स्फोटस्यार्थप्रत्ययहेतुत्वं कल्प्यते इत्यदृष्टांशकल्पना समा स्फोटाभिव्यक्तिं प्रति संकारहेतुत्वकल्पना परं तवातिरिच्यते। एवञ्च संस्कारस्य भवत्पक्षे आवश्यकतया तत एवार्थप्रतीत्युपपत्तौ स्फोटकल्पना गौरवान्नादर्तव्या।

न च स्फोटाभिव्यञ्जकैः संस्कारैरेवार्थप्रत्ययमङ्गीकृत्य स्फोटप्रत्याख्यानवद् वर्णाभिव्यञ्जकनादैरेवार्थं प्रतीत्य वर्णानामपि प्रत्याख्यानं किन्न स्यादिति वाच्यम्। नादा अपि यदि वर्णवत् प्रत्यक्षाः स्युः वर्णा वा स्फोटवदप्रत्यक्षाः। तदेतदुभयं नास्ति, नादानाम् अप्रत्यक्षत्त्वाद्वर्णानां च प्रत्यक्षत्वादत एव गकारादीन्येव प्रत्यक्षाणीति भाष्ये उक्तमिति।

यद्वा मास्तु अन्तिमवर्णे व्रीह्यादिनिष्ठातिशयवत् संस्कारान्तरं संस्कारस्य स्मृतिव्यतिरिक्तहेतुत्वं च, वर्णा एव यौगपद्येनार्थं प्रत्याययन्ति इत्येवाभ्युपगमः श्रेयान्। न च क्रमेणाभिव्यक्तानां कथमेकत्र ज्ञाने यौगपद्यम्। प्रत्यक्षज्ञाने तेषां यौगपद्यविरहेऽपि तावद् वर्णविषयकप्रत्यक्षानन्तरजायमानस्मरणे तद् यौगपद्यसत्त्वात्। प्रत्यक्षगृहीतयोगपद्यस्यैवार्थप्रत्ययाङ्गत्वे मानाभावात्।

तावद्वर्णविषयकस्मृतिश्च द्विधा—सदसद्वर्णगोचरा चित्ररूपा, समस्त वर्णविषया च, आद्या चरमवर्णश्रवणवेलायां पूर्वपूर्ववर्णानामुपलब्धत्वेन स्मरणाभ्युपगमात्। पूर्वपूर्ववर्णस्मृतिस्वरूपचरमवर्णोपलब्धिः चरमवर्णविषये सद्रूपा पूर्ववर्णानामतीतत्वेन तद्विषयेऽसद्रूपेति चित्राबुद्धिः सदसद्वर्णगोचरत्वेनोभयरूपा। अपरा च चरमवर्णोपलब्ध्यनन्तरतावद्वर्णविषयस्मृतिरियञ्च चरमवर्णविषयेऽपि स्मृतिरूपैवेति भेदः।

ननु येन क्रमेणानुभवस्तेनैव क्रमेण स्मरणस्यौचित्यात् क्रमेणानुभूतानां तावतामक्षराणां, कथं युगपत् स्मरणमिति चेत् न। तथा नियमे भानाभावाद्, अन्यथा अयमेकोऽयमेक इत्यपेक्षाबुद्धया क्रमेण गृहीतानामेकदा-स्मरणाभावात् शतादिसंख्या परिच्छेदो न स्यादिति। येन क्रमेण वर्णा उच्चार्यन्ते, तेनैव क्रमेणोपलभ्यन्ते, तेनैव च स्मर्य्यन्ते युगपदप्रतीति नियमाद्वर्णानां नित्यविभूनां स्वतःक्रमाभावेऽपि उपलब्धिक्रमारोपात् क्रमवत्वमिति, स्मरणेऽपि तदारोयात् तादृशक्रमशालिन एव प्रतीयन्ते। तथैव प्रतीयमानाश्चार्थप्रत्यायका इति न व्युत्क्रमोच्चरितेभ्योऽर्थप्रत्ययप्रसङ्ग इति।

अस्मिंश्च पक्षे शब्दादर्थं प्रतिपद्यामहे इति लौकिकं वचनमुपपन्नतरं स्मृतिस्थितानामेव वर्णानामर्थप्रत्यायकत्वं चरमवर्णांशे प्रत्यक्षरूपयाऽनया चित्रबुद्धया भ्रान्ता वैयाकरणाः गौरित्येकं पदमिति व्यवहारसिद्धये गकारादि-वर्णव्यतिरिक्तः प्रत्यक्षागोचरः स्फोटः शब्द इति कल्पयामासुः। तच्चित्र-बुद्धयनुरूपमेव तैः कल्पितमिति नाति चित्रीयते। अस्याश्चरमवर्णांशे प्रत्यक्षत्व-दर्शनमेव तेषां स्फोटप्रत्यक्षत्वकल्पनायां बीजम्। न चातिरिक्तस्फोट-कल्पनाभावे गौरित्येकं पदमिति व्यवहारो न स्यात्, व्यवहारे विषयस्य हेतुतयावयवेषु एकत्वाभावादिति, वाच्यम्। एकार्थवाचकत्वैकबुद्धि विषयत्वादिनैव तादृशव्यवहारोपपत्तिसम्भवे दृश्यादर्शनबाधितार्थान्तकल्पनाया अन्याय्यत्वात्।

न चेदं न व्यवहारमात्रं, येन धर्मान्तरेणाप्युपपाद्यते, किन्तु एक व्यक्तिविषयिणी हीयं बुद्धिर्व्यक्त्यैक्यमेवावगाहते इति वाच्यम्। गौरित्य-त्राऽज्झलोः सम्भेदादेकत्वबुद्धेर्भ्रमत्वाद् विदुषां वर्णभेदप्रतीतेः देवदत्तादि-पदे सर्वेषां वर्णभेदावगमाच्चेति भावः।

**भाष्यम्——नन्वेवं शब्दादर्थं प्रतिपद्यामह इति लौकिकं वचनमनुपपन्नं स्यात्। उच्यते—यदि नोपपद्यते अनुपपन्नं नाम। न हि लौकिकं-वचनमनुपपन्नमित्येतावता प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्यते उपगन्तुम्। लौकिकानि वचनानि उपपन्नार्थानि, अनुपपन्नार्थानि च दृश्यन्ते। यथा देवदत्त गामभ्याज इत्येवमादीनि, दशदाडिमानि षड् अपूपाः, इत्येवमादीनि च।**

स्फोटवादी शङ्कते—**नन्वेवं शब्दादिति** । स्फोटानभ्युपगमे शब्वादर्थं प्रतिपद्यामहे इति नोपपद्येत किन्तु चरमवर्णादर्थं प्रतिपद्यामहे इति स्यात्, न चैतद् दृश्यते । तस्माल्लोकवचनानुरोधेन स्फोटकल्पनमेव श्रेय इति । उत्तरमाह सिद्धान्ती—**उच्यते इति** । अप्रामाणिकार्थकल्पनापेक्षया लोकवचनानुपपत्तिरेव श्रेयसीत्यभिप्रायेणाह **यदीति** । लोकवचनानुरोधेनार्थकल्पनायां महती दुरवस्था स्यात् । तदाह—**नहीति** । उभयविधानि लोकवचनानि दृश्यन्त इति । सोदाहरणमाह—**यथा देवदत्त इति** । इदमुपपन्नार्थम् । अनुपपन्नार्थमाह **दशदाडिमानीति** । यद्यपीदमेकैकं नानुपपन्नार्थकं, दशदाडिमानि षडपूपेति वाक्यद्वयस्य पृथगुपपन्नार्थत्वात् । तथापि मिलितमनुपपन्नार्थमेवैकवाक्यार्थाभावात् । तदिदं अर्थवत् सूत्रे महाभाष्यकारोक्तानर्थकवाक्यैकदेशभूतमित्याह **इत्येवमादीनीति** ।

'जरद्गवः कम्वलपादुकाभ्यां द्वारिस्थितो गायति मङ्गलानि ।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन्नुमायां लसुनस्य कोऽर्थः ॥'

इत्यादीन्यपि बोध्यानि ।

लौकिकवचनानादरेऽपि शास्त्रीयवचनोपपत्तये स्फोटकल्पनावश्यकीत्यभिमानेन पूर्वपक्षी शङ्कते—**ननुचेति** ।

**भाष्यम्—ननु च शास्त्रकारा अप्येवमाहुः—पूर्वापरीभूतं भाव माख्यातेनाचष्टे व्रजति पचति इत्युपक्रमप्रभृति अपवर्गपर्यन्तमिति नि० १।१ यथा । न शास्त्रकारवचनमपि अलमिमर्थमप्रमाणकमुपपादयितुम् ।**

आख्यातेन तिबादिना केवलस्य तस्य प्रयोगाभावादाख्यातघटितमुदाहरति—**व्रजति पचतीति** । उपक्रमापवर्गशब्दौ पाकारम्भ—पाकसमाप्तिपरौ । तथा च पाकमारभ्य तत्समाप्तिपर्यन्तं यावान् क्रियाकलापः, तावान् सर्वोप्याख्यातार्थः । तावदन्तर्गते कियत्यपि व्यापारे सति पचतीति प्रयोगदर्शनाद् वर्णमात्रस्याख्यातत्वाभावात् । तस्मात् स्फोट एवाख्यातपदेन ग्राह्य इति । तदेतन्निराचष्टे—**नेति** । शास्त्रकारस्यापि प्रमाणविरुद्धार्थकल्पनासामर्थ्याभावात् । प्रमाणविरोधे शास्त्रवचनमपि अन्यपरत्वेनैव नेयमादित्योयूप इत्यादिवत् ।

ननु आपाततस्तदनुरोधेन दृष्टविरुद्धार्थकल्पनाकार्येति भावः। वस्तुतस्तु वर्णेभ्यः संस्काराः संस्कारेभ्यश्चार्थप्रतिपत्तिरिति स्वीकारान्न वर्णेषु निमित्तत्वबाधः व्यापारेण व्यापारिणो व्यवधानाभावात्। सर्वत्र व्यापार-व्यवहितस्यैव निमित्तत्वमुपलभ्यते। प्रज्वलनादिव्यापारद्वारैव वह्नेः दाह-निमित्तभावः। सन्निकर्षादिव्यापारद्वारा चक्षुरादेः प्रत्यक्षादिप्रमितिकरण-भावश्चेत्याशयेनाह—**अपि चेति**।

**भाष्यम्—अपि च नैव एतद् अनुपपन्नार्थम्। अक्षरेभ्यः संस्काराः संस्कारादर्थप्रतिपत्तिरिति सम्भवति अर्थप्रतिपत्तौ अक्षराणि निमित्तम्। गौण एवार्थप्रतिपत्तौ शब्द इति चेत्। न गौणोऽक्षरेषु निमित्तभावः तद्भावे भावात्, तदभावे चाभावात्।**

ननु अर्थप्रतिपत्तिवेलायां क्रमाभिव्यक्तवर्णानामसत्त्वान्न तत्र निमित्त-भावः, किन्तु संस्काराणामेव तेषान्तदानीं सत्त्वात् बह्नि चक्षुरादि दृष्टान्तस्तु विषमः। कार्योत्पादसमयेपि तेषां सत्त्वादिति, वर्णेषु अर्थप्रतिपत्तिनिमित्त-भावो गौण एव, न मुख्योऽसम्भवादित्याशयेनाह **गौण एवार्थ** इति।

समाधत्ते—**न गौण इति**। यद्यपि शब्देषु गौणत्वाशङ्कायां तत्रैव मुख्यत्वव्यवस्थापनेन समाधानं कर्तव्यं, अत्र तु तादृशाक्षेपेऽक्षरेषु निमित्त-भावस्य मुख्यत्वमुच्यते, न गौणोऽक्षरेषु निमित्तभावस्तद्भावादिति भाष्यम-सम्बद्धं प्रतीयते, तथापि न गौण इति भाष्यं पूर्वभाष्येणैव योजनीयम्। एवं च गौण एवार्थप्रतिपत्तौ शब्द इति चेत्। न गौण इत्येतत्—पर्यन्तमेकं भाष्यम्। गौणत्वाभावसाधनाय हेतुं दर्शयति—**अक्षरेषु निमित्तभावस्त-द्भावे भावादिति**। अयं भावः शब्दादर्थं प्रतिपद्यामहे इति लौकिकवचने। पञ्चम्या शब्दस्यार्थप्रतिपत्तौ निमित्तत्वमुच्यते। तच्च व्यवहितस्यापि सम्भव-त्येव, अव्यवधाननिवेशे मानप्रयोजनयोरभावादिति, संस्कारस्य व्यवधाय-कत्वेपि शब्दे उपपद्यते, अन्यथा त्वन्मतेऽपि अज्ञातस्य स्फोटस्यार्थप्रतिपत्ति-हेतुत्वाभावाद् ज्ञातस्यैव तद्वाच्यम्। तथा च ज्ञानव्यवधानं सममिति व्यवहितस्यापि हेतुत्वं स्वीकार्यं, तथा च संस्कारस्य व्यवधायकत्वेऽपि न शब्दस्य निमित्तत्वानुपपत्तिः। व्यापारस्य न व्यवधायकत्वमित्युक्तमेव।

ननु संस्कारस्यापि शब्दजन्यत्वात्कुतो लोके न तथा व्यवहारः ? अर्थप्रतीतिमुद्दिश्य शब्दप्रयोगात्तत्फलतया तत्र जन्यत्वव्यपदेशः, न संस्कारे, तदुद्देश्येन शब्दप्रयोगाभावात् । समुच्चयज्ञानपक्षे यथा न व्यवधानं, तथोक्तमेव ।

स्फोटस्य प्रत्यायकत्वन्तु न युक्तं, तदभिव्यञ्जकाभावात् । तथा चैवं प्रयोगः—पदवाक्ययोर्वर्तमाना वर्णा ध्वनयोवा न स्फोटाभिव्यञ्जकाः व्यञ्जकत्वात् प्रदीपवत् । यद्वा तस्मिन्नेव साध्ये सत्त्वाद् घटवत् । न च धर्मिप्रसिद्ध्यप्रसिद्धिभ्यां व्याघातः । अविद्यमानेऽपि स्फोटे वाचकत्वाभावस्य दर्शयितुं शक्यत्वात् । न च बुद्धावनारूढः कथमभावेनापि शक्यो विशेषयितुम् । वैयाकरणैर्वाचकत्वेन यः कल्पितः स नास्तीत्याकारेण बुद्धावारोहयितुं शक्यतया सर्वथा बुद्ध्यनारूढत्वानभ्युपगमात् । वीणादिध्वनीनां स्फोटानभिव्यञ्जकत्वस्य परेषामिष्टत्वात्तदंशे सिद्धसाधनतापरिहाराय ध्वनौ पदवाक्ययोरिति विशेषणमुपात्तम् ।

तथा स्फोटो नार्थवाचकः वर्णातिरिक्तत्वात् घटवदिति । न चैवं वर्णो न वाचकः सत्त्वाद् घटवदित्यपि स्यादिति वाच्यम् । वर्णोच्चारणानन्तरमर्थप्रत्ययदर्शनेन हेतोरनैकान्तिकत्वात् । अग्नावनुष्णत्वानुमानवद् दृष्टविरुद्धत्वाच्च ।

वर्णानामेवार्थप्रत्यायकत्वेऽनुमानं यथा अनन्यथासिद्धार्थकप्रनीतिः वर्णजन्या वर्णप्रतिपत्त्यनन्तरमुत्पद्यमानत्वात् धूमादग्निज्ञानवत् । गकारौकारविसर्गाः गोत्वप्रतिपादकाः गोत्वप्रतिपादनात्पूर्वं ध्रुवं प्रतीयमानत्वात् रूपे प्रदीपवत् यत्पूर्वं हि यत् प्रतिपाद्यते तत्तस्य प्रतिपादकं यथा दीपारोपणं प्रतिपद्यमानस्य घटस्य प्रतिपादकं वर्णोच्चारणपूर्वोऽर्थः प्रतिपाद्यते । अतो वर्णः प्रतिपादक इति संक्षेपः ।

**भाष्यम्—अथापि गौणः स्यात् । न गौणः शब्दो माभूदिति प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्यः परिकल्पयितुम् । नहि अग्निर्माणवक इत्युक्ते अग्निशब्दो गौणो माभूदिति ज्वलन एव माणवक इत्यध्यवसीयते । नच प्रत्यक्षो गकारादिभ्योऽन्यो गोशब्द इति भेददर्शनाभावात् अभेददर्शनाच्च । गकारादीनि हि प्रत्यक्षाणि । तस्माद्**

**गौरिति गकारादिविसर्जनीयान्तं पदमक्षराणि एव । अतो न तेभ्यो व्यतिरिक्तमन्यत्पदं नामेति । ननु संस्कारकल्पनायामप्यदृष्टकल्पना । उच्यते । शब्दकल्पनायां सा च, शब्दकल्पनाच । तस्मादक्षराण्येव पदम् ।**

अभ्युपेत्याह—**अथापि गौण इति** । दृष्टविरुद्धार्थकल्पनापेक्षया गौणत्वस्वीकार एव युक्तियुक्त इत्याशयेनाह—**माभूदिति** । अत्रैव दृष्टान्तमाह अग्निर्माणवक इति । तेजस्वित्वादिना अग्निशब्दोऽग्निसदृशार्थकत्वेन गौण एव सर्वैः स्वीक्रियते । नतु मुख्यत्वाय स एवाग्निरिति । तत् कस्य हेतोः ? तथासति दृष्टविरोधः स्यादिति, तस्य गौणत्वमेवं प्रकृतेऽपि स्फोटकल्पनापेक्षया शब्दस्य गौणत्वमेव वरम् । साधकप्रमाणाभावान्नस्फोटाऽभ्युपगमो युक्त इत्याह—**न च प्रत्यक्षेति** । प्रत्यक्षपूर्वकत्वाच्चेतरेषां तन्निवृत्त्यैव निवृत्तिरिति । **भेदेति** । शब्दभिन्नतया स्फोटस्यानुपलम्भान्न तदतिरिक्तः सिद्धिरिति भावः । स्वपक्षसाधकं हेतुमाह—**अभेददर्शनाच्चेति** । गकारादिवर्णैः शब्दस्याभेददर्शनाद् गकाराद्यात्मक एव शब्द इत्याह—**तस्मादिति** । प्रत्यक्षाणीति श्रावणप्रत्यक्षमेव वर्णात्मकशब्दसद्भावे प्रमाणम् । सिद्धमर्थं प्रदर्शयति—**अतो नेति** । ननु संस्कार इति प्रागेव व्याख्यातं स्फोटवादिनां मते कल्पनागौरवमुद्भावयति—**सा चेति** । एतदपि पूर्वं निरूपितम् । उपसंहरति—**तस्मादिति** ।

**इति कल्पकलिकायां स्फोटवादनिरासः ॥**

**भाष्यम्—अथ गौरित्यस्य शब्दस्य कोऽर्थः ? सास्नादिविशिष्टाऽकृतिरिति ब्रूमः**

**ननु आकृतिः साध्याऽस्ति वा नवा इति ।**

**न प्रत्यक्षा सतो साध्या भवितुमर्हति, रुचकः स्वस्तिको, वर्धमानक, इति हि प्रत्यक्षं दृश्यते । व्यामोह इति चेत् न । नासनि विपर्यासे व्यामोह इति शक्यते वक्तुम । असत्यप्यर्थान्तरे एवं जातीयको भवति प्रत्ययः—पङ्क्तिः, यूथम्, वनमिति यथा इति चेत् । न ।**

**असम्बद्धमिदं वचनमुपन्यस्तम् । किमसति वने वन प्रत्ययो भवति इति प्रत्यक्षमेवाक्षिप्यते, वृक्षा अपि न सन्ति इति । यद्येवम्, प्रत्युक्तः स महायानिकः पक्षः ।**

## आकृतिवादः

शब्दार्थसम्बन्धनित्यत्वसाधनाय वाचकस्वरूपं निरूप्य, वाच्य स्वरूपं निर्दिधारयिषुः पृच्छति—**अथ गौरिति**। यदि व्यक्तयः शक्याः स्युः तर्हि आनन्त्याद् व्यभिचाराच्च तासु सम्बन्ध एव न सिद्धयेद् दूरे तस्य नित्यत्वमाकृतेस्तुशब्दार्थत्वे तस्या एकत्वान्नित्यत्वाच्च क्वचित् साक्षात् क्वचित्तद् द्वारार्थेषु सम्बन्धस्तन्नित्यत्वं च सिद्धयतीति प्रयोजनमनुसन्धायाकृतेः शब्दवाच्यत्वं निरूपयति। न चाकृतिस्तु क्रियार्यत्वादि-(१.३.३३)तिसूत्रे आकृतिसद्भावम् सूत्रकारः स्वयं व्यवस्थापयिष्यतीति किमर्थमत्र भाष्यकारप्रवृत्तिः सत्यं व्यवस्थापयिष्यति; किन्तु प्रकारभेदेन। आकृतेः शब्दार्थत्वाभावो द्विधा—असत्त्वात्, क्रियायामनुपयोगाद्वा। तत्र द्वितीयं प्रकारमाश्रित्य व्यक्त्या सह बलाबलसिद्धयर्थमुपयोगप्रदर्शनद्वारा सूत्रकारोऽस्याः शब्दार्थत्वं व्यवस्थापयिष्यति। भाष्यकारस्तु असद्भावपक्षं निराकृत्य तस्याः सद्भावं प्रतिपादयतीति, न विषयपौनरुक्त्यम्। निराकरणप्रकारभेदात्।

ननु ''जात्याकृतिव्यक्तय'' इतिसूत्रे जातिपदोपादानात्तदतिरिक्तावयवसंस्थानपराया आकृतेरनित्यत्वात् तद्द्वारा कथं शब्दार्थसम्बन्धनित्यत्वम्? व्यक्तिराक्रियते—निरूप्यते ययेति व्युत्पत्त्या आकृतिशब्दस्य सामान्यपरत्वात्। भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नमिति महाभाष्यकारोक्तदिशा सामान्यं न प्रतिपिण्डं भिन्नं किन्तु व्यक्तिविशेषेषु व्यावर्तमानेष्वपि व्यक्तयन्तरेऽनुवर्तते इति अनुवृत्तप्रत्ययासाधारणं कारणमिति लक्षणमपि तस्या निर्वहति। गौतमसूत्रे आक्रियते उत्पाद्यतेऽवयवी ययेति व्युत्पत्त्याऽऽकृतिपदमवयवसंस्थानपरं तथा चाऽवयवार्थभेदविवक्षयाऽऽकृतिपदमुभयार्थकम्। प्रकृते तु सामान्यार्थकमेव, तस्यैवात्रोपयोगादितिभावः।

**बौद्धमनेन पूर्वपक्षः**

अत्र सौगताः—

पृथक्त्वे व्यक्तितो जातिर्दृश्येत पृथगेव सा।
अभेदे व्यक्तिमात्रं स्याद् द्वेधाचेन्नविरोधतः॥ इति।

अयमर्थः—जातिर्व्यक्तेर्भिन्ना अभिन्ना, उभयात्मा वा। नाद्यः गवाश्ववद् भेदोनोपलब्धिप्रसङ्गात्। किञ्च भेदेऽपि सा सर्वगता, असर्वगता वा। आद्ये गोत्वादेर्गवादाविवाश्वादावप्युपलब्धिः स्यात्। ततश्चाव्यावर्त्तकत्वं स्यात्।

अन्त्ये क्वचित् गवादावपि नोपलभ्येत। न चासर्वगतत्वेऽपि व्यक्तिमात्रगतत्वाङ्गीकाराददोष इति वाच्यम्। व्यक्त्युत्पत्तेः पूर्वं तत्र देशेऽवर्त्तमानाया जातेरुत्पन्नायां व्यक्तौ सम्बन्धासम्भवात्। न च व्यक्त्या सह तत्र जातिरुत्पद्यत इति शक्यं वक्तुं, तस्या नित्यत्वाभ्युपगमात्। न च तद्व्यक्ति सम्बन्धाय व्यक्त्यन्तरादायाति, अमूर्तत्वेन क्रियाशून्यत्वात्। यत आयाति, तत्र तदनुपलम्भापत्तेश्च। न चांशभेदेन पूर्वोत्तरव्यक्तिसद्भावसमर्थनं, निरंशत्वात्।

अपि च व्यक्तिनाशे का गतिः, नहि सहैव व्यक्त्या नश्यति, तस्या नित्यत्वाङ्गीकात्। नापि व्यक्तिनाशोत्तरं तत्राश्रये वर्तितुमर्हति, व्यक्तिमात्र समवेतत्वस्वोकारात्। व्यक्ताविव तत्रोपलब्धिप्रसङ्गाच्च। न चाश्रये विनश्यति विहंगमादिवदन्यत्र प्रयाति, अक्रियत्वात्। अन्यत्र प्रयाणेऽपि यत्र व्यक्तौ समवेता, तत्रैव पुनः समवैतीति स्वीकारे द्विरुपलब्ध्यापत्तेः। अन्यत्र समवाये तत्रापि तदुपलम्भापत्तेः। ततश्चाव्यावर्तकत्वापत्त्या तदङ्गीकारवैयर्थ्यम्। नापि द्वितीयः। व्यक्तिमात्रस्यैव सत्त्वप्रसंगात्। तच्चास्मा भिरपीष्यते एवेति न विवादः। नापि तृतीयः तमःप्रकाशयोरिवात्यन्तविरुद्धयो र्भावाभावयोरेकत्र समुच्चयासम्भवात्। नहि स एव चैत्रः स्वस्मादभिन्नो भिन्नश्चेति केनाप्यविकलकरणेन वक्तुं शक्येत। न च प्रकारान्तरसम्भव इति जातिस्वीकारोऽविद्याविजृम्भित एव।

तथा चोक्तं तैरेव।

नायाति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥ इति।

किंच प्रतिव्यक्ति जातिः किं कात्स्न्र्येन वर्तते, उतैकदेशेन। न तावदाद्यः एकत्रैव व्यक्तौ कात्स्न्र्येन वर्तमानाया व्यक्त्यन्तरेऽसत्त्वापत्तेः। नहि एकैव जातिरनेकत्र कात्स्न्र्येन वर्तितुं शक्नोति असम्भवात्। नाप्यन्त्यः अनवयवाया

अंशासम्भवेनैकांशेनेत्युक्तेरेवासम्भवात् । आरम्भावयवस्यैकांशपदार्थत्वात्, जातेश्च नित्यत्वेनावयवानभ्युपगमात् ।

किंच व्यक्तिभिन्नाया जातेर्व्यक्तौ वृत्तिस्वीकारे कुण्डे वदरमितिवत् गवि गोत्वमितिप्रभेदोल्लेखिप्रत्ययः स्यात् । न चैष कस्यचिदानुभविकः किन्तु अयं गौरित्यभेदोल्लेखिप्रत्यय एव । अथ व्यक्त्यात्मैव जातिः, न ततो वस्तुतो भिन्नेति, तदभेदोल्लेखि प्रत्ययो युज्यत एवेति ।

मैवम् । अत्यन्तभिन्नयोर्जातिव्यक्त्योस्तमःप्रकाशयोरिवाभेदासम्भवात् । अन्यथा व्यक्तेरिव जातेरपि जन्यत्वानित्यत्वानेकत्वाद्यापत्तेः ।

नापि जातौ प्रमाणम् । तथाहि न नावत् प्रत्यक्षम् । जातेर्नित्यत्वात् नित्यं हि न कस्मैचित् कार्याथं प्रभवति, तच्चेच्छक्तस्वभावं स्यात्, तदा सततं कार्योत्पादः स्यात् । अशक्तस्वभावत्वे तु न कदाचित्कार्योत्पाद इति । न चाजनकस्य विषयत्वं तज्ज्ञानजनकत्वस्यैव तद्विषयत्वात् । तस्मात्स्ववासनानिर्मितविकल्पाकारमात्रं सामान्यं न वस्तु सदिति । न च यथा ज्ञानभेदसिद्धये व्यक्तिपदार्थः स्वीक्रियते, तथा घटपटादि व्यावृत्तिबुद्धये सामान्यपदार्थोपि स्वोक्रियतामिति वाच्यम् । सामान्यं विनापि व्यक्तिज्ञानसामर्थ्यादेव तद्व्यवहारोपपत्तेः । न च विषयं विना कथं तद्व्यवहारः व्यवहारे विषयसत्तापेक्षाभावात् । सत्यपि विषये तदज्ञाने न तद्व्यवहारः । असत्यपि तस्मिन् ज्ञानदशायां तद्व्यवहार इत्यन्वयव्यतिरेकाभ्यां ज्ञानमात्रस्यैव व्यवहाराङ्गत्वोपगमात् । अत एवातीतानागतवस्तुव्यवहारः । प्रत्यक्षव्यवहारोपि शुक्तिरजतादौ वाधकज्ञानानुदये दृश्यत एव । अत्र बाधकज्ञानं नोदेष्यतीत्यत्र मानाभावः । अविसंवादिव्यवहारोपि विकल्पमात्रादेव मणिप्रभायां मणिबुद्ध्या प्रवर्तमानस्य मणिलाभादुपपद्यते । तस्मान्न जातौ प्रत्यक्षम् । लिङ्गाभावाच्च नानुमानमपि । व्यावृत्तेषु अनुवृत्तप्रत्ययान्यथानुपपत्तिः प्रमाणमिति चेत् ? न अन्यथैवोपपत्तिप्रदर्शनात् ।

अपि च व्यावृत्तेषु समानाकारमुल्लिखन्ती धीः स्वकारणमात्रमाक्षिपेन्न सामान्यमेव । कारणं च यदनन्तरं सा जायते तदेव । जायते पुनरियं स्वलक्षणविषयदर्शनानन्तरं ततस्तासामेव व्यक्तीनां स्वविषयज्ञानजननद्वारा

सामान्याकारप्रत्ययजननसामर्थ्यं कल्पनीयं नेत्रालोकमनःप्रभृतीनामेकज्ञानजननसामर्थ्यंवन्न किमपि दृष्टविरुद्धम् ।

किंच सत्याश्रये सामान्यं स्यात् आश्रय एव तु निरूप्यमाणः सिकताकूपवत् स्वयं निपततीति क्व तत् । तथाहि । किं पृथिव्यादिचतुर्विधपरमाणवस्तदाश्रयः किं वा तदतिरिक्तः कश्चनावयवी । नाद्यः अतीन्द्रियेषु परमाणुषु कस्यचिदनुवृत्ताकारप्रत्ययासम्भवात्तत्र तदङ्गीकारप्रयोजनाभावात् । न द्वितीयः तदारम्भानुपपत्तेः आरम्भका हि परमाणवः एकैकं मिथः संयुज्यारभेरन्, तत्रैकः परमाणुरपरेण संयुज्य द्व्यणुकमारभेत । तथा सति तदीय संयोगः परमाण्वन्तरे सर्वात्मना भवति, एकदेशेन वा, प्रकारान्तराभावात् । आद्ये अणुः परमाण्वन्तरे गुप्तावसिवल्लीनः स्यात् अन्यथा तु, सर्वात्मना संयोग एव दुर्घटः । तथा च द्व्यणुकोत्पत्तिर्न स्यात्तदनुत्पत्त्या परम्परयावयविनोऽनुत्पत्तिरेव कारणानुत्पादात् । न द्वितीयः निरवयवत्वेनारम्भकावयवनिबन्धनैकदेशाभावात् । किं चावयविनः स्वावयवेषु वृत्तिरपि दुर्वचा । तथाहि अवयवेषु अवयवी किमेकदेशेन वर्तते सर्वात्मना वा । नाद्यः आरम्भकावयवातिरिक्तावयवाभावात् । नापि कार्त्स्न्येन, अवयवान्तरे तदभावप्रसङ्गात् । एकस्यावयवस्य कम्परागाभ्यां अवयविनोपि कम्परागापत्तिः । तथाऽवयवान्तरे कम्परागाभावात्तस्मिन् कार्त्स्न्येन समवेतस्य तस्य कम्परागाभावापत्तिश्चेति, युगपदेकस्मिन् विरुद्धधर्मद्वयसमावेशासम्भवेन तदसत्त्वस्वीकार एव युक्तः । न चावयविनोऽभावे एकः स्थूलो महानिति बुद्धिर्न स्यात्, परमाणूनां तदसत्वादिति वाच्यम् । पूर्वोत्तरभावेन निरन्तरसमुत्पन्नपरमाणुपुञ्जस्यैव तादृशबुद्धिविषयत्वात् । वृक्षसमुदायो वनमितिवदेकत्वोपपत्तेः । एवं चावयव्यभावान्न सामान्यम् ।

न च स्वलक्षणान्तरमेव सामान्याकारप्रत्ययजनकत्वे तेषामतिविलक्षणत्वात् कानिचिद् घटाकारविकल्पं जनयन्ति, कानिचित् पटाकारविकल्पं जनयन्ति इत्यत्र नियामकाभावात् । सर्वस्मात् सर्वविकल्पापत्त्या तद् व्यवस्था न स्यादिति वाच्यम् ।

सत्यम् सामान्यस्वीकारेऽपि अत्यन्तविलक्षणासु घटव्यक्तिषु घटत्वसम्बन्धो न पटव्यक्तिषु इत्यत्र नियामकाभावः । एवं घटसंस्थानस्यैव तद्

व्यञ्जकत्वं न पटसंस्थानस्येत्यत्रापि नियामकाभावः। अथ स्वभावादेव कासांचिद् व्यक्तीनां केनचित्सामान्येन सम्बन्ध इति नानुपपत्तिः, तर्हि स स्वभाववादो मत्पक्षेऽपि न दण्डवारित इति सममन्यत्राभिनिवेशादिति।

यदि घटादिव्यक्तिषु घटत्वादिसम्बन्धसिद्धयर्थं सामान्यान्तरमनुश्रित्य, तदवच्छेदेन घटत्वादिसम्बन्धो व्यवस्थाप्यते, तस्य च घटादौ विरहं स्वीकृत्य तद्व्यवहारवारणेन व्यवस्थोपपाद्यते, तर्हि घटत्वादिसम्बन्धव्यवस्थापनाय कल्पितसामान्यान्तरस्य घटादिव्यक्तावेव सम्बन्धो न पटादिव्यक्तावित्यत्र नियामकाभावात् पटादिव्यक्तावपि स्वीकारापत्त्या तत्रापि पुनः घटत्वादि सम्बन्धाङ्गीकारापत्त्या सैवाव्यवस्था। तदर्थं पुनः सामान्यान्तरस्वीकारे तु तदर्थं पुनः पुनः सामान्यान्तरस्वीकारापत्तावनवस्था। तस्मात् सामान्यं न किञ्चिद्वस्तु किन्तु विकल्पमात्रमित्येव युक्तमिति।

अत्रोच्यते—सिद्धान्तपक्षः बुद्धिरेव भगवती नः पदार्थसदसद्भावे प्रमाणं, नान्यत्। तदिह घटादिषु अश्वादिषु चानुवृत्तव्यावृत्ताकाराबुद्धि र्जायते सर्वस्य। दोषबाधकज्ञानाभावान्नेयं भ्रान्तिः, न चास्याः प्रत्यक्षधियो बाधनायाऽनुमानादि प्रभवति। प्रत्यक्षपूर्वकत्वादनुमानादेः। प्रत्यक्षबाधे कारणबाधादनुमानादेरुत्पत्तिरेव न स्यात्। तस्माद् घटपदादिषु अनुवृत्तव्यावृत्ताकारं जायमानं प्रत्यक्षं द्वयाकारं वस्तु ग्राहयति सामान्याकारं विशेषाकारञ्च। सामान्याकारं ग्राहयन् प्रत्ययोऽनुवृत्तः, विशेषाकारं ग्राहयन् व्यावृत्त इति निरूप्यते। सामान्याकारमात्रग्रहणे घटज्ञानात्पटेऽपि प्रवृत्त्यापत्तेः पटभेदस्य तेनाग्रहणात्। अथवा पटे इव घटेऽपि तत् प्रवृत्तिर्न स्यात्। शेषमात्रग्रहणे तु अनुवृत्तप्रत्ययाभावेन तज्जातीयत्वाज्ञानादिष्टसाधनतानुत्पत्त्या तज्जातीये प्रवृत्त्यनुपपत्तिरनुमानाद्युच्छेदापत्तिश्च। तथा च यद्वस्तु तद्भिन्नमभिन्नं वा सामान्यमपि यदि वस्तु स्यात्ततोऽनेनापि भिन्नेनाभिन्नेन वा भवितव्यमिति त्वदुक्तिरपि कथं संगच्छेत, वस्तुत्वस्य सामान्यधर्मस्य त्वयानङ्गीकृतत्वात्, तत्र भेदाभेदोभयव्याप्तत्वावधारणस्याशक्यतया व्यापकीभूतभेदाभेदोभयनिवृत्त्या व्याप्यस्य वस्तुत्वस्य निवृत्तिर्दुरुपपादा स्यात्। तस्मात् सामान्यं त्वयापि स्वीकार्यम्।

न च वस्तुत्वस्योपाधिरूपस्य स्वीकारेऽपि न जातिस्वीकारः, तद्भिन्नत्वादिति वाच्यम्। स्वलक्षणमात्रवादिनां जातिवदुपाधेरप्यनिष्टत्वात्। उपाधिस्वीकारे तद्वज्जातिस्वीकारापत्तेः, तयोर्मूलस्यैक्यात्। तस्मात् सर्वानुभवसिद्धं सामान्यमनिच्छतापि, सौगतेनाभ्युपेयमेवेति।

नन्वस्तु सामान्यं, भेदाभेदविकल्पस्य तु किं समाधानं, न किमपि, कथं तर्हि तत्सिद्धिः, दृष्टत्वादेव। न हि दृष्टे किञ्चिदनुपपन्नं नाम यद् यथादृश्यते तदसति बाधके यथादृष्टमेव मन्तव्यम्। ननु किं शुक्तिरजतज्ञानमपि यथा दृष्टमेव मन्तव्यं। न। विशेषात्। तत्र हि नेदं रजतमिति बाधधीर्जायते। अत्र तु भेदाभेद सद्भावे न किमपि बाधकं दृश्यते। ननु किं भावाभावयो र्विरोध एव नास्ति। न नास्ति किन्तु अपेक्षाभेदेनोभयोरत्र समावेशः। गवादिसामान्यरूपेणाऽभेदः प्रतीयतेगौरयं शावलेयः। यदा तु जाति र्व्यक्त्यन्तरात्मना निरूप्यते, तदेयं व्यक्ति स्ततो भिन्नरूपा प्रतीयते, योसौ बाहुलेयो गौः सोयं शावलेयो न भवतीति। एवं द्रव्यगुणयोरपि भेदाभेदौ बोध्यौ। द्रव्यस्य गन्धादिगुणान्तरेण रूपादिभ्यो भेदो द्रव्येण चाभेदः। तथाऽवयविनः स्वरूपेणावयवैरभेदोऽवयवान्तरेणावयवान्तरैर्भेदः। यथा दीर्घह्रस्वादीनां विरुद्धस्वभावानामप्यपेक्षाभेदादेकत्राप्यविरुद्धत्वं प्रतीतिवलादङ्गी क्रियते। तथा भेदाभेदयोरपि द्रष्टव्यम्। प्रतीत्यविशेषादिति शास्त्रदीपिका। जातेर्व्यक्त्यात्मकत्वनिरूपणेन सर्वगतत्वाद्याक्षेपोऽपि समाहितः। कथं सर्वगतापि जातिर्न सर्वत्रोपलभ्यते तद्व्यञ्जकाभावात्। व्यञ्जिका व्यक्तिः, यथा गोत्वव्यञ्जिका सास्नादिमद् व्यक्तिः तत्रैव गोत्वप्रतीतिः संयुक्तसमवायस्य जात्युपलम्भकसंसर्गस्य तत्रैव सत्त्वात्। अन्यत्र व्यञ्जकसंयुक्तयसमवायसन्निकर्षाभावान्न तत्प्रत्यक्षापत्तिः।

न च विरुद्धभिदमभिधीयते जातिः सर्वगतापि व्यक्त्यभिन्ना, यदि व्यक्त्यभिन्नान, तर्हि सर्वगता व्यक्तेरसर्वगतत्त्वात्। अथ सर्वगता, न तर्हि व्यक्त्यभिन्ना, अन्यथा व्यक्तेरपि सर्वगतत्वापत्तेः। तथा च सर्वगता व्यक्त्यभिन्नेति मिथो, विरुद्धम्। न भेदस्यापि स्वीकारात्। यदि एकान्ततोऽभेदः स्यात्तदाऽयमाक्षेपः स्यादपि। भेदांशमादाय सर्वगतत्वादेः समर्थनात्।

यच्च जातिर्व्यक्तौ कात्स्न्र्येनैकदेशेन वा वर्त्तते इति विकल्पः। सोप्यसंगतः। एतत्प्रश्नावकाशाभावात्। अयं प्रश्नः सावययेषु युज्यते, यत्र

कात्स्न्यैंकदेशयोः सम्भवः । निरवयवजातौ तु कात्स्यैंकदेशाभावादीदृशः प्रश्नो नाविकलस्य सुधियः शोभते । न च निरवयवेप्याकाशे प्रदेशव्यपदेशो भवति यथा इह प्रदेशे आकाशे शब्द इति, न तस्य काल्पनिकत्वात् बुद्धयाऽकाशे प्रदेशं परिकल्प्य, तथा व्यपदेशः । न च काल्पनिकप्रदेशे न वस्तुस्थितिः, कल्पनाया निरंकुशत्वात् । तस्माद् व्यक्तौ जातिर्वर्तते एतावन्मात्रं प्रमाणविषयः तावन्मात्रं वक्तव्यं प्रामाणिकेन । यथा प्रमाणावगतं च स्वीकार्यम् । न तु कात्स्न्यादिविशेषः । तस्य तत्रासत्त्वेन प्रामाणागोचरत्वात् । यदपि आश्रयाभावात् क्व सामान्यमित्युक्तम् । तदतिस्थवीयः । अवयविन एकत्वात् बहुषु अवयवेषु एकोऽवयवी व्यासज्य वर्तते । अपि च एकोवयवी अनेकेषु अवयवेषु वर्तते इति ब्रुवाणो न कात्स्न्यैंकदेशानुयोगमर्हति, विरुद्धत्वात् । यदि एकोऽवयवी बहुषु कात्स्न्यैंन वर्तेत तर्हि नैकमनैकत्र वर्त्तेत । किन्तु अनेकमनेकत्र वर्तेत इति स्यात्तच्च विरुद्धम् । अधिकरणस्यैव व्याधातात् । एवमनेकवृत्तेः प्रत्यवयवमेकदेशेन वृत्तिरित्यनुयोगेप्यनेकस्यानेकत्र वृत्तिरित्येवापन्नम् । न तु एकस्यानेकत्र वृत्तिरित्यनुयोगाधिकरणवाधकत्वादयं प्रश्नः सर्वथानुचित एवेति । किं यथा जाति र्व्यक्तौ वर्तते, तथैवायवी अवयवेषु ? न तथैव, किन्तु जातिः प्रत्येकं वर्तते, अवयवी तु व्यासज्येत्यस्ति विशेषः । प्रत्येकव्यक्तिदर्शनेन जातेरुपलम्भात्, सा प्रतिव्यक्ति वर्तते, न तु कात्स्न्र्येन एकावयवदर्शनेनावयविन उपलब्धिविरहादनेकावयवोपलब्धावेव तदुपलब्धेरवयवेषु व्यासज्य वर्त्तते इति कथ्यते । गवाद्येकव्यक्तिदर्शनेन गोत्वादिवुद्धिवदेकतन्तुदर्शनेन पटवुद्धिर्न कस्यचिदनुभवसिद्धेति ।

तत्त्वमिदं पुनरिहावधेयं लोके हि स्रक्सूत्रं कुसुमेषु वर्तते इति व्यपदिश्यते तत्र नैकदेशेन सूत्रं तत्र वर्तते किन्तु तदवयवाः सूत्रञ्च कुसुमेषु वृत्ति र्न कात्स्न्यैंकदेशाभ्यां किन्तु स्वरूपतः । एवमवयविनोऽवयवेषु स्वरूपत एव वृत्तिः । अयं पुनर्विशेषः यत्सूत्रं सावयवमिति कुसुमेषु सूत्रं तदवयवाश्च वर्तन्ते । अवयविनस्तु अवयवान्तराभावात्स्वावयवेषु नावयवा वर्तन्ते, किन्तु स्वरूपतः स्वयमेवेति न कस्यचिद्वृत्तिः कात्स्न्यैंकदेशव्याप्ता येन व्यापकीभूतकात्स्न्यैंकदेशनिवृत्त्याऽवयविनोऽवयवेषु वृत्ति र्निवर्तेत । किन्तु स्वरूपतोऽवयवेषु अवयवी वर्तते एवेति भावः ।

यदपि नित्याया जाते र्ज्ञानजननस्वभावचोद्यम् । तदपि न । नित्यस्यापि ज्ञानजननस्वभावाङ्गीकारात् । यच्च स्वलक्षणान्येव स्वविषयज्ञानजननद्वारा घटादिविकल्पं साधयिष्यन्ति किं जातिकल्पनयेति ।

तदपि न । जातेः प्रत्यक्षाप्रमाणसिद्धत्वेन कल्पनाविरहात् । 'तदतद्रूपिणोभावास्तदतद्रूपहेतुजा' इति त्वदीय सिद्धान्तादत्यन्तविलक्षणानां स्वलक्षणानामेकज्ञानजननसामर्थ्यासम्भवात् । अस्मन्मते तु स्वस्वकारणाधीनेन तादाम्येन समवायेन वात्यन्तविलक्षणासु व्यक्तिषु सामान्यसम्बन्धः सम्भवतीति नाव्यवस्थेत्यलमतिप्रसंगेन । अपोहनिराकरणं वार्तिके द्रष्टव्यं नेह प्रतन्यते विस्तरभयान् । अथ भाष्यव्याख्यानम् । सास्नादिविशिष्टाऽऽकृतिरिति । नन्ववयवातिरिक्तस्यावयविनः स्वीकाराद् गोत्वादिजातेरवयविवृत्तित्वेनावयववृत्तित्वात् सास्नादिविशिष्टाकृतिरितिभाष्यमनुपपन्नमिति चेन्न । सास्नादीनामेकावयविसम्बन्धितया गोत्वादेरुपलक्षकत्वात् । अन्यथागोत्ववत्सत्वादेरपितत्र सत्त्वेन तद्व्यवच्छिद्य गोत्वादेर्गोपदादिवाच्यत्वावधारणं दुःशकं स्यात् । तदुपादाने न त्सत्वादिषु गोपदवाच्यवत्वप्रसंगः वत्सत्वस्याश्वादावपिसत्त्वेन तत्र सास्नादेरभावान्न तदुपलक्षकत्वम् । एतेन सास्नाद्युपादानाद्विशिष्टस्यैव शब्दार्थत्वं नाकृतेरित्यपास्तं तस्योपलक्षकतयैवोपादानात् ।

यदपि गोत्वस्य स्वातन्त्र्येण ज्ञानं न भवतीति मत्वा तत्परिचायकसास्नात्वादि सामान्यप्रदर्शनाय सास्नादिविशिष्टाकृतिरित्युक्तं भाष्यकारेणेति केचिदाहुः ।

तन्न । को गोशब्दार्थ इति प्रश्ने सत्वादिविविक्तगोत्वस्य प्रकारान्तरेण दर्शयितुमशक्यतया तत्परिचयाय सास्नादीनामुपलक्षणपरतयोपादानात्, अन्यथा गोत्वज्ञानाय सास्नात्वादेः तस्यापि सामान्यत्वाविशेषात्, तज्ज्ञानाय पुनः सामान्यान्तरापेक्षायामनवथा स्यात् । दूरस्थितगवादिव्यक्तेः सास्नात्वादेर्विरहेऽपि ग्रहणाद् घटस्थनीलादेरिव विशेषणत्वाभावात् । एवं चावयविनि महत्त्वग्रहणेऽवयवानां यथासत्तामात्रेणोपयोगित्वं, नतु ज्ञानद्वारा, तथाऽवयविनि गवादौ समवेतस्य गोत्वस्य ग्रहणे सास्नादीनां सत्तामात्रेणैवोपयोगित्वं संयुक्तस्यावयविनीव सयुंक्तसमवेतस्य चक्षुःसन्निकर्षस्य तत्राप्यविशिष्टत्वात् अन्यथावयवानां परमाणूनामग्रहणादवयविनो ग्रहणं न स्यादिति ।

ननु सास्नादीनामभिव्यञ्जकत्वानुपगमे तदग्रहेपि गोत्वग्रहः स्यादिति चेत् न । अन्यत्र तत्सत्त्वानभ्युपगमात्, तद्ग्राहकसन्निकर्षाभावाच्च । गोत्वग्रहणे संयुक्तसमवायस्येव तदन्तर्गतसंयुक्तसन्निकर्षस्यापि सत्त्वेन नान्तरीयतया सास्नादिग्रहणं, नतु तद्धेतुतया ।

यद्वा न व्यक्तेरत्यन्तभिन्ना जातिः, किन्तुतदात्मेति बोधनाय सास्नादिविशिष्टाऽऽकृतिरित्युक्तं भाष्यकृता । तथा सास्नादेर्विशेषणत्वमेव, नतूपलक्षणत्वम् अवयवावयविनोरिव जातिव्यक्त्योरपि भेदाभेदपक्ष एव सम्मतः ।

ननु जाति र्न व्यक्तिभिन्ना तद् व्यतिरेकेणाऽज्ञायमानत्वाद् वृक्षसमुदायातिरिक्तवनादिवदित्यनुमानेन सौगतैर्जातेर्निराकरणात्, वाच्यत्वसिद्धये पूर्वं जातिरेव साधनीयेत्याशङ्क्य प्रत्यक्षप्रमाणसिद्धत्त्वान्न सा साध्यतामर्हतीत्यभिप्रयन्नाह—**न प्रत्यक्षा सतीसाध्याभवितुमर्हतीति** भाष्यम् । तथा च प्रत्यक्षसिद्धत्वात् सौगतानामाकृत्यभावानुमानं कालात्ययापदिष्टमिति, लोकप्रसिद्धपदार्थे तर्काभासेन परोक्तं दूषणमुद्धृत्य तेनैव व्यवहर्तव्यं मीमांसकैर्नत्वपूर्वपदार्थसाधनाय प्रयतनीयमिति भावः । नचाकृतेः प्रत्यक्षत्वे तत्र विवाद एव न स्यात् नहि प्रत्यक्षघटे कश्चिद्विवदते इति वाच्यम् । वाह्यपदार्थापलापिनां सौगतानां प्रत्यक्षप्रमाणसिद्धेप्यर्थे कुतर्केण विवाददर्शनात्, तेषामाकृतौ विवादोऽश्रद्धेय एव ।

ये पुनः प्रामाणिका महाजनाः तेषां नाकृतौ विवादः सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां, तक्रं कौण्डिन्यायेत्यादौ तद्व्यवहारदर्शनात् । 'विशेषविहितं' तक्रदानं सामान्यवचनप्राप्तदधिदानस्य निवर्त्तकं ब्राह्मणशब्दस्य जातिवाचकत्वाभावेतु सामान्यविशेषभाव एव दुर्घट इति स्पष्टमन्यत्र ।

आकृतेः प्रत्यक्षत्वमेवोदाहरणेन स्पष्टयति—**रुचकः स्वस्तिको वर्द्धमानक इति** । अत्र रुचकत्वादिजातिः प्रत्यक्षेणैव गृह्यते, तदाह प्रत्यक्षमिति । केचित्तु रुचकादिदृष्टान्तेनावयवसंस्थानरूपैव जातिरभिमता भाष्यकृत इत्याशयमुद्भावयन्ति । तत्तुच्छम् । तादृशाकृतेः प्रतिव्यक्ति भिन्नत्वेनैकत्वासम्भवात्, अनलानिलादौ तादृशाकृत्यभावादनलत्वादेर्जातित्वाभावप्रसङ्गाच्च । अवयवसंस्थानस्यापि तेन रूपेण ग्रहणापत्त्या तत्रापि गवादिप्रत्ययप्रसंगः, सत्ताव्याप्यजात्याश्रयत्वं तु न गोत्वादेरस्ति, मनुष्यादिचित्रेऽपि

तत्प्रतीत्यापत्तेः तस्मात्संस्थानातिरिक्तैव जातिः स्वीकार्येति । **द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरिति** ( पृ० २९४ ) भाष्येणावयवसंस्थानातिरिक्तैव जातिरिति स्पष्टमेव लभ्यते । तत्रावयवसंस्थानासम्भवात् ।

रुचकादित्रितयगतसुवर्णत्वजात्यभिप्रायेण वोदाहरणत्रयम् । न तु रुचकत्वादिजातिप्रदर्शनायेति संस्थानपरत्वं सुदूरनिरस्तम्, एकस्य सुवर्णत्वस्य भिन्नरुचकादित्रितयावयवसंस्थानत्वासम्भवात् । वस्तुतस्तु जातिव्यवहारो महाजनानामस्तीत्येतत्प्रदर्शनाय महाभाष्यकारोक्तरुचकाद्युदाहरणत्रयमिति ।

सन्देहदर्शनादपि जातेः प्रत्यक्षत्वम् । तथाहि दूरात्पुरुषं दृष्ट्वा संशेते जनोऽयं ब्राह्मणो न वेति । सन्देहश्च साधारणधर्मदर्शनात्, साधारणधर्मश्च नरत्वं प्रत्यक्षमित्यङ्गीकार्यम् । न च सामान्यस्य प्रत्यक्षत्वोपगमे नरत्ववद् ब्राह्मणत्वस्यापि प्रत्यक्षत्वमेव स्यादिति कथं संशयः । तत्परिचायकाभावात्, परिचायकश्च मातापितृसम्बन्धः तज्ज्ञानेऽयं ब्राह्मण इति निश्चयः क्वचिच्च राजरक्षिताचाराद् ब्राह्मणत्वादिनिश्चयोऽयं देशापेक्षः, कालापेक्षस्तु वसन्ताग्न्याधानेन, रूपाद्यपेक्षैरिन्द्रियैः सुवर्णत्वादिनिश्चयः इति सामान्यस्य कार्त्स्न्यैकदेशाभ्यां वृत्तेराक्षेपः पूर्वमेव समाहितः । प्रयोगश्चाकृतिसद्भावे पिण्डेषु गोवुद्धिरेकालम्वना गवाभासत्वादेकरूपत्वाद्वा यद्गवाभासमेकरूपं वा ज्ञानं तदेकालम्बनं यथैकपिण्डे गोवुद्धिरिति । एवमनुमानान्तरमपि बोध्यम् ।

वृक्षसमुदायातिरिक्ताभावेऽपि वनमिति प्रतीतिवदाकृतेरभावेऽपि तदवगाहिप्रत्ययो भ्रम एवेत्याशयेनाह—**व्यामोह इति** । कारणदोषे बाधकज्ञाने चासति प्रत्ययस्य भ्रमत्वाभावादाह—**नेति** । सौगताः अर्थं विनापि प्रत्ययं दर्शयन्ति पङ्क्तिर्यूथमिति । निराकरोति—**नेति** । **असंबद्धमिति** । ननुकथमिदमसम्वद्धं व्यक्त्यतिरिक्तजातिसाधनव्यभिचारग्राहकत्वेन सम्बद्धत्वात् सिद्धान्तिना जातिर्व्यक्त्यतिरिक्ता व्यतिरेकेण गृह्यमाणत्वादिति साधने प्रयुक्ते, तत्र सौगतो व्यभिचारं ग्राहयति पंक्तिर्यूथमित्यादि ।

अयमभिप्रायो यथा वृक्षातिरेकेण जायमाने वनप्रत्ययेऽपि नातिरिक्तार्थसिद्धिः, तथा व्यतिरेकेण जायमानजातिप्रत्ययेऽपीति व्यभिचारित्वाद्धेतोर्नातिरिक्ताऽऽकृतिसिद्धिरिति सम्बद्धत्वमेवेति चेत् न । प्रत्यक्षविरोधस्यैव प्रदर्शितत्वेन जातिसाधनोपन्यासाभावात्; पूर्वोक्तानुमानेन यदि जातिलाघवं

मयोपन्यस्येत, तदा तत्र व्यभिचारग्राहकत्वेनेदं वचनं सम्बद्धं स्यात् मया तु प्रत्यक्षविरोधः प्रदर्श्यते रुचकः स्वस्तिक इत्यादि। प्रत्यक्षमेव जातिग्राहकं तत्र व्यभिचारप्रदर्शनमसंबद्धमेव। तस्या व्यभिचारापेक्षाविरहात्।

अचोच्यते सौगतैर्हि वनवुद्धयादि दृष्टान्तेन सामान्यस्यासत्त्वं साध्यते, तत्र भाष्यकारेण रुचक इत्यादि जातिग्राहकप्रत्यक्षेण बाध उदीरितः, ततस्तेन वनबुद्धिवज्जातिप्रत्यक्षमप्याभास एवेत्यभिप्रायेण यूथः पङ्क्तिरित्युक्तं तच भाष्यकारेणोच्यतेऽसम्बद्धमिदं वचनं नहि वनवुद्धे मिंथ्यात्वे जातिवुद्धिर्मिथ्या भवितुमर्हति रूपरसादिवुद्धिच वदन्यत्वात्। न च वनवुद्धयसपेक्षया जातिग्राहकप्रत्यक्षे को विशेषः येन वनबुद्धिर्मिथ्या न जातिदुद्धिः प्रत्यक्षस्योमयत्र समत्वादिति वाच्यम्। तत्र तत्र दूरत्वादिदोषस्य सत्त्वेन तादृशबुद्धेर्मिथ्यात्वेऽपि, जातिग्रहे तदभावात् एवं च दोषसद्भावासद्भावयोरेव विशेषत्वम्। सन्निकृष्टस्य पुनः वृक्षेषु एकत्वबुद्धिर्निवर्तते। अतो दूरत्वनिबन्धनमेव वृक्षेषु एकत्वबुद्धया वनमितिप्रत्ययः अतः आभास एव जातिबुद्धिः, सन्निकृष्टस्यापि दृश्यत एवेति, नासावाभासः।

ननु वनमध्यमध्यासीनस्यापि वनशब्दाज्जायमानाया दुद्धेः कथमाभासत्वं तत्र दूरत्वादिदोषाभावात् तादृशदोषविरहेऽपि तद्बुद्धेर्मृषात्वे जातिबुद्धेरपि किन्न मृषात्वमिति चेत् सत्यम्। या दूरस्थितस्य वृक्षैकत्वग्रहनिबन्धनतदतिरिक्तवनविषयिणीन्द्रियसन्निकर्षजा बुद्धिः दूरत्वादिदोषेण सा भ्रान्तिरेव, या पुनर्वनमध्यमध्यासीनस्य शब्दजा वनैकत्वावगाहिनी बुद्धिः तस्या अपि प्रत्यक्षादिमूलस्याभावाद् भ्रमत्वमेव।

ननु शब्दस्यैव मूलत्वात् किं मूलान्तरान्वेषणचिन्तया, लौकिकशब्दस्य प्रमाणान्तराधिगतार्थज्ञापकत्वेनानुवादकतया प्रामाण्यानभ्युपगमात्।

अन्ये तु शब्दजाया वनैकत्वावगाहिबुद्धेः प्रमात्वेन तद्दृष्टान्तेन सामान्यावगाहिप्रत्यक्षस्याभासीकरणमशक्यमित्याहुः।

न च प्रमाणान्तरसम्वादाभावान्मिथ्यात्वम्, रसनेन्द्रियजन्यरसादिसाक्षात्कारस्येद्रियान्तरेण संवादाभावेऽपि प्रामाण्याभ्युपगमात् सत्यत्वाय प्रमाणान्तरसंवादस्यानपेक्षितत्वात्। न च संवादं विना चक्षुरादीनामप्रामाण्यदर्शनात् पदेऽपि तत्कल्पनमावश्यकमितिवाच्यम्। पदस्य गृहीतसम्बन्धस्यैव

प्रत्यायकत्वं, तत्र सम्बन्धग्रहणाय प्रमाणान्तरापेक्षणेऽपि अगृहीतसम्बन्ध प्रत्यायकसम्बन्धस्थले तदपेक्षाविरहात् सर्वत्रगृहीतसम्बन्धस्यैव प्रत्यायकत्वमिति नियमे मानाभावात् । अगृहीतैकत्वसम्बन्धादेव वनशब्दादेकत्वज्ञानमिति प्रमाणान्तराभावेऽपि प्रमाणत्वमेव ।

ननु नायं पक्षः समीचीनः, अगृहीतसम्बन्धस्यापि शब्दस्य प्रत्यायकत्वे प्रथमश्रवणेऽपि अर्थप्रतीत्यापत्तेरिति चेत्, सत्यम् । एवं तर्हि वृक्षाणां प्रत्यक्षेणैवाधिगमादेकत्वस्य च घटादौ ग्रहणान्नागृहीतार्थकत्वं, वनपदस्यापि । न च सकृदुच्चरितेन वनपदेनानेकार्थाभिधानं कथमेकशेषस्थले, सकृदुच्चरितेनापि अक्षादिपदेनानेकार्थबोधदर्शनात् । नचैकशेषस्थलेऽनेकार्थवुबोधयिषया द्विवचनान्तबहुवचनान्तस्यैव दर्शनेन प्रकृते वनपदेनैकवचनान्तेनानेकार्थाभिधानं न युज्यते इति वाच्यम् । अस्तु तर्हि एकत्वाविवक्षयापि शब्दसाधुत्वायैकवचनप्रयोगः प्रातिपदिकस्य केवलस्याप्रयोगात् ब्रह्मशब्दोत्तरैकवचनप्रयोगवत्, ग्रहादिपदोत्तरैकवचनप्रयोगवद्वा ।

यद्वा एकवचनस्य सर्वत्रैकार्थप्रतिपादकत्वं दृष्टमिति सामान्यतोदृष्टेनैकवचनेन देशान्तरप्राप्तिलिङ्गेन सूर्येगतिरिव, वनेऽपि एकत्वमनुमीयेत इति नानुपपत्तिः ।

न चात्र वृक्षेषु बहुत्वस्य प्रत्यक्षेणोपलम्भात्, तद्विरुद्धैकत्वानुमानेऽग्नावनुष्णत्वानुमानवत् प्रत्यक्षबाधः, एवं तर्हि वृक्षत्वे बहुत्वे वा एकत्वान्वयतात्पर्येणैव एकवचनप्रयोगो बोध्यः । तत्र विशेषणविशेष्यभावे कामचारः—वृक्षाश्रयं वा बहुत्वं, बह्वाश्रयं वा वृक्षत्वमिति, तत्रैकत्वसत्त्वादेकवचनोपपत्तिः समीचीनैव ।

यद्वा समुदायैकदेशेषु वृक्षेषु प्रत्येकमेकत्ववनत्वयो; सत्त्वान्नानुपपत्तिः ननु वनत्वमेकाश्रयं विना कथं सामान्यं भवेत्, एकाश्रयं विनापि नानावयवेषु अवयविनः समवायवद् वनत्वस्यापि वृक्षैरसंयुक्तैरेवाभिव्यक्तिसम्भवेन सामान्ये आश्रयैक्यापेक्षाभावात् । न च वनत्वस्य सामान्यत्वे प्रमाणाभावः । इदं वनमिदं वनमित्यनुगतप्रतीतेरेवान्यत्रेवात्रापि प्रमाणत्वात् । न चासंयुक्तेषु सामान्यं न दृष्टचरं, अनवस्थितावयवेषुभ्रमणेषु भ्रमणत्वसामान्यस्य दर्शनाददृष्टचरत्वाभावात्, येषां मते वनत्वं न सामान्यं, वनमितिबुद्धिस्तु

एकदेशावस्थितनानावृक्षोपाधिनिबन्धनैव, तेषां मते यथा गकारादयोऽनेके-वर्णा एकार्थविषयकबोधरूपमेकं कार्यं जनयन्तः समुदायवाचिना एकवचनान्तेन गवादिपदेनाभिधीयन्ते, एकं पदमिति। तथा वृक्षा नानाजातीयाः स्वविषयकं ज्ञानरूपमेककार्यं जनयन्तः समुदायवाचिनैकवचनान्तेन वनपदेनाभिधीयन्ते वनमिति। समुदायोपाधिनिबन्धनैकत्वव्यपदेशो न वनत्वसामान्यनिमित्तकः, समुदायिषु समुदायो नाम व्यासज्यवृत्तिर्गुणविशेषः। अत एव भिन्नदेशकालावस्थितनानाजातीयवृक्षाणां तादृशैककार्य्यकारित्वाभावान्न वनशब्देन व्यपदेशः।

अथवा द्रव्यैक्यं विनापि समुदायोत्पत्तिकारणीभूतदेशकालक्रियागतैकत्वे लक्षणास्वीकारेणैकवचनान्तोपपत्तिरिति बोध्यम्। तथा च वनादिबुद्धेरपि सत्यत्वान्न तद्बलेनाकृतिज्ञानस्य मिथ्यात्वं वक्तुं शक्यते। न च यथा वनादिबुद्धिः वृक्षसमुदायमालम्बते, नार्थान्तरं, तथा गवादिबुद्धिरपि पिण्डसमुदायालम्बनैवास्तां, किं सामान्यस्वीकारव्यसनेनेतिवाच्यम्, वैषम्यात्। दृष्टान्ते हि नैकस्मिन् वृक्षे वनबुद्धिः, किन्तु तत्समुदाये एव। दार्ष्टान्तिके तु एकैकस्मिन् पिण्डे गोबुद्धिर्न समुदाये इति, न तद्दृष्टान्तवशेन सामान्यापह्नवः कर्तुं शक्य इति भावः।

न च सास्नादिसमुदायालम्बनैव गोबुद्धिरस्तु, सर्वगोपिण्डेषु अनुगतगवादिप्रत्ययानापत्तेः तादृशसमुदायस्य प्रतिव्यक्तिभेदात् गवादिप्रत्ययस्य समुदायालम्बनत्वावश्यकत्वेत्ववयवसमुदायालम्बनत्वस्वीकारेण वरमवयविनोऽपलाऽपो न पिण्डान्तरानुवृत्तगवादिप्रत्ययासाधारणकारणगोत्वादिसामान्यस्य।

वस्तुतस्तु करचरणादीनामवयवानां भेदादयं देवदत्त इति द्रव्यैक्यावगाहिप्रत्ययान्यथानुपपत्त्याऽवयविस्वीकार आवश्यक एव। आतान-वितानसंयोगविशेषविशिष्टास्तन्तव एव द्रव्यैक्यमापन्नाः पट इति बुद्धिव्यवहारभाज इत्यवयवावयविनोर्नैकान्ततोभेदः, किन्तु भेदाभेदोभयमित्यसकृदुक्तम्।

नन्वेकत्र भेदाभेदोभयस्वीकारेऽवयविनोऽवयवभेदाभेदयोरेकतरस्यावधारणाभावात्तत्र भेदाभेदोभयावगाहि ज्ञानं स्थाणुर्वा पुरुषो वेति संशयवदप्रमाणं स्यात्, एकतरकोटिनिश्चायकाभावादिति वाच्यम्। कोटिद्वयशून्ये धर्मिणि कोटिद्वयावगाहिनः संशयस्य विषयवाधेन मिथ्यात्वेऽपि वस्तुतोभेदा-

भेदोभयविशिष्टे धर्मिणि तदुभयावगाहिज्ञानस्य विषयाबाधेन प्रामाण्योपगमात् । जातिवदत्रापि कार्त्स्न्यैकदेशनिमित्तको वृत्तिविकल्पः परासनीय इति दिक् । तथा च वृक्षसमुदायस्यैव वनपदार्थतया वनमिति प्रत्ययो नार्थशून्य इति, तद्दृष्टान्तेनाकृतिज्ञानस्य न मिथ्यात्वं वक्तुं शक्यते इत्यभिप्रायेणाह—**किमसति वने** इति । यदि वनमिति प्रत्ययो वृक्षसमुदायं विनापि भवतीत्याकृतिं विनापि गवादिष्वनुवृत्तप्रत्यय इत्युच्यते, तदा प्रत्यक्षप्रमाणसिद्धार्थापलापित्वात् सर्वैरश्रद्धेय इत्याह—**प्रयुक्तः स महायानिकः पक्षः ।** महायानाः सौगतास्तेषां पक्ष इत्यर्थः । वनादिदृष्टान्तं प्रदर्शयतः शून्यवादिन आशयं पृच्छति—**किमिति ।**

**भाष्यम्—अथ किमाकृतिसद्भाववादो उपालभ्यते, सिद्धान्तान्तरं न दुष्यति इति, वनेऽपि सति वनप्रत्ययः प्राप्नोति इति । एवमपि, प्रकृतं दूषयितुमशक्नुवतस्तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते, असाधकत्वात् । सहि वक्ष्यति दुष्यतु यदि दुष्यति । किं तेन दुष्टेन, अदुष्टेन वा प्रकृतं त्वया साधितं भवति, मदीयो वा पक्षो दूषितो भवति ? इति । न च वृक्षव्यतिरिक्तं वनं यस्मात् न उपलभ्यते, अतो वनं नास्ति इत्यवगम्यते । यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते, मिथ्यैव वनप्रत्ययः इति । ततो वनं नास्ति इत्यवगच्छामः । न च गवादिषु, प्रत्ययो विपर्येति, न ते न सन्ति इति । अथ वनादिषु नैव विपर्य्येति, न ते न सन्ति इति तस्मात् असम्बद्धः पङ्क्तिवनोपन्यासः । अत उपपन्नं जैमिनिवचनम् आकृतिः शब्दार्थः इति । यथा च आकृतिः शब्दार्थः, तथोपरिष्टात् निपुणतरमुपपादयिष्याम इति ।**

यथा गवादिज्ञानेनाकृतिसद्भावः स्वीक्रियते तथा वनादिप्रत्ययेन तत्सद्भावोऽपि स्वीकार्यः स्यादित्याशयस्ते इत्याह—**वनेऽपीति** । तर्हि प्रकृतमाकृतिसद्भावदूषणमुपेक्ष्य, सिद्धान्तान्तरदूषणे तव निग्रहः स्यादित्याह—**निग्रहस्थानमिति** । न च प्रतिज्ञातार्थसाधनौपयिकार्थान्तरविचारो न निग्रहस्थानमापादयति, प्रतिज्ञातार्थनिर्वाहकत्वात् । तथा चापसिद्धान्तभयेन त्वयाऽतिरिक्तवनपदार्थो नाभ्युपगन्तुं शक्यते इति, आकृतिज्ञानेऽपि नार्थसिद्धिरित्याशङ्क्य निराकुरुते—**असाधकत्वादिति** । वनप्रत्ययस्य वृक्षाति-

रिक्तार्थावगाहिन आभासत्वात्तद् दृष्टान्तेन समीचीनस्याकृतिज्ञानस्याभासी, करणासम्भवात् । नहि शुक्तिरजतज्ञानस्याभासत्वेन वस्तुतो रजतज्ञानमाभास इति । तदाह—**सहि दुष्यतु इति** । कथकाभ्यां स्वपक्षसाधनाय, परपक्षदूषणाय पदार्थाभिधानं कर्त्तव्यं, येन स्वपक्षसाधनं, परपक्षनिराकरणं वा **न** सम्भवति, व्यर्थत्वात्तदुपादानं निग्रहस्थानापादकमेवेत्याह—**किन्तेनेति** । उपलम्भकप्रमाणवैधुर्य्यान्न वृक्षातिरिक्तवनसिद्धिरित्याह—न चेति । वृक्षातिरिक्तं वनं न च । अत्र हेतुमाह—**यस्मादिति** । यस्मादतिरिक्तं नोपलभ्यते, तस्मादतिरिक्तं नास्ति, किन्तु वृक्ष समूह एव वनमित्यर्थः । प्रमाणाभावेन प्रमेयाभावसिद्धिः सप्तमरसाद्यभाववदितिभावः । तदेतदाह—**अतो वनं नास्ति इति** । प्रमाणाभावेन प्रमेयाभावं प्रदर्श्य, मिथ्याज्ञानादपि न प्रमेयसिद्धिरित्याशयेनाह—**यदीति** । अन्येन हेतुना दूरत्वादिदोषेण सद्भावविपरीतः प्रत्ययः दोषज्ञानं, तेन वनप्रत्ययस्य मिथ्यात्वबोधनान्न तत्सिद्धिः ।

यद्वा अन्येन हेतुना समीपं गतस्येन्द्रियसन्निकर्षादिना सद्भावविपरीतः प्रत्ययः वृक्षनानात्वावगाही बाधकः प्रत्ययः, तेन बाधक प्रत्ययेन वनप्रत्ययस्य मिथ्यात्वनिर्णयान्नातिरिक्तवनसिद्धिरित्याह—**ततो वनं नास्तीत्यवगच्छाम इति** । न चैवं गवादिषु वक्तुं शक्यते, समीपस्थितस्यापि गौरित्याकृत्यवगाहि ज्ञानं दृश्यते । न च तत्र दोषज्ञानं बाधकप्रत्ययो वेति, तज्ज्ञानं प्रमैवेनि वनाद्याभासज्ञानदृष्टान्तेऽनाभासजातिज्ञानस्य न मिथ्यात्वं, द्वयोर्वैषभ्यादित्याह—**न च गवादिषु इति** ।

अथ वनादिषु नैव विपर्य्येतीति, अथ बाधकप्रत्ययवशात्पूर्वं वनादेरसत्त्वमुपेत्य, पुनस्तत्सत्त्वोपगमाय अथ वनादिष्विति किमर्थं भाष्यकृतोच्यते ? न चेदृशाभिधानेन तत्त्वनिर्णयः सम्भवति, तदेकफलत्वाच्छास्त्रस्येति चेत् ? अयमभिप्रायः—यथा वैशेषिकादिभिः स्वशास्त्रे पृथिव्यादयः पदार्थाः स्वतन्त्रेण निरूपिताः, तथा मीमांसकैर्न स्वतन्त्रेण केचित्पदार्थाः स्वीकार्याः । किन्तु लोकप्रमाणसिद्धैरेव पदार्थैर्व्यवहर्तव्यम् । तथा च लोके वनादिप्रत्ययो मिथ्येति पूर्वं 'यदि वनेऽन्येनेत्यादि भाष्येणोक्तं, यदि तु नायं प्रत्ययो मिथ्या घटत इति कश्चिदभिनिविशेत, तं प्रति अथ वनादिष्विति भाष्यम् । वनादीनां सत्त्वाभ्युपगमेऽपि न नः किञ्चिदपचीयते इत्याशयेनाह **न तु इति** । द्वौ नञौ प्रकृतदार्ढ्यबोधकाविति न्यायात् ते सन्त्येवेत्यर्थः ।

उपसंहरति—**तस्मादिति**। आकृतेः शब्दार्थत्वे सूत्रकारस्य सम्मति-माह—**उपपन्नमिति**। युक्तियुक्तमित्यर्थः। युक्तिविशेषप्रदर्शनं प्रथमाध्यायस्य तृतीयपादे आकृतिस्तु क्रियार्थत्वादिति सूत्रे करिष्यते। तदाह—**उपरिष्टादिति**।

**इति कल्पकलिकायाम् आकृतिवादवनवादेः**

**भाष्यम्—अथ सम्बन्धः कः? इति यत् शब्दे विज्ञातेऽर्थो विज्ञायते, सतु कृतक इति पूर्वम् उपपादितम्। तस्मात् मन्यामहे केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति। तदिदानीमुच्यते अपौरुषेयत्वात् सम्बन्धस्य सिद्धमिति। कथं पुनरिदमवगम्यते अपौरुषेयः एषः संबन्धः इति। पुरुषस्य संबद्धुरभावात्। कथं संबन्धो नास्ति? प्रत्यक्षस्य प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम्।**

आस्तां तावदीदृशं शब्दार्थद्वयं, यदर्थस्तु एतावान् प्रयासः, स सम्बन्धः कीदृश इत्यभिप्रायेण पृच्छति—**अथ सम्बन्धः क इति**।

ननु प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षण इति भाष्येण सम्बन्धस्य पूर्वमेव कथितत्वात्, पुनस्तस्य प्रश्नो न युज्यते। तथा यच्छब्दे विज्ञातेऽर्थो विज्ञायते इत्युत्तरमपि न सत्, स्वरूपकथनाभावात्। नहि ज्वरस्य किमौषधमिति प्रश्ने येन ज्वरः प्रणश्यति, तदित्युत्तरं समीचीनम्। स्वरूपनिर्देशाभावेन तदर्थिनः प्रवृत्त्यनुपपत्तेरिति चेत्। अत्र केचित्। पूर्वप्रदर्शितसम्बन्धेऽपरितोषात् सम्बन्धान्तराभिधित्सयाऽथ कः सम्बन्ध इति प्रश्नः, अपरितोषकारणं च शब्दार्थसम्बन्धग्रहणादेव शब्देनाऽर्थप्रतीतिः, संज्ञात्वं तु शब्दार्थप्रतीत्युत्तरकाले भवति, उत्तरकालभाविनश्च नाङ्गत्वं, पूर्ववर्त्तिन एव कारणत्वात्, संज्ञात्वमजानानस्य सम्बन्धान्तरेणैवार्थप्रतीतिः पूर्वं भवति, पश्चाज्जिज्ञासमानोऽयं संज्ञी, इयं संज्ञेत्यवधारयति। अजिज्ञासोस्तु तथापि न भवति। अतः संज्ञात्वं न प्रकृतोपयोगि। किन्तु तमेवाविनाभावलक्षणं सम्बन्धं पृच्छति यद्विना ज्ञाते शब्देऽर्थबोधो न स्यात्।

ननु अविनाभावः कथं भाष्यात्प्रतीयते, नहि तद् बोधकं पदं तत्र श्रूयते। सत्यं, न श्रूयते किन्तु यतः शब्दे ज्ञातेऽर्थो ज्ञायते इत्युक्त्यैवा-

ऽविनाभावः प्रतीयते, अन्यथान्यज्ञानेनान्यज्ञानासम्भवादसङ्गतं स्यात् । नहि अविनाभावं विना धूमेन वह्निज्ञानं कस्यचिदभिमतमित्याहुः ।

तन्न । भाष्येऽविनाभावबोधकशब्दाभावात्, यदि यथाश्रुतभाष्येणानुक्तोऽप्यर्थः कल्प्यते, तर्हि अविनाभावोऽपिकल्पनीयः स्याद्विनिगमनाविरहात् । किंच यदि अविनाभावेन शब्दार्थप्रतीतिः स्यात्, तथा संज्ञात्वस्य प्रतीत्युत्तरकालभावित्वेन प्रतीत्यनङ्गत्वं च स्यात्, ततोऽस्यानेनैवाविनाभाव उक्तः स्यादिति तदभिधित्सया पुनः प्रश्नो युज्येतापि, तदुभयन्तु प्रकृते नास्ति ।

ननु संज्ञात्वस्य प्रतीत्युत्तरभावित्वमनुपदमेव प्रदर्शितं स्मर्य्यते, किन्तु तन्न साधु । यत्र प्रयोजकवृद्धेन देवदत्तमानयेति प्रयुक्तं, ततः प्रयोज्यवृद्धेन देवदत्त आनीत इति व्यवहारे प्रतीतेः प्रागेव गमकत्वमवगतं, पश्चाद् देवदत्त इतीयमस्य संज्ञेति विशिष्य निर्धारयति, परन्तु एतद्विशेषनिर्धारणात् प्रागपि प्रयोज्यप्रवृत्तिदर्शनादेव देवदत्त इति पदं कस्यचिदर्थस्य गमकम्, अन्यथा तत्र प्रयोज्यप्रवृत्तिर्न स्यादिति सामान्यतो यत्पदे गमकत्वमवगतं, तदेवेन्द्रियादिविलक्षणं संज्ञात्वमिति न प्रतीत्युत्तरभावित्वं, किन्तु तत्पूर्वभावित्वमेवेति प्रतीत्यङ्गत्वमेव तस्येति नापरितोषलेशोपीति, न सम्बन्धान्तराभिधित्सया पुनः प्रश्नो, न वा पूर्वसम्बन्धविलक्षणोऽविनाभावसम्बन्धोऽत्राभिहित इति ।

ननु तर्हि किमर्थं पुनः प्रश्नः इति भवतैवोपपाद्यताम् । शृणोतु तावत् प्राक् कथितोपि संज्ञासंज्ञिलक्षणः सम्बन्धः शब्दार्थविचारेण व्यवहित इति, स एव नित्यत्वकथनार्थं पुनः स्मार्य्यते । यदपि स्वरूपानिर्देशान्नोत्तरं युक्तमिति । तदपि न । यच्छब्दे ज्ञाते इत्यनेनार्थबोधौपयिकशक्तिरूपस्य सम्बन्धस्यैवाभिधानात् । यच्चाभिधानक्रियां प्रति शब्दस्य करणत्वं कर्तृत्वं वा, तदेव शक्तिस्वरूपं संज्ञित्वं गमकत्वं च ।

तदयं भाष्यार्थः—यच्छब्दज्ञानादर्थज्ञानं, स ज्ञाप्यज्ञापकत्वलक्षणः सम्बन्धः, सतु कृतक इति पूर्वमुक्तमित्यनुवादात् स एव सम्बन्ध इति स्पष्टमेवावगम्यते । न चान्यस्य सम्बन्धस्य कृतकत्वं पूर्वमुक्तमिति । अयंभावः न शब्दार्थयोर्मिथः सम्बन्धः स्वाभाविकः, प्रथमश्रवणेऽर्थप्रतीत्यनुदयात् । किन्तु नेत्रनिकोचादिवत् पुरुषसंकेतकृत इति पौरुषेयत्वादनित्यत्वमेवेत्याह—

**केनापि पुरुषेणेति प्रणीता इति ।** तथा चातीन्द्रियार्थे न वेदाः प्रमाणं पौरुषेयत्वाल्लौकिकवाक्यवदित्याक्षेपः । समाधातुमाह—उच्यते इति । अयं भावः यद्भवतोच्यते शब्दार्थयोः सम्बन्धः सामयिक इति । तत्रेदं पृच्छ्यते समयः प्रतिपुरुषं वा प्रत्युच्चारणं वा सर्गादावेव केनचिदेकेन पुंसा कृतः । आदिकल्पेपि प्रत्येकं सम्बन्धो भिन्नः, उत एक एवेति । एकश्चेत्, न तर्हि कृतकः, एकस्य बहुक्रियासम्भवाभावात् । भेदपक्षोपि न समीचीनः, एकस्मिन्ननेकशक्तिकल्पनापत्तेः ।

किंच येन पुंसा यस्य शब्दस्य यस्मिन्नर्थे संकेतः कृतः, तदर्थंवुबोधयिषया प्रयुक्ताच्छब्दादपरस्य बोधो न स्यात्, तस्य तदीयसंकेतग्रहाभावात् । अथ पुरुषान्तरोच्चरितेऽपि शब्दे स्वसंकेतानुसारेणार्थबोधः श्रोतुरित्यपि न । यस्मिन् शब्दे अनेकैः पुरुषैः अनेके सम्बन्धाः कृताः । तस्मान्नानार्थसंकेतिताच्छब्दादर्थबोधानुपपत्तेः, स्वसंकेतानुसरणायोगात् । न च यत्रैकस्मिन् शब्देऽनेकैः पुरुषैरनेकार्थविषयाः संकेताः कृताः, तत्र विकल्पोऽस्तु । मैवम् । यत्रैकस्मिन्नेव पीलवादिशब्दे आर्यैर्वृक्षविषयः संकेतः कृतः, म्लेच्छैस्तु गजविषयः संकेतः कृतः तस्मात् पीलुशब्दाद्विकल्पेन वृक्षो वा हस्ती वेति बोधापत्तेः इष्यते च तत्र म्लेच्छोक्तार्थवाधः । स च न स्यात्, उभयत्र संकेतसाम्यादिति । न चेदृशस्थले वृक्षगजसमुच्चयबोधोऽभीष्टः, यत्किञ्चिदेकार्थबोधव्यवहारदर्शनात् । स चायं नियमो न सम्बन्धस्य पौरुषेयत्वपक्षे धटते । स्वाभाविकसम्बन्धे स्थिते तद्धेतुकार्थवोधः आर्याणां, स्वसंकेतबलादर्थबोधौ म्लेच्छानामित्यार्यम्लेच्छविभागः सूपपद्यते । उभयोस्तत्र स्वसंकेताभ्युपगमे तु अर्थबोधौपयिकसम्बन्धस्य व्यवहारानुरोधेनोभयकल्पितत्वाविशेषादाप्तोक्तार्थेन म्लेच्छार्थबाधो न स्यात् ।। अनुभवविरुद्धञ्च । विकल्पः यद्येकस्मिन् शब्देऽनेके सन्बन्धाः कृता भवेयुः तर्हि श्रोतुरर्थप्रतिपत्तिकाले संकेतकर्तरि प्रतिपत्तिः स्यात्, तथा चैतत् कृतः सम्बन्ध एतत्कृतो वाऽश्रयणोय इति ब्रीहियववत् सन्देहः स्यात् । स च न दृश्यते—इति न विकल्पः । यत्रैकः श्रोता तत्रास्तु विकल्पः, यत्र तु बहवः श्रोतारः तत्र स्वस्ववोधानुसारात् समुच्चय इत्यपि न, एकार्थाभिधित्सयैव वक्तुः शब्दोच्चारणप्रवृत्तेरेकार्थबोधस्यैव न्याय्यत्वात् सम्बन्धान्तरे वक्तुस्तात्पर्याभावात् । यदि तु वक्तु-

रेकस्मिन्सम्बन्धे सत्यपि तात्पर्ये श्रोतारः स्वस्वसम्बन्धानुसारेणार्थभेदं प्रतिपद्यन्ते, तर्हि उभयोः सम्बन्धबुद्धिभेदादार्यम्लेच्छयोरिव व्यवहारो दुष्येत् ।

किं च प्रतिपुरुषं सम्बन्धकरणं न घटते, श्रोतृसम्प्रतिपन्नस्य सम्बन्धस्य कृतत्वादेव करणत्वानुपपत्तेः, अज्ञातस्याभिनवस्य प्रतिपादकत्वा योगादेव करणत्वानुपपत्तेश्च । न चैवं घटादावपि कृति र्न स्यात्, यस्यां च व्यक्तौ जलाहरणादिकार्यसामर्थ्यमवगतं, तस्याः कृतत्वादेव करणत्वं न सम्भवति, अनुत्पन्नायाश्च व्यक्तेस्तादृशकार्यजननसामर्थ्यानुपलम्भादेव तदर्थिनस्तत्करणे न प्रवृत्तिरिति वाच्यम् । यज्जातीयस्य कार्यस्य यज्जातीय-कार्यजननसामर्थ्यमवगतं तज्जातीयकार्यार्थिनस्तज्जातीयकार्यकरणे प्रवृत्त्युपपत्तेः आकृतेरनादित्वेन ततः प्राक् कथं तत्र सामर्थ्यावगम इति चोद्यानव तारात् । न चेयं गतिः सम्बन्धे वक्तुं शक्या, तस्यानित्यत्वाभ्युपगमात् । यदि चैवं सम्बन्धेऽपि सामान्यं स्वींक्रियते, तर्हि तत एवार्थबोधसम्भवेन कार्यत्वस्वीकारानौचित्यात्सिद्धं नः समीहितं, सम्बन्धनित्यत्वाभ्युपगमात् । नित्यत्वानित्यत्वोभयाकारस्वीकारस्तु सर्वथाऽनुचितः प्रयोजनविरहात्, गौरवाच्च, तस्माच्छक्तिरेव सम्बन्धः, सा च बोधान्यथानुपपत्त्या कल्प्यते । अत एव न भिन्ना एकशक्तिकल्पनयैवार्थबोधसम्भवेनानेकशक्तिकल्पनायां गौरवापत्तेः । न चैतादृशशक्तिसद्भावे प्रथमश्रवणेऽप्यर्थप्रत्ययापत्तिः, ज्ञाताया एव शक्तेरर्थबोधौपयिकत्वाद्, ज्ञापकत्वस्वाभाव्यात् । ज्ञापकं लिङ्गादि ज्ञातमेवानुमापकं भवति, नाज्ञातं सत्तामात्रेण । तथा ज्ञापकत्वापरपर्याय-रूपा शक्तिरपि अर्थबोधनाय स्वज्ञानमपेक्षत इति, न तदज्ञानदशायां शाब्द-बोधापत्तिः, सतोऽप्यर्थस्याज्ञानं दृष्टमिति नाज्ञानमात्रेण तदभावो वक्तुं शक्यः ।

ननु गृह्यमाणत्वात् सत्त्वमिव, अगृह्यमाणत्वादसत्त्वमपि स्यादिति चेत्, न । अत्यन्तासतः कस्यापि गोचरत्वाभावात् । प्रथमश्रवणेऽपि ज्ञात-सम्बन्धानामन्येषां तदैव ग्रहणात् विरुद्धयोः सत्त्वासत्त्वयोर्युगपदेकत्र सद्भावा-सम्भवात् ज्ञातत्वाज्ञातत्वयोस्तु पुरुषभेदेनैकत्र न विरोधः । य एवार्थ एकेन ज्ञातः, स एवापरेण न ज्ञात इत्येकस्मिन् पुरुषद्वयापेक्षया तत्सत्त्वात्, एक

पुरुषगतज्ञानेनापरपुरुषाज्ञानस्याविरोधात् सदसत्त्वयोस्तु एकसम्बन्धिनिष्ठतयैव वक्तव्यत्वादापेक्षिकत्वाभावाद् विरोध एव । न च प्रतिपुरुषं सम्बन्धभेदादत्रापि कस्यचित्सम्बन्धस्य ज्ञातत्वं, कस्यचिदज्ञातत्वमित्यापेक्षिकत्वात्सत्त्वासत्त्वयोरविरोधः, शक्तिसम्बन्धस्यैव व्यवस्थापितत्वेन सम्बन्धभेदस्यानुपदमेव निराकृतत्वात् । एकस्मिन्नेव घटादो अन्धानन्धयोर्ग्रहणाग्रहणयोर्दर्शनेन न विरोधः ।

ननु घटादिग्रहणे चक्षुः कारणमिति, तत् सत्त्वासत्त्वाभ्यां तद्ग्रहणाग्रहणे जायेते, तत्रेन्द्रियवदत्र व्यवहारदर्शनस्यैव तदुपायत्वात् । व्यवहारदर्शिनां सम्बन्धज्ञानं, तददर्शिनां तु नेति, न काप्यनुपपत्तिः । आधानवत्सकृज्जायमानस्य सम्बन्धग्रहणस्य तन्त्रेणोपकारकत्वान्न प्रतिप्रयोगावृत्तिः गृहीतविस्मृतसम्बन्धस्य बोधवारणायाग्निप्रणयनवत् सम्बन्धस्मरणस्य प्रतिप्रयोगमावर्तनीयत्वात् । अव्युत्पन्नो यदा व्यवहारेण शक्ति गृह्णाति तदापि व्युत्पन्नस्य सम्बन्धग्रहणाच्छाब्दबोधो भवति, एवं व्युत्पन्नस्यापि व्युत्पत्तिग्रहबेलायामन्यस्य सम्बन्धग्रहणाच्छाब्दबोध इति पूर्वसिद्धस्यैव सम्बन्धस्य ग्रहणमिति न कार्यत्वमित्यनादिरेव सम्बन्धः । प्रत्युच्चारणं सम्बन्धनिवृत्तिर्नैकेनोच्चारणयत्नेन स्वार्थसम्बन्धः संव्यवहारश्च शक्यते कर्तुमिति भाष्येण शब्दाधिकरणे निराकृतैव ।

सर्गादिपक्षः केवलमवशिष्यते । यथाहुः कुसुमाञ्जलौ ''यदेतत्पटादि निर्माणनैपुण्यं कुविन्दादीनां वाग्व्यवहारश्च व्यक्तवाचां, लिपितत्क्रम व्यवहारश्च बालानां, स सर्वः स्वतन्त्रपुरुषविश्रान्तो व्यवहारत्वात् निपुणतरशिल्पिनिर्मिता पूर्वघटघटनानैपुण्यवत् चैत्रमैत्राग्निपदवत् पत्राक्षरवत् पाणिनीयवर्णनिर्देशक्रमवच्चेति । आदिमान् व्यवहार एवम् अयन्त्वनादिरन्यथापि भविष्यतीति चेत् ? न । तदसिद्धेः आदिमत्तामेव साधयितुमयमारम्भः । न चैवं संसारस्यानादित्वभङ्गप्रसङ्गः तथापि तस्याविरोधात् । नहि चैत्रादिव्यवहारोऽयमादिमानिति भवस्याप्यनादिता नास्ति तदनादित्वेऽपि न चैत्रादिव्यवहारोप्यादिमानिति । अस्त्ववर्वाग्दर्शी कश्चिदेवात्र मूलमिति चेन्न । तेनाशक्यत्वात् कल्पादावादर्शाभासस्याप्यसिद्धेः । साधितौ च सर्गप्रलयौ । न च व्यवहारयितृपुरुषः ह्यशरीरी समधिगतः न चेश्वरस्तथा तत्कथमेवं स्यात्

शरीरान्वयव्यतिरेकानुविधायिनि कार्ये तस्यापि तद्वत्वात् गृह्णाति हीश्वरोपि कार्यवशात् शरीरमन्तरान्तरेति(स्तव-५ कारिका ५)।

तदेतन्नैयायिकमतं निराकर्तुमाशङ्कते—**केनापि पुरुषेणेति**। पूर्वोक्तौ पक्षौ मन्दत्वात् भाष्यकृता स्वयं नोपन्यस्तौ, तर्ककर्कशनैयायिकाभिमतस्यास्यपक्षस्य निराकरणं भाष्यकारः स्वयं—**करोति उच्यते इत्यादिना**। नत्वेतन्मतनिराकरणमयुक्तं वेदप्रामाण्यस्वीकारात्। प्रजापतिर्वा इदमेक एवाग्र आसीत् प्रजापतिर्वेदानसृजत इत्याद्यर्थवादेन पुराणादिना प्रतिपादितस्यैव सृष्टिप्रकारस्यात्राप्यनुसरणादिति चेत्, न। ज्ञानकारणाभावेन सर्वज्ञत्वस्य क्रियाहेत्वभावात् कारणत्वस्य चासम्भवात्, उत्पत्तेः प्राक् कारणस्याप्यभावेन सर्वारम्भानुपपत्तेश्च। यदा च सर्वमिदं दृश्यं नासीत्, तदा जगतः कीदृशी अवस्थेति बुद्धौ नारोहति, क्व च प्रजापतिर्वर्तताम्, पृथिव्यादीनामभावात्। स च शरोरी अशरी, वा। न तावच्छरोरीति सम्भवति, शरीरारम्भकभूतादीनामभावात्। नाप्यशरोरी सृष्टचौपयिकज्ञानेच्छाभावप्रसङ्गात्। तदा ज्ञातुरभावे को जनान् कथयेदनेन सृष्टिः कृतेति। न चाज्ञातं व्यवहाराय कल्प्यते, साधनाभावाच्च नास्य सृष्टौ समीहा युज्यते। न चेच्छामात्रेण भगवतः सृष्टिरिति, हन्त शरीराभावे इच्छापि न सम्भवति, अन्यत्रादर्शनात्। शरीरस्वीकारे कस्तच्छरीरस्य निर्माता, स्वयमित्यपि न, अशरीरस्य स्वशरीरोत्पादनेच्छाकृत्ययोगादन्यथा स्वशरीरवज्जगदपि शरीरं विनैव कुर्यादिति वृथा स्वशरीरारम्भौद्योगः। शरीरं गृहीत्वा शरीरोत्पादने, अन्योन्याश्रयः शरीरान्तरं गृहीत्वा शरीरान्तरोत्पादने व्यक्तैवानवस्था। अथ तच्छरीरं नित्यमिति, नान्योन्याश्रयस्तर्हि जगति कः प्रद्वेषः, एतदपि तद्वन्नित्यमेव स्यात्। अपि च दुःखबहुलेयं सृष्टिरीच्यते, न च करुणामयमूर्त्तेः पितृसहस्राधिकवत्सलस्य सततसकलहितकारिणः परमेशितुरनुकूलेदृशसृष्टिः, न च सुखमयीं सृष्टिं कर्तुमेव न जानाति इति वाच्यम्। सर्वज्ञत्वान् न च तथा—कर्तुमिच्छन्नपि केनचित् प्रतिवद्धः, अप्रतिवद्धशक्तिकत्वात् तदिच्छाविघातकाभावात्। तस्मादनादिपरम्परायात ईदृशसृष्टिप्रवाह एव न तु केनचित्प्रेक्षापूर्वकारिणा कृत इत्येव युज्यते।

अस्तु वा शरीरस्यापीच्छा, तथापि साधनं विना नेच्छामात्रेण क्वचित् कार्योत्पत्तिर्दृष्टा येनात्रापि तथा कल्प्येत।

न च भूतानां सुखदुःखभोजकादृष्टमेव साधनं, सृष्टेः प्राक् तस्याप्य भावात्। अपिचादृष्टमात्रसहायः कुलालादिः क्व घटं निर्मिमाणो दृष्टः इति न तन्मात्रसहायः प्रजापतिरपि जगत्कर्तुमर्हति। न चासाधनोपि लूताकीटः स्वकोशं सृजति, तथा प्रजापतिरपि प्राणिभक्षणजन्यलालाया उपादानत्वात् असाधनत्वाभावात्, दुःखकटाहे, पापच्यमानान्प्राणिन उद्दिधीर्षया प्रवृत्ति-रित्यप्यसारम्। सृष्टेः प्राक् दुःखकटाहाभावेनानुकम्पासम्भवात्। न च दुःखाभावे सुखमपि नास्तीति, कथमिमे सुखिनः स्युरित्यनुकम्पा, तथा सति सुखमयीमेव सृजेन्न दुःखमयीमपि, अथ दुःखं विना सुखस्य उत्पत्तिः स्थितिश्च न सम्भवतीत्यगत्या तत्सृष्टिः, तस्य दुष्करत्वाभावात्, अन्यथा स्वातन्त्र्य-विघातापत्तेः।

न च प्रयोजनं बिना मन्दोपि प्रवर्तते इतिन्यायात्प्रेक्षावतां प्रवृत्तिः स्वार्थपरार्थाभ्यां व्याप्ता, न चास्य जगत्सर्गे किञ्चित्प्रयोजनं, पूर्णकामत्वात्। न च परार्थोपि सृष्टेः प्राक् परस्यैवाभावेन परार्थत्वस्य शङ्कितुमशक्यत्वात्।

न च क्रीडार्था सृष्टिः, क्रीडासाध्यसुखापेक्षिणोऽवाप्तकामत्वानुपपत्तेः। स्वल्पप्रयाससाध्या क्रीडा भवति महीमहीधरमहार्णवादिरचनाऽतिव्यापार साध्या क्रीडेति, न सचेतसां चेतसि विश्वासः पदमाधत्ते।

किंच सृष्टेरनुकम्पानिमित्तकत्वाभ्युपगमेऽपि संजिहीर्षायां किं निमित्त-मिति वक्तव्यम्। नहि तत्रापि सैव निमित्तमिति शक्यमभ्युपगन्तुं विरुद्धकार्य-द्वयस्यैकहेतुकत्वासम्भवात्। स्रष्टुर्ज्ञानं न कस्यचित्सम्भवतीत्युक्तमेव।

नन्विदानीन्तनानां तदज्ञानेऽपि सृष्ट्युत्तरोत्पन्नानां तज्ज्ञानसम्भव इति वाच्यम्। कुतो वयमुत्पन्ना इति ज्ञानस्यैव तेषामसम्भवेन सृष्ट्युत्पत्तिज्ञानस्य दूरापास्तत्वात्। यदि हि ते उत्पत्तेः प्राग् जगदसद्रूपं दृष्ट्वा, ब्रह्मणो व्यापारा-नन्तरं पुनः सद्रूपं जगत् पश्येयुः, तदाऽवधारयेयुः, तत्स्रष्टृत्वम्।

न चैतत् सम्भवति, तेषामेव तदानीमसत्त्वात्। अहमेव सर्वस्य स्रष्टेति प्रजापतिवाक्याज्जानन्तीति न आत्मप्रशंसयापि तस्यैवमुक्तिसम्भवात्। वेदवाक्यादवगच्छन्ति। तथा हि—प्रजापतिर्वा इदमेक एवासीत् सोऽकाम-यत प्रजाः पशूनसृजतेति श्रुतेरिति। न। वेदस्यापि प्रजापतिप्रणीतत्वे तद्वदेवानाश्वासापत्तेः, यदि वेदो नित्यः, सृष्टेः प्रागपि स्थित एव। तदा-

ऽसृजत इतिभूतकालनिर्देशानुपपत्तिः, स्रष्टा स्रक्ष्यति वेत्येवमुपादानस्यैव योग्यत्वात्। न चैवं सृष्टचपलापः सृष्टिवाक्यस्य स्तुतिपरत्वेन स्वार्थे तात्पर्याभावात्। नहि सृष्टिवादः प्रमाणमूलः, येन तदनङ्गीकारे अपलापः स्यात्।

तथा चोक्तम्—

"पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम्।
उपाख्यानादिरूपेण वृत्तिर्वेदवदेव नः॥"

(सं०आ०परि० ३) इति॥

यथा धर्मविधावधर्मप्रतिषेधे वेदस्य सृष्टचाद्युपक्रमेण प्रवृत्तिः, तथा-भारताद्युपाख्यानस्यापीति न सृष्टिप्रतिपादनपरत्वम्। अतस्तत्र न तत्प्रामाण्यम्। यदर्थपरो यः शब्दः, स तत्र प्रमाणमिति स्वीकारात्। भारतेऽपि वेदवदध्ययनविधिर्दृश्यते 'श्रावयेच्चतुरो वेदानिति। अथाग्निहोत्रादयोपि धर्मा वर्णिताः क्वचित्तत्र स्मार्तधर्मा अपि निरूपिता इति तस्यापि धर्माधर्मपरत्वमेव निर्णीयते इति, न सृष्टिप्रतिपादने तस्य मुख्यं तात्पर्यम्, अतः सृष्टचनङ्गीकारे नापलाप इति भावः। प्रजापतिवाक्यत्वे वेदस्यानादित्वं न स्यात्। ननु सृष्टेः प्रागपि प्रजापतिरासीदेव, तत्र च वेदोपीति कथमनादित्वभङ्गः, तस्मिन्नविश्वासस्य पूर्वमेव प्रदर्शितत्वादिति दिक्। सांख्यवैशेषिकादिमत-प्रदर्शनं तन्निराकरणं च नेह प्रदर्श्यते, विस्तरभयात् प्रकृतभाष्यव्याख्याया-मुपयोगाभावाच्च।

प्रत्यक्षस्य प्रमाणस्याभावादिति। प्रमाणाभावात् प्रमेयाभावसिद्धि-रित्यर्थः। यदि कश्चित् शब्दार्थयोः सम्बन्धः स्यात्, तर्हि कस्यचित्प्रत्यक्षेणो-पलभ्येत, न चोपलभ्यते। तस्मान्नास्ति।

न च प्रत्यक्षाभावेऽपि अनुमानमेव तत्र प्रमाणं-सम्बन्धः सकर्तृकः शब्दार्थसम्बन्धत्वात् डित्थादिसम्बन्धवत् इति चेत्, सादित्वस्य तत्रोपाधित्वात् सकर्तृकत्वस्य स्मर्यमाणकर्तृकत्वप्रयोज्यत्वेन हेतोरप्रयोजकत्वाच्च। यदि गवादिशब्दार्थयोः सम्बन्धस्य कस्यचित् कर्त्ता स्यात् तदा तद्वदुपलभ्येत, न चोपलभ्यते। तस्मान्नास्ति तदाह—**तत्पूर्वकत्वाच्चेतरेषाम् इति**। न चार्थबोधान्यथानुपपत्त्या पौरुषेयसम्बन्धकल्पनम्, स्वाभाविकसम्बन्धेनार्थबोधो-

पपत्तेः अन्यथानुपपत्त्यभावात् । न चागृहीतसम्बन्धाच्छब्दादर्थबोधान्यथानुपपत्त्या तत्कल्पनमनादिवृद्धव्यवहारेण स्वाभाविकशब्दार्थसम्बन्धग्रहणेनाऽन्यथाप्युपपत्तेरिति ।

यद्वा पूर्वोक्तानुमानमसत् । डित्थादिशब्देऽपि शक्तिरूपसम्बन्धस्य नित्यस्यैव स्वीकारेण सिद्धसाधनप्रसङ्गात्, तादृशसम्बन्धग्राहकसंकेतस्यानित्यत्वेन सम्बन्धेऽनित्यत्वावगमो भ्रमः ।

वस्तुतस्तस्यनित्यत्वादिति सम्बन्धग्राहकव्यवहारस्यानादितया गवादिपदे पूर्वपूर्वंगृहीतस्यैव सम्बन्धस्योत्तरात्तरेण ग्रहणान्नानित्यत्वभ्रमोपि निखिल विश्वस्यैकदोत्पत्तिप्रलयसद्भावे न किञ्चित् प्रमाणम् । प्रजापतेः सर्वज्ञत्वमपि पुरुषत्वादेव न सिद्धयति, बुद्धादिवत् । बुद्धस्याप्यसर्वज्ञत्वं, तत एव हेतोरस्मदादिदृष्टान्तेन साधनीयमिति, प्रजापतेः सर्वज्ञत्ववज्जगत् स्रष्टृत्वमपि निरसनीयम् । तस्मात् सर्गप्रलययोः पदपदार्थसम्बन्धस्य वेदानां च न कार्यत्वं पुरुषत्वादेवास्मदादिवन्न तस्य प्रजापतेरतिशय इत्यदृष्टहेतुकएव भवःस्वीकार्यः । अनुष्ठानं च ज्ञानाद् ऋते न सम्भवति, ज्ञानं च वेदं विना न, वेदोऽपि पदपदार्थसम्बन्धैर्विना नेति सर्गात्प्रागपि पदपदार्थसम्बन्धाः सन्त्येव ।

यथाहु र्भगवान् मनुः—

'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।'

( १-२३ ) इति ।।

तस्मात् स्रष्टुरेव वेदपूर्वत्वं, न वेदस्य स्रष्टृपूर्वत्वमिति बोध्यम् । न च पदपदार्थसम्बन्धस्य कर्त्ता चिरातीत इति इदानीन्तनैर्न स्मर्यते, तत् स्मरणस्य प्रकृते उपयोगाभावात् सम्बन्धमात्रं स्मर्यते, तस्यैवोपयोगात् इति नास्मरणमात्रेण सम्बद्धुरभावः सिद्धयतीत्यभिप्रायेण शङ्कते—

**भाष्यम्—ननु चिरवृत्तत्वात् प्रत्यक्षस्याविषयो भवेद् इदानीन्तनानाम् । नहि चिरवृत्तः सन् न स्मर्य्येत । नच हिमवदादिषु कूपारामादिवत् अस्मरणं भवितुमर्हति । पुरुषवियोगो हि तेषु भवति, देशोत्सादेन कुलोत्सादेन वा । न च शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति । स्यादेतत् सम्बन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणमनाद्रिय-**

**माणा विस्मरेयुः इति । तन्न । यदि हि पुरुषः कृत्वा सम्बन्धं व्यवहारयेत्, व्यवहारकाले अवश्यं स्मर्तव्यो भवति । संप्रतिपत्तौ हि कर्तृव्यवहत्रोरर्थः सिध्यति न विप्रतिपत्तौ । नहि बृद्धिशब्देन अपाणिनेर्व्यवहारतः आदैचः प्रतीयेरन् पाणिनिकृतिमननुमन्यमानस्य वा । तथा म कारेण अपिङ्गलस्य न सर्वगुरुस्त्रिकः प्रतीयते, पिङ्गलकृतिमननुमन्यममानस्य वा । तेन कर्तृव्यवहारौ संप्रतिपद्येते । तेन वेदे व्यवहारादिभिरवश्यं स्मरणीयः सम्बन्धस्य कर्त्ता स्यात्, व्यवहारस्य च । न हि विस्मृते वृद्धिरादैच् ( पा० १ सू० १ ) इत्यस्य सूत्रस्य कर्त्तरि बृद्धिर्यस्याचामादिः ( पा० १ अ० १ सू० ३२ ) इति किञ्चित् प्रतीयेत ।**

**न्विति** । चिरवृत्तमपि स्वशाखागोत्रवत् स्मर्तुं शक्यमित्याह—**नहीति** । नहि न स्मर्येत, किन्तु स्मर्येतैवेत्यर्थः । चिरातीतस्याऽस्मरणे निदर्शनमाह—**हिमवदादीति** । तत्रास्मरणे कारणमाह—**पुरुषवियोग इति** । अत्रापि विकल्पेन कारणद्वयमाह **देश इति** । प्रकृते तदभावं दर्शयति— **न चेति** । उपयोगाभावान्न कर्तृस्मरणमिति गूढाभिसन्धिनोक्तं स्पष्टयन्नाह—**निष्प्रयोजनमिति** । निराकरोति-**तन्नेति** । अयं भावः इदानीं स्वकीयवेदादिव्यवहारस्य प्रामाण्यसिद्धये पदपदार्थसम्बन्धस्य, तादृशव्यवहारस्य च कर्तुः स्मरणं बोद्धुरावश्यकम्, अन्यथा कर्तृव्यवहर्त्रोरसंप्रतिपत्त्या व्यवहारस्याप्रामाणिकत्वं स्यात्, स्वाभाविकसामर्थ्यवशेन शब्दस्यार्थंप्रतिपादकत्वानङ्गीकारात्, आप्तोक्तत्वबलादेव शब्दोऽर्थं प्रतिपादयतीत्येवाङ्गीकारात् । तथा चार्थबोधसमये येन पुरुषेण शब्दार्थसम्बन्धाः कृताः, तस्यैव चेदृशार्थप्रतिपादकपदघटितेदृशवाक्ये वेदव्यवहारः, ईदृश एवार्थोऽभिमतस्तस्येति समयव्यवहारयोरेककर्तृकत्वसिद्धये तत्कर्तृस्मरणमावश्यकम् । तदाह—**सम्प्रतिपत्तौ हि कर्तृव्यवहत्त्रोरर्थः सिद्धयतीति** । कर्तृव्यवहत्त्रोरसंप्रतिपत्तौ तु न प्रामाणिकार्थसिद्धिरित्याह—**न विप्रतिपत्ताविति** । यथा बौद्धा यावदिदं बुद्धोक्तमिति न जानन्ति, तावन्न तत्प्रतिपद्यन्ते आप्तोक्तत्वानवधारणात्, तथा वेदवाक्यादर्थंमवगच्छता तत्कर्तुराप्तत्वमवश्यमेव स्मर्तव्यं, तन्निवन्धनत्वात्तदर्थंनिश्चयस्य । न च वेदवाक्यादर्थंमवधारयतां पदपदार्थसम्बन्धकर्तुः तस्याप्तत्वैकत्वयोश्च स्मरणं दृश्यते इति भावः । पारि-

भाषिकशब्दादर्थंप्रतिपत्तौ समयकर्तुर्नियमेन स्मरणं भवतीत्यत्र दृष्टान्तमाह— **नहि वृद्धिशब्देनेति ।** अपाणिनेः—पाणिनिभिन्नस्य तस्य समयकर्तृत्वाभावात् पाणिनिकृतमिति वृद्ध्यादैच्पदपदार्थयोः समयस्य कर्ता पाणिनिरितिज्ञानं शब्दार्थप्रतिपत्तावावश्यकमेव । अत्रैव दृष्टान्तान्तरमाह-**तथेति** । पिङ्गलः-छन्दः शास्त्रस्य सूत्रकारः । अन्यत्सर्वं पूर्ववदेव बोध्यम् । समयव्यवहारयोरेककर्तृत्वज्ञानं विना नार्थप्रतिपत्तिरित्यत्र दृष्टान्तमाह । नहि विस्मृते इति । तथा च व्यवहारसमये तत्स्मरणमावश्यकमिति ।

ननु नायं दृष्टान्तः प्रकृते संगच्छते "बृद्धिर्यस्ये"ति सूत्रे को बृद्धिपदार्थ इति जिज्ञासायामादैजिति व्याख्यातुः कथनेऽपि बोधदर्शनान्नियमेन सूत्रकारस्मरणाभावादिति चेत् ? न । पाणिनिरिति स्वरूपेण सूत्रकारस्मरणाभावेऽपि यः बृद्धिपदस्य समयकर्ता तस्यैवायं व्यवहार इत्येवं रूपेण समयकर्तृत्वेन तदीयस्मरणसत्त्वात् । गवादिशब्दे तु सास्नादिमती गौरित्येवं संकेताभावान्न गां पश्येत्यादिव्यवहारदशायां तत्स्मरणावकाश इति, नात्र सम्बन्धः पौरुषेयः इति समयस्यापि वाक्यार्थज्ञानसाध्यतया सर्वशब्दार्थानां सम्बन्धाभावे कथं सम्भवः, नहि अविज्ञाते सास्नादिपदार्थे सास्नादिमती गौरिति प्रयोक्तुं शक्यते ।

किं च "बृद्धिर्यस्ये"त्यादिषु शब्दसाधुत्वरूपदृष्टफलेषु समयव्यवहारयोरेककर्तृत्वस्य, आप्तोक्तत्वस्य च स्मरणं विनापि अर्थप्रतिपत्तिः भवेत्, किन्तु योऽभ्युदयफलकः साधुशब्दप्रयोगः, स पाणिनिस्मरणं विना न सम्भवति, अनुशासनस्मरणपूर्वकसाधुशब्दप्रयोगे एव धर्मोत्पत्तिस्वीकारात्, अन्यथा सर्वो लोकोऽभ्युदयेन युज्येतेति स्पष्टं महाभाष्ये । एवमाश्वलायनघटकाद्याकारस्य वृद्धिनिश्चयः कितिचेति पाणिनीयानुशासनस्मरणादेव, नान्यथेति तथाऽदृष्टार्थको व्यवहारः समयव्यवहारकर्त्रोः सम्प्रतिपत्त्यभावेऽपि विप्रतिपत्त्यभावाद् भवतु, अग्निहोत्रादिलक्षणोऽदृष्टार्थकस्तु वैदिकव्यवहारो वाक्यमात्रप्रमाणको न वाक्यकर्तुराप्तत्वनिश्चयं विना भवेदित्यवश्यं तादृशव्यवहारमिच्छतः वेदसम्बन्धयोः कर्तुः स्मरणमपेक्षितम् । न च व्यवहारकाले तत्स्मरणं दृश्यते इत्यनुपलब्ध्या तदभावावगमान्नित्यत्वमेव सम्बन्धस्येति । सम्बन्धस्य पौरुषेयत्वखण्डनमुपसंहरति—**तस्मादिति ।**

**भाष्यम्—तस्मात् कारणादवगच्छामः न कृत्वा सम्बन्धं व्यवहारार्थं केनचिच्छब्दाःप्रणीता इति । यद्यपि च विस्मरणमुपपद्येत, तथापि न प्रमाणमन्तरेण सम्बद्धारं प्रतिपद्येमहि । यथा विद्यमानस्याप्यनुपलम्भनं भवतीति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे । तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्ध इति ।**

विस्मरणमभ्युपेत्याप्याह—**तथापीति** । दृष्टान्तमाह—**यथेति** । यद्यपि चिरवृत्तस्यास्मरणं सम्भवति, तथापि प्रमाणं विना न तत्स्वीकारः सम्भवनि, विपरीतस्यापि सम्भवात् । अत एव विद्यमानस्यापि मूलकीलकादेरनुपलम्भवच्छशविषाणस्यानुपलम्भेपि न तत्स्वीकारः । कदाचिदपि प्रमाणेनानुपलब्धेः, मूलकीलकादीनान्तु कदाचिदुपलम्भदर्शनात्तदानीमनुपलम्भेपि स्वीकार इति वैषम्यमिति भावः । सिद्धमर्थं पुनराह—**तस्मादिति** ।

पौरुषेयत्वे अर्थापत्तिप्रमाणमाशङ्कते—**नन्विति** ।

**भाष्यम्—ननु अर्थापत्त्या सम्बद्धारं प्रतिपद्येमहि । न ह्यकृतसम्बन्धाच्छब्दादर्थं प्रतिपद्यमानान् उपलभामहे । प्रतिपद्येरंश्चेत्, प्रथमश्रवणेऽपि प्रतिपद्येरन् । तदुपलम्भनादवश्यं भवितव्यं सम्बन्धेन इति चेत् ? न । सिद्धवदुपदेशात् । यदि सम्बद्धुरभावात् नियमतो नार्थाः उपलभ्येरन्, ततोऽर्थापत्त्या सम्बद्धारमवगच्छामः । अस्ति तु अन्यः प्रकारः । वृद्धानां स्वार्थेन संव्यवहरमाणानां उपशृण्वन्तो बालाः प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते । तेऽपि वृद्धा यदा बालाः आसन्, तदान्येभ्यो वृद्धेभ्यः तेऽप्यन्येभ्यः इति नास्त्यादिः इत्येवं वा भवेत् । अथवा न कश्चिदेकोऽपि शब्दस्यार्थेन सम्बन्ध आसीत्, अथ केनचित् सम्बन्धाः प्रवर्तिताः इति । अत्र वृद्धव्यवहारे सति नार्थादापद्येत सम्बन्धस्य कर्ता । अपि च व्यवहारवादिनः प्रत्यक्षमुपदिशन्ति, जल्पयन्ति इतरे सम्बद्धारम् । न च प्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी । तस्मात् सम्बद्धुरभावः ।**

**भाष्यम्—अव्यतिरेकश्च (८।४) यथा अस्मिन् देशे, सास्नादिमति गोशब्दः एवं सर्वेषु दुर्गमेष्वपि । बहवः सम्बद्धारः कथं सङ्गस्यन्ते ? एको न शक्नुयात्, अतो नास्ति सम्बन्धस्य कर्त्ता । अपरः**

**आह अव्यतिरेकश्च नहि, सम्बन्धव्यतिरिक्तः कश्चित् कालोऽस्ति। यस्मिन् न कश्चिदपि शब्दः केनचिदर्थेन सम्बद्ध आसीत्। कथं? सम्बन्धक्रियैव हि नोपपद्यते। अवश्यमनेन सम्बन्धं कुर्वता केनचिच्छब्देन कर्त्तव्यः। येन क्रियेत, तस्य तेन कृतः अथान्येन केनचित् कृतः? तस्य केनेनि? नैवावतिष्ठते। तस्मादवश्यमनेन सम्बन्धं कुर्वता अकृतसम्बन्धाः केचन शब्दाः वृद्धव्यवहारसिद्धाः अभ्युपगन्तव्याः। अस्ति चेत् व्यवहारसिद्धिः, न नियोगतः सम्बद्धैर्भवितव्यमिति अर्थापत्तिरपि नास्ति।**

**भाष्यम्—स्यादेतत्। अप्रसिद्धसम्बन्धाः बालाः कथं वृद्धेभ्यः प्रतिपद्यन्ते? इति नास्ति दृष्टेऽनुपपन्नं नाम। दृष्टा हि बालाः वृद्धेभ्यः प्रतिपद्यमानाः। न च प्रतिपन्नसम्बन्धाः सम्बन्धस्य कर्तुः। तस्माद्वैषम्यम्।**

एतच्च पूर्वमेव व्याख्यातम् **सिद्धवदिति** स्वाभाविक सम्वन्धवशादेव शब्दा अर्थं प्रत्याययन्ति, न तु पौरुषेयसम्बन्धबलात् समयग्रहाभावादेव प्रथमश्रवणे अर्थप्रत्ययो न पौरुषेयत्वाभावात्। तथा च शब्दादर्थप्रत्ययस्यान्यथाप्युपपत्तेः। नार्थापत्तिः, तस्य पौरुषेयत्वे प्रमाणम् तदाह—**अन्यः प्रकार इति**। प्रकारमेव दर्शयति-**बृद्धानामिति**। सर्वशब्दार्थानां सम्बन्धाभावे पूर्वोक्तरीत्या सम्बन्धकरणमेव न सम्भवति इत्याह—**न कश्चिदिति**। अविरोधिनि प्रमाणे सति कल्पनापि स्यात्, प्रकृते व्यवहारवादिनः प्रत्यक्षे विरोधिनि प्रमाणे जाग्रति कथं तत्कल्पनाऽपीत्याह—**अपि चेति**। प्रत्यर्थिनि विरोधिनि। एतावता प्रबन्धेन साधितमर्थमुपसंहरति—**तस्मादिति**। शब्दार्थसम्बन्धस्य पौरुषेयत्वानुपपत्ति दर्शयितुमाह—**अव्यतिरेकश्च**। अव्यतिरेको द्विधा देशाव्यतिरेकः, कालाव्यतिरेकश्च। तत्र प्रथममाह—**यथेति**।

ननु दुर्गमेषु को गत्वा दृष्टवानत्रापि गवि गोशब्दः प्रयुज्यते इति, यदि कश्चिद् गत्वा ददर्श तर्हि सम्बन्धोऽपि तथैव गच्छेदिति, नानुपपत्तिः। अपि च परैरीश्वरः शब्दार्थसम्बन्धस्य कर्त्तेति कल्प्यते, तस्य चैश्वर्ययोगात्सर्वत्र गमनमप्रतिहतमिति, नानुपपत्तिः। बहूनामपि कार्यवशादेकत्र गमनं दृश्यत

एव । सर्वत्र समानशब्दार्थंव्यवहारदर्शनात् कल्पनीयं बहूनां तेषाम् एकत्रागमनमिति ।

अथवा मास्तु सर्वेषाम् एकत्रागमनमेकेन कथितस्यापि लोके नान्यत्र नयनं बृद्ध्यादिवत्सम्भवति । तथा च नानुपपत्तिः सम्बन्धस्य पौरुयेयत्वेपीत्यरुचेः पक्षान्तरमाह—अपर आहेति । यदि कश्चित् कालः सम्बन्धशून्यः स्यात्, तर्हि सम्बन्धक्रिया नोत्पद्येतेत्येतत् स्पष्टयति—**अवश्यमिति** । यदि चैतादृशसम्बन्धक्रियासिद्धये केचिच्छब्दाः प्रसिद्धसम्बन्धा इति स्वीक्रियेत, तैरेवाऽन्येषां सम्बन्धकरणं युज्येत, तर्हि ते प्रसिद्धसम्बन्धाः शब्दा इदानीन्तनोपलभ्यमानगवादिषु मध्ये सन्ति, नवा । नोचेत्तेषां तदा सद्भावे प्रमाणाभावः । अथ सन्तीति चेत्, के पुनस्ते । नहि उपलभ्यमानेषु गवादिशब्देषु मध्ये अयं प्रसिद्धसम्बन्धको नायमिति विवेकः कस्यचिद् दृश्यते, येन तथा कल्पना स्यात् । किंच शब्दार्थयोरनादित्वमेव सम्बन्धस्यानादित्त्वे हेतुः शब्दाधिकरणे शब्दस्य, आकृतेश्चानादित्वं साधितमिति सम्बन्धस्यापि अनादित्वं सिद्धमेवानर्थकस्य शब्दस्यासम्भवादिति ध्येयम् ।

अप्रसिद्धसम्बन्धानां बालानां शब्दैर्व्युत्पत्तिर्न सम्भवति गृहीतसम्बन्धानामेव शब्दादर्थंप्रतिपत्तिदर्शनादित्याशङ्कते—**अप्रसिद्धसम्बन्धा इति** । समाधत्ते—**नहि दृष्टे अनुपपन्नं नामेति** । अयं भावः अप्रसिद्धसम्बन्धैः पदैर्वाक्यरचना तावन्न सम्भवति सम्बन्धयितुः सम्बन्धं जनयितुं प्रसिद्धसम्बन्धज्ञापनाय तु प्रसिद्धसम्बन्धैः पदैर्वाक्यरचना सम्भवतीत्येव, केवलं जिज्ञासूनामज्ञातसम्बन्धतया तदर्थंबोधो न सम्भवतीत्युच्यते, तद् दृष्टविरुद्धम् । तदाह—**नहि दृष्टेऽनुपपन्नं** नामेति । तर्हि कीदृश उपायः प्रयोजकवृद्धस्य प्रवृत्तिलिङ्गकानुमानावगतार्थंबोधोऽसकृद् दृश्यमानः अज्ञातसम्बन्धस्य व्युत्पित्सोः शब्दार्थसम्बन्धावगमोपायः । न चैवं सर्वंशब्दार्थसम्बन्धाभावेऽपि हस्तचेष्टादिना शब्दार्थसम्बन्धो ज्ञातुं शक्यते, पुरस्थितमङ्गुल्या निर्दिशन्निदमानयेत्यादि दर्शनादिति चेत् ? न । हस्तचेष्टादीनामपि गृहीतसम्बन्धानामेव बोधकत्वात् कस्यचिद्धस्तचेष्टया कुत्रचित् प्रवर्तमानं यदि कश्चित् पश्यति, तदा ईदृशचेष्टया एवमर्थो बोध्य इति तादृशचेष्टाविशेषे तादृशार्थंसम्बन्धं

गृह्णाति, सर्गादौ तु तथा दर्शनाभावाच्छब्दवच्चेष्टापि न सम्बन्धग्रहहेतुरिति कथं सर्गादावीश्वरोऽगृहीतसम्बन्धान् तादृशैः शब्दैः चेष्टादिभिर्वा अर्थान् प्रतिपादयेत् । कथं च ते ततोऽर्थमवगच्छेयुः । तस्मात् प्रत्येक्षेणाभिधेयान् पश्यतः प्रतिपन्नत्वात् प्रयोज्यस्य तदीयबोधं प्रवृत्त्यादिलिङ्गेनानुमानस्य अर्थापत्त्या तादृशार्थाभिधान सामर्थ्यं शब्दे कल्पयतः त्रिप्रमाणः सम्बन्धग्रहो भवतीत्येव युक्तमिति ।

**भाष्यम्—अर्थेऽनुपलब्धे (८।४) अनुपलब्धे च देवदत्तादावर्थेऽनर्थकं संज्ञाकरणम्, अशक्यश्च विशेषान् प्रतिपत्तुं हि संज्ञाः क्रियन्ते विशेषांश्चोद्दिश्य तद्विशेषेष्वज्ञायमानेषु उभयमप्यनवक्लृप्तम् । तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्धः । अतश्च तत् प्रमाणम् (८।४) अनपेक्षत्वात् (८।५) नच एवं सति पुरुषान्तरे प्रत्ययान्तरञ्च अपेक्ष्यते । तस्माच्चोदनालक्षणः एव धर्मो नान्यलक्षणः । बादरायणग्रहणमुक्तम् (८।१८) ।**

अर्थे चानुपलब्धे इति व्याचष्टे सतो हि संज्ञिनः संज्ञया भवितव्यं विशेषावगमाय अनुपलब्धेऽसतीव व्यावृत्तिबुद्ध्यभावात् संज्ञाकरणमशक्यमनर्थकं चेति भावः । सम्बन्धस्य पौरुषेयत्वाभावान्न तद्द्वारापि सापेक्षत्वमिति भावः । चोदनाप्रामाण्यसमर्थनमुपसंहरति—तस्माच्चोदना लक्षणा इति ।

इति कल्पकलिकायां सम्बन्धाक्षेपपरिहारः ।

शब्दार्थसम्बन्धानां नित्यत्वं प्रसाध्य पूर्वोक्तं चित्राप्रामाण्याक्षेपं परिहर्तुमनुवदति यदुक्तमिति ।

**भाष्यम्—अथ यदुक्तं अनिमित्तं शब्दः कर्मकाले फलादर्शनात् कालान्तरे च कर्माभावात् प्रमाणं नास्ति इति । तदुच्यते । न स्यात्प्रमाणम्, यदि पञ्चैव प्रमाणान्यभविष्यन् । येन येन हि प्रमीयते तत्तत्प्रमाणं, शब्देनापि प्रमीयते । ततः शब्दोऽपि प्रमाणम् । यथैव प्रत्यक्षम् । नच प्रमाणेनावगतं प्रमाणान्तरेणानवगतम्-इत्येतावता अनवगतं भवति । न चैवं श्रूयते—कृते कर्मणि तावतैव फलं भवति । किन्तु कर्मणः फलं प्राप्यते इति, यच्च कालान्तरे फलस्यान्यत्प्रत्यक्षं करणमस्ति इति । नैष दोषः; तच्चैव हि तत्र कारणम् शब्दश्चेति । चित्राक्षेपनिरासः ।**

तत्र चित्रादिचोदनानां दृष्टफलानां निष्फलत्वसाधनाय कर्मकाले फलादर्शनात्, कालान्तरे च कर्माभावादिति हेतुद्वयमुक्तं, तदुभयमसिद्धम् । तथा हि यदि चित्रायागानुष्ठानानन्तरं पशुफलं भवतीत्याम्नायो बोधयेत्, तदा तदनुष्ठानानन्तरं पशुफलोत्पादादर्शनात्तदप्रमाणमित्याशङ्क्येतापि । तत्तु न, आनन्तर्यप्रतिपादकशब्दश्रवणाभावात् । तथा चानन्तर्यस्य फलदानकालत्वेन विधानाभावात्स्वकाले फलदानमसिद्धम्, तथानन्तर्यविधानाभावात् कालान्तरभाविनोऽपि पश्वादेः तत्फलत्वात्, व्यापारद्वारा चित्रादेस्तदापि सत्त्वात् ।

कालान्तरे कर्माभावादिति। द्वितीयोऽपि हेतुरसिद्धः कालान्तरस्यापि स्वकालत्वात् तत्र फलदानं स्वसद्भावश्चेत्युभयमेवास्ति, नत्वेतदुभयाभाव इति त्वदीयहेतुद्वयमसिद्धमेवेति । न चानन्तर्यप्रतिपादकशब्दाश्रवणेऽपि सामर्थ्यादेव तल्लाभ इत्युक्तं, सत्यमुक्तं, दुरुक्तं तु तत् । कृष्यादिवत् कालान्तरेऽपि कर्मफलदर्शनात् कर्मस्वभावादानन्तर्यलाभासम्भवात् । न चानन्तर्याविधानेऽपि मर्दनादिफलवत् कुतोऽनन्तरमेव न जायते, देशकालाद्यपेक्षया कर्मणां विचित्रस्वभावत्वात् । कानिचित्कर्माणि वृक्षारोपणादिवत् स्वतः चिराय फलजननसमर्थानि कानिचिद्देशकालापेक्षया विलम्बफलानि कानिचित् स्वविपरीतेन फलं ददानेन कर्मणा प्रतिवद्धानि कालान्तरे फलदानाय तिष्ठन्ति इति ।

यदपि प्रत्यक्षविसंवादेनाप्रामाण्यमुक्तं, तदपि न । भिन्नविषयत्वात्, अनन्तरफलानुपलम्भाज्जायमानः प्रत्यक्षविसंवादः अविशेषप्रवर्तिनीं चोदनां बाधितुं नोत्सहते, विषयभेदात् । यदि तु मर्दनवत् चित्राकर्मणोऽनन्तरफलकत्वमनुमीयते, तर्हि समानविषयकत्वात् प्रत्यक्षेणैव बाधः, अनन्तरफलादर्शनात् । अथ कृष्यादिकर्मणोऽङ्कुरादिरूपं फलमचिरेणैवोत्पद्यते, प्रकृतेऽपि चित्रादिजन्यमपूर्वमचिरेणैवोत्पद्यत इति, समम् यथाङ्कुरस्य सूक्ष्मत्वादनुपभोगयोग्यत्वान्न फलत्वं, तथा चित्राया अपि अपूर्वं बोध्यमित्यपि समम् । स्थूलीभूतं फलात्मना परिणतं तूभयमपि भोगयोग्यत्वात् फलमित्युच्यते, तदेतत्सर्वमभिप्रेत्याह भाष्ये—**उच्यते इति** । न च प्रमाणान्तरसम्वादाधीनं प्रामाण्यं, रसज्ञानस्य प्रमाणान्तरासंवादेऽपि प्रामाण्याङ्गीकारादित्याह—**न**

**च प्रमाणेनावगतमिति**। अनन्तर्यस्याशाब्दत्वं स्फुटयति—**न चैवमिति**। तथा च पूर्वपक्षिणो हेतुद्वयस्यासिद्धिः प्रदर्शिता भाष्यकृता। कालान्तरेऽपि दृष्टस्य प्रतिग्रहादेरेव पश्वादिफलं न चित्रायाः, तथा च नैष्फल्यं दुर्वारमित्याशङ्कते—**कालान्तर इति**। तच्चैवेति। स्वामिप्रसादहेतुकः प्रतिग्रहादिः, कुतः ? तस्यैव; नान्यस्य, सेवाऽपि व्यभिचारिणी सेवमानस्य क्वचित्तादृशप्रतिग्रहलाभो न भवति, भवति त्वसेवमानस्य तस्मादव्यभिचारिकारणान्तराभावात् चित्रायाः कारणत्वं स्वीकार्यम्।

केचित्तु कार्यमात्रं स्वत एव भवति किं दृष्टादृष्टहेतुकल्पनेनेत्याहुः, तदसत्। सर्वप्रमाणविरोधात्। मर्दन-तत्फलयोः प्रत्यक्षेणैव हेतुफलभावो दृश्यते, अन्येषामनुमानादिना इति, नाकारणोत्पत्तिः कस्यचिदपि।

ननु प्रतिग्रहादेरनन्तरं फलोत्पत्तिदर्शनात्तस्यैव कारणत्वमस्तु, प्रत्यक्षसम्प्रतिपत्तेः चित्रादीनां कारणत्वन्तु कुतः ? शब्दप्रामाण्येन तस्यापि कारणत्वात्। नहि एकेन प्रमाणेनावगतं प्रमाणान्तराप्रवृत्त्या तदप्रमाणं भवति, रसादिबुद्धेरतथात्वस्य दर्शितत्वात्।

इदं पुनरिह विचार्यं कालान्तरेऽपि जायमानं पश्वादिफलं चित्रादिकर्मणो भवति, तत्रानन्तर्यानुपादानादिति तावत्सिद्धं तच्चेहैव जन्मनि जन्मान्तरेऽपि वा भवतीति।

केचित्तु इहैव जन्मनि यदा कदाचिद् भवति इत्याहुः, तन्न। प्रमाणाभावात्। नहि केनचिच्छब्देन इहैव जन्मनीति विशेषः श्रूयते, न वा सूत्रभाष्ययोरेवं समर्थितमिति। न च "स्वधर्मनिष्ठाः प्रेत्य प्रकर्मफलमनुभूय ततः शेषेण विशिष्टजात्यादिमन्तो जन्म प्रतिपद्यन्ते', इति गोतमवचनादकृतचित्रादियागानामपि भुक्तावशिष्टज्योतिष्टोमादिकर्मलेशेनैव पश्वादिफलं भवतीति न चित्रादीनां तत्र हेतुत्वमिति वाच्यम्। अन्यफलकस्य कर्मणः फलान्तरसाधनत्वासम्भवात्। गौतमवचनं तु चित्रादिसापेक्षज्योतिष्टोमादि कर्मशेषपरं बोध्यम्। अन्यथा तत्तत्कर्मानुष्ठानं विनापि तत्तत्फलप्राप्तौ म्लेच्छादयो वैदिकं कर्म अननुष्ठायापि पश्वादिफलं लभेरन्निति वेदाप्रामाण्यमेव स्यात्।

नैयायिकास्तु अनन्तरफलानुत्पत्तिदर्शनाच्चित्रादिचोदनानामप्रामाण्यमाशङ्क्य कर्तृकर्मसाधनवैगुण्यादिना परिहरन्ति। तत्तु न मनोरमम्। तथा सति

ऐहिकमात्रफलकत्वाभ्युपगमापत्त्या अकृतचित्रादिकर्मणामिह जन्मनि दृश्यमानपश्वादिफलस्य निर्निमित्तकत्वापत्तेः। ननु स्वर्गस्यापि पश्वादिफलवदनियतकालत्वापत्तिः तद्बोधकवाक्येऽपि कालविशेषश्रवणाभावादिति चेत् ? न । तदामुष्मिकत्वस्य षष्ठे स्थापयिष्यमाणत्वात् । एतच्च तत्रैव निरूपयिष्यते । यस्तु फलानुरागात् त्वरया-अद्यैव मे पशवः स्युरिति कामयमानश्चित्रादिकर्मानुतिष्ठति, तस्येहैव जन्मनि पशवो भवन्ति सद्यः, किंवा नेति जिज्ञासायां नेत्युत्तरम् । नहि सद्यः फलेच्छया वृक्षमारोपयतस्तदैव फलोपलब्धिर्दृष्टा, तत्कस्यहेतोः त्वरितफलेच्छावशेन साधनस्वभावापरिवर्तनात् । यद् यथा यदा फलजननसमर्थं, तत्तथैव तदैव फलं प्रसूते, त्वरादिकं तत्राकिञ्चितकरमिति । वृष्टयादिकं पुनरैहिकमेव फलं । यदा कदाचिज्जायमानायाः वृष्टेः कामनाविषयत्वाभावात् शुष्यच्छस्पसंजीवनादिरक्षार्थमनन्तरमेव कामनाविषयत्वात् । न चात्रापि कालविशेषश्रवणाभावाच्चित्रादिवदनियतफलकत्वमेव स्वीकार्यम्, वैषम्यात् । यदाकदाचिद्भवन् पश्वादिः कामनाविषयो भवति, वृष्टिस्तु अनन्तरमेव भवन्ती कामनाविषयो, न तु यदाकदाचिदित्यस्य ऐहिकत्वमेव ।

ननु तथापि कारीरीयागानुष्ठानानन्तरं नियमेन वृष्ट्युत्पाददर्शनाभावात्तत्राप्रामाण्यमवतरद् भिक्षुपादप्रसारणन्यायेन सर्वचोदनासु प्रसज्येदिति स्फुलिङ्गक्रीडयैवातिश्रमरक्षितनगरदाहः सम्पन्न इति चेत् । न । पूर्वजन्मानुष्ठितेन वृष्टिप्रतिबन्धकेन विविधप्राणिकर्मणां प्रतिरोधेन फलाजनकत्वेऽपि साधनत्वानपायात् । नहि मणिमन्त्रादिना प्रतिबद्धो वह्निर्दाहं न जनयति इति तस्य तदसाधनत्वं कश्चिदनुन्मत्तः प्रतिजानाति । तथाच त्रिवृत्पानविरेकवन्नियमेनानन्तरफलोत्पादकत्वाभावेऽपि अप्रतिबन्धके सति यदाकदाचित्फलोत्पादकत्वेन न प्रामाण्यविघातः । यत्र देशे कारीरीयागो नानुष्ठीयते, तत्र वृष्टिस्तु अन्नादिप्रापकजन्मान्तरानुष्ठितकर्मान्तरादेवेति दिक् ।

**इति कल्पकलिकायां चित्रांक्षेपपरिहारः**

**भाष्यम्—यत्तु प्रत्यक्षविरुद्धं वचनमुपनन्यस्तं (१३।२) स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति इति प्रत्यक्षं शरीरकं व्यपदिशति इति । तदुच्यते, शरीरसम्बन्धात्, यस्य तच्छरीरम् । सोऽपि**

**तैर्यज्ञायुधैः यज्ञयुधी इत्युच्यते । आह कोऽसावन्यो ? नैनमुपलभामहे । प्राणादिभिरेनमुपलभामहे, योऽसौ प्राणिति, अपानिति, उच्छ्वसिति, निमिषति, इत्यादि चेष्टितवान् । सोऽत्र शरीरे यज्ञायुधी इति । ननु शरीरमेव प्राणिति अपानिति च । न । प्राणादयः शरीरगुणविधर्म्माणोऽयावच्छरीरभावित्वात्, यावच्छरीरम् तावदस्य गुणा रूपादयः । प्राणादयस्तु सत्यपि शरीरे न भवन्ति । सुखादयश्च स्वयमुपलभ्यन्ते, रूपादय इव शरीरगुणाः परेणापीति । तस्माच्छरीरगुणवैधर्म्यादन्यः शरीरात् यज्ञायुधीति ।**

पूर्वपक्षिणा चोदनाप्रामाण्यप्रयोजकतया प्रदर्शितं तृतीयं हेतुं निरसितुमनुवदति—**यत्त्विति** ।

कुत्सितम्, अल्पं वा शरीरं, शरीरकमित्यर्थः । यज्ञायुधिशब्दस्य तादृशशरीरसम्बधिनि आत्मनि लक्षणेति न प्रत्यक्षविरोध इत्याह—**शरीरसम्बन्धादिति** । एवमेष इति शब्देनोक्तं प्रत्यक्षं देहस्थमात्मनि उपचर्यते इति न तद्विरोधोऽपि ।

यद्वा एष यज्ञायुधिशब्दौ स्वार्थपरावेव, स्वर्गगमनं, यजमानत्वं च शरीरे उपचर्येते, यूपादित्यादि वाक्यवदिति न प्रत्यक्षविरोधः ।

ननु प्रत्यक्षेण शरीरातिरिक्त आत्मा नोपलभ्यते इति सप्तमरसादिवन्न तत्सत्तेत्यभिप्रायेणाशङ्कते—**कोऽसावन्य इति** । अतिरिक्ते प्रमाणमाह—**प्राणादिभिरिति** । यथा रथगत्या सारथिर्ज्ञायते, तथा प्राणादिचेष्टया शरीराधिष्ठातात्मापीति भावः । शरीरधमं एवास्तु चेष्टा, नथा च नातिरिक्तात्मसिद्धिरित्याह—**न प्राणादय इति** । किंच शरीरगुणा रूपादयः परेणाप्युपलभ्यन्ते, आत्मगुणाः सुखादयः केवलं स्वेनैव, परेणेति वैधर्म्याच्छरीरातिरिक्तात्मसिद्धिरित्याह—**सुखादयश्चेति** ।

ननु यूपादित्यादिवाक्यवदेष यज्ञायुधीत्यादि वाक्यानामुपचरितत्वेनोपपादनाच्छरीराद्यतिरिक्तात्मसाधने कोऽभिप्रायो भाष्यकृत इति चेत् ? अयमभिप्रायः । शरीरातिरिक्तात्माभावात् स्वर्गादिफलचोदनानामप्रामाण्यं, शरीरादेरिहैव भस्मीभावात्स्वर्गादिगमनमशक्यं शरीरान्तरपरिणतेऽपि तस्य कर्तृत्वाभावान्न भोक्तृत्वम् । किञ्च भावानां प्रतिक्षणपरिणामितया न कर्तुः कस्यचिद्

भोक्तृत्वं, विज्ञानस्वरूपस्याप्यात्मनः कर्तृत्वभोक्तृत्वयोरसम्भवः, क्षणिकत्वात्। एवञ्चाप्रदत्तस्वर्गादिफलकयागचोदनानामप्रामाण्यमिति नैरात्म्यवादिनामाक्षेपसमाधानाय शरीराद्यतिरिक्तात्मसाधने भाष्यकारप्रवृत्तिरिति ध्येयम् ।

ननु यदि आत्मा नित्यः कथं तर्हि "एतेभ्य एव भूतेभ्यः समुत्थाय नान्येवानुविनश्यति" इत्यागमः संगच्छते ? अत्रात्मनो भूतेभ्यः समुत्पत्तिः, तत्रैव विनाश इति स्पष्ट एव प्रतीयते इति चेत् ? न। एतादृशवचनस्य शरीरपरत्वात् शरीरस्य भूतोपादानकत्वात् तत उत्पत्तिर्युक्तैवोपादाने कार्यलयाभ्युपगमाद् विनाशोऽपि ।

ननु नित्यस्य स्पन्दशून्यस्यात्मनो न कर्तृत्वभोक्तृत्वसम्भवः, सम्भवेऽपि मत्कृतकर्मण इदं फलं मयोपभुज्यते इति, भोगकाले तदपरामर्शेनाकारणत्वापत्त्या तत्र प्रवृत्तिर्न स्यात्. सर्वोहि फलानुभवकाले तादृशफलसाधनं जानानस्तज्जातीये कर्मणि फलाभिनिवेशवशेन पुनः प्रवर्त्तते, नान्यथा, एवं निषिद्धेऽपि कर्मणि निवृत्तिर्न स्वात् एतज्जातीयस्य निषिद्धस्यैतदनिष्टं फलं, यत् प्रतिकूलवेदनीयत्वेनोपनतमित्यपरामर्शे तज्जातीये कर्मणि द्वेषानुपपत्तेः। एवञ्चानित्यत्वपक्षे इव नित्यत्वपक्षेपि कृतनाशाकृताभ्यागमापत्तिस्तदवस्थैवेति वृथा नित्यत्वाभ्युपगम इति चेत् ? न। इष्टसाधनत्वज्ञानस्य प्रवृत्ति प्रत्येव हेतुतया, प्रवृत्तिकाले तादृशज्ञानस्य विदुषां सत्त्वात् प्रवृत्त्युत्तरकाले जायमानफलानुभवे तत् परामर्शविरहे क्षत्यभावात् ।

किंच भोगवेलायामपि ममेदं कर्मणः फलं ममैव जन्मान्तरपातकानामित्यादिपरामर्शो विदुषां जायत एव, अविदुषां तत्राधिकाराभावात्तेषां तदपरामर्शेऽपि न दोषः। तस्मात्प्रवृत्तिसमये साधनज्ञानमपेक्ष्यते, न भोगसमये। अत एव स्वापसमये सुखरचितशयनस्यापरामर्शेऽपि, तत्र प्रवृत्तिरुपपद्यते। भोगावसरे साधनापरामर्शो वेदप्रामाण्यौपयिक एव। अन्यथा ज्ञातज्ञापकत्वेनाप्रामाण्यापत्तेरिति ।

यच्चोक्तं नित्यस्य विभोर्न कर्तृत्वभोक्तृत्वम्। तदपि न। विभोः कर्तृत्वस्याग्रे वक्ष्यमाणत्वात् नित्यस्यापि अविक्रियस्य कर्तृत्वं भोक्तृत्वं चोपपद्यते।

न च क्रिया स्वाश्रयमविकार्य नोत्पत्तुमर्हति, विकारे च पूर्वस्वरूपप्रच्युतिः, स्वरूपान्तरापत्तिश्चेति मृत्पिण्डवदनित्यत्वमेव स्यादुत्पत्यपायधर्मकत्वात् ।

किञ्च विकारः ततोऽतिरिक्तः, अनतिरिक्तो वा । आद्ये स पूर्ववदेवाकर्त्ता अभोक्ता । द्वितीये विकारवत्तस्याप्युत्पत्तिस्वीकारादनित्यत्वं बज्रलेपायितं स्यादिति । मैवम्' कर्तृत्वभोक्तृत्त्वादिना विकाराभ्युपगमात् । न च तावताऽनित्यत्वप्रसक्तिः, तत्त्वेन प्रत्यभिज्ञायमानत्वात् । यश्च भेदाभेदविकल्पः । सोऽपि तदुभयाङ्गीकारादेव समाहितः, कर्तृत्वभोक्तृत्वाद्यवस्थात्मना परिणामेऽपि वालयुवादिवत् स्वरूपोच्छेदाभावेन नाकृताभ्यागमादिदोषः । नहि अवस्थोच्छेदभयेन अवस्थान्तरोपभोगभोग्यशुभाशुभसाधनोपादानवर्जनमकुर्वन्नरो दृश्यते । न च युवावस्थायां सञ्चितात्साधनाद् वृद्धावस्थायां ततः फलभोगेऽन्यः सञ्चयकर्त्ता, अन्यः फलभोक्तेति लोके ब्यपदिश्यते, किन्तु अवस्थासु आगमापायिनीष्वपि अवस्थी एक एवानुवर्त्तते, कनकमिव कुण्डलादिषु । न चावस्थायाः कर्तृत्वं भोक्तृत्वं, येनाकृताभ्यागमादेः शङ्का स्यात्, किम्वा पूर्वावस्थाया नात्यन्तसमुच्छेदः किन्तु उत्तरावस्थाऽनुगुण्यायावस्थिन्यात्मनि लयोऽर्थात्तदात्मनावस्थानमेव । न च कर्तृत्वाकर्तृत्वयोरवस्थयोः परस्परं विरोधात्कथमेकस्मिन्नात्मनि समावेशः, स्वरूपेण तयोर्विरोधेऽपि सामान्यात्मना विरोधाभावादवस्थात्वस्योभयानुगतत्वादिति समावेशे नानुपपत्तिरिति । तथा च वेदप्रामाण्यसिद्धये शरीराद्यतिरिक्तात्मनिरूपणमत्यावश्यकमन्यथा शरीरात्माभिधानापत्त्या शरीरस्यानित्यतया परलोकगामित्वाभावात् स्वर्गादिफलभोगानुपपत्त्या तत्फलकयागाद्यनुष्ठापकवेदाप्रमाण्यं स्यात् । ज्ञानात्मवादिनान्तु ज्ञानस्य क्रियाशून्यत्वादविभुत्वाच्च जन्मान्तरमेव न सम्भवति, दूरे कर्तृभोक्तृत्वादिकथा, ज्ञानस्य क्षणिकत्वेन दीर्घकालानुष्ठेयकर्मकर्तृत्वासम्भवात् । न च ज्ञानानां त्वन्मतेऽवस्थावद्भिन्नत्वेऽपि स्थायिनः सन्तानस्य कर्तृत्वम् । त्वन्मते ज्ञानातिरिक्तस्य सन्तानस्याभावात् भोक्तुरत्यन्तभेदादकृताभ्यागमो दुर्वारः कृतनाशस्त्वन्मते न वक्तुं शक्यते, कर्तुरभावात् ।

अथ व्यतिरिक्तः, तदापि सर्ववस्तूनां त्वन्मते क्षणिकत्वेन न स्थायी, स्याच्चेत् तर्हि अवस्तु स्यात् ततो न किञ्चित्स्यात् । अथ वस्तुस्वरूपः स्थायी, तर्हि सर्वं वस्तु क्षणिकमिति तव सिद्धान्तहानिः स्यात् ।

योगाचाराणां ज्ञानातिरिक्तवस्त्वापत्तिरधिको दोषः स्यात् । एवं क्षणिकानां चैत्यवन्दनादिकर्मणां कालान्तरभाविफलजनकत्वं न स्यात् । न च चित्तस्थितवासनयैव फलं सिद्धयेत्, क्षणिकज्ञानानां वास्यवासकभावस्य पूर्वमेव निराकरणात् । न चैकसन्तानजातयोः कर्तृचित्तभोक्तृचित्तयोः सन्तानद्वारैककर्तृकत्वान्नानुपपत्तिः । तच्चित्तजत्वस्यैकधर्मस्य त्वन्मतेऽभावात्तेनोभयत्रैकबुद्धयनुगमासम्भवात् । तथा च यः कर्त्ता, स भोक्ता इति बुद्धिर्दुरुपपादैव । तथा चात्मभरणेच्छया पुत्रादिभरणे प्रवृत्तिर्न स्यात्तदानीन्तस्यासत्वात् । न चात्मभरणेच्छां विनापि तिरश्चामपत्यभरणे यथा प्रवृत्तिः, तथा पुंसामपि किन्न स्यात् । अज्ञानवशात्तेषां तत्र प्रवृत्तिसम्भवेऽपि, ज्ञानिनां तथा वक्तुमशक्यत्वात् । ज्ञानस्य निष्क्रियत्वात् पूर्वदेहत्यागोत्तरदेहोत्पादौ चाशक्यौ । यथा वायुप्रेरितज्वालादेरन्यत्र संचारः, तथा न बुद्धेः कश्चित् प्रेरकः, अमूर्तत्वात् । अत एव न स्वयमुत्प्लुत्यापि गन्तुमर्हति । तस्मात् स्थिरः पुरुषोऽङ्गीकार्य इति संक्षेपः ।

नन्वात्मनो विभुत्वात् क्वचिदपि स्पन्दितुमवकाशाभावात् कथं तत्र क्रिया, तदभावे च न कर्तृत्वादि ।

मैवम् । स्पन्दमात्रस्यैव क्रियात्वानभ्युपगमात्, किन्तु धात्वर्थः क्रिया । सा च क्वचित् स्पन्दरूपा, क्वचिदन्यैव, अन्यत्रापि कर्मणि अन्यस्य कर्तृत्वं, यथा हस्तादिनिष्ठायां स्पन्दरूपायां क्रियायामात्मनः साक्षात्कर्तृत्वम् । न च हस्तादिनिष्ठक्रियायां कथमात्मनः कर्तृत्वं, नहि देवदत्तक्रियायां यज्ञदत्तः कर्त्ता भवति, व्यधिकरणत्वादिति वाच्यम् । मृते हस्तादौ क्रियाया अदर्शनात्, न हस्तमात्रं स्वक्रियायां हेतुः किन्त्वात्माधिष्ठित एवेत्यधिष्ठानद्वाराऽऽत्मनः तत्क्रिया कर्तृत्वम् ।

यद्वोद्देश्यद्वारा यदा हि आत्मा हस्तादिपरिस्पन्दमुद्दिशति, तदैव तत्र परिस्पन्दो, नान्यथेति स्पन्दप्रयोजकत्वरूपकर्तृत्वमात्मनोऽवश्यमेवेष्टव्यम् । यद्वा हस्तादीनां स्वातन्त्र्याभावात् स्वतन्त्रकर्तृत्वमप्यात्मनः । न च हस्तः स्पन्दते इत्यादौ धातुना हस्तव्यापार एवोच्यते इति, धातूपात्तव्यापाराश्रयत्वरूपकर्तृत्वं हस्तादेरेव सम्भवति, नत्वात्मनस्तद्व्यापारस्य धातुनानभिधानादिति वाच्यम् । यथा ऋत्विगादिद्वारा यजमानस्य कर्त्तृत्वं तथा हस्त-

द्वाराऽऽत्मनः कर्तृत्वम् । वस्तुतस्तु न धात्वर्थव्यापाराश्रयत्वं कर्तृत्वं किन्तु आख्यातोपात्तभावनाश्रयत्वमेव तत् । आख्यातं च क्वचिद् धात्वर्थसमानाश्रयं व्यापारं वक्ति । यथा विक्लिद्यन्ति तण्डुला इति । क्वचिच्चान्याश्रयं, यथा रोचन्ते मोदका इति । क्वचिदुभयं पचति देवदत्तः, पचन्ति तण्डुला इति ।

तथा च सत्तामात्रेणात्मनः सर्वक्रियासाधारणं कारणत्वं, संकल्पादिभिस्तु प्रतिकर्म व्यवस्थितं न चैकरूपमेव, सर्वत्र कर्तृत्वम् ।

तथा चोक्तम्—

"साधारण्येन कर्तृत्वं सत्त्ववत्त्वेन कर्मसु ।
संकल्पनैः पुनर्भेदात् प्रतिकर्माऽस्य कर्तृता ।।
न च सर्वत्र तुल्यत्वं स्यात् प्रयोजककर्मणाम् ।
चलनेन ह्यसिं योद्धा प्रयुङ्क्ते छेदनं प्रति ।।
सेनापतिस्तु वाचैव भृत्यानां विनियोजकः ।
राजा सन्निधिमात्रेण विनियुङ्क्ते कदाचन ।।

( श्लो० वा० आ० श्लो० ८४, ८५, ८६ )

इत्यलमतिविस्तरेण । तथा च शरीराद्यतिरिक्तो नित्यो विभुः ज्ञानसुखादिगुणकः आत्मा यजमानः । स च स्वर्गगामीति नानुपपद्यते एष यज्ञायुधीतिवचनमिति ।

न च शरीराद्यतिरिक्तात्मसाधनाय प्राणादीन्हेतुत्वेनोपादाय पुनः सुखादीनां तत्त्वेनोपादानमनर्थकं, विशेषाभावात् । न च परकीयदर्शनादर्शनाभ्यां विशेषः सुखादिवत् प्राणस्यापि शरीरान्तर्वर्तित्वेन परस्य परोक्षत्वात् । मैवम् । प्राणस्य वहिर्वृत्तेरपि सत्त्वेन परापरोक्षत्वात् सुखादीनान्त्वान्तरत्वात् परेन्द्रियगोचरत्वासभ्भवात् । केन तर्हि परकीय सुखादिग्रहणम् । प्रहृष्टवदनत्वादिलिङ्गेन अयं सुखी प्रहृष्टवदनत्वादिति अनुमानेनैव सुखादिग्रहणं । न चान्तः स्थित्या व्यवधानादिन्द्रियसन्निकर्षाभावेनाप्रत्यक्षत्वेऽपि शरीरान्तर्गतरूपादिवत्तद्धर्मत्वमेवेति वाच्यम्, उत्पाटितशरीरे तदन्तर्गतरूपादिवत्तदनुपलब्ध्या तद् गुणत्वे मानाभावात् । तथा सुखादीनां गुणत्वादाश्रयोऽनुमीयमानः शरीरादिर्न भवतीत्यतिरिक्तः आत्मा सिद्धयति । प्रयोगश्चैवं सुखादिः क्वचिदाश्रितः गुणत्वाद् रूपवदिति सामान्यत आश्रये लब्धे शरीरादिगुणत्वाभावात् पारि-

शेष्येण तदाश्रयः आत्मा सिद्धयतीति स्पष्टमन्यत्र । तदेवं वैशेषिकनयेन शरीरातिरिक्ते आत्मनि साधिते तदसहमानो विज्ञानवादी प्रत्यवतिष्ठते-कुत एष संप्रत्यय इति ।

**भाष्यम् । आह—कुत एषः सम्प्रत्ययः ? सुखादिभ्योऽन्यस्तद्वान् अस्तीति । नहि सुखादिप्रत्याख्यानेन तस्य स्वरूपमुपलभामहे । तस्मात् शशविषाणवत् असौ नास्ति । अथोच्यते, तेन विना कस्य सुखादयः ? इति न कस्यचिदपि इति वक्ष्यामः । नहि, यो यः उपलभ्यते, तस्य तस्य सम्बन्धिना भवितव्यम् । यस्य सम्बन्धोऽप्युपलभ्यते, सम्बन्धी च तस्य सम्बन्धीति गम्यते । नहि चन्द्रमसम् आदित्यं वा उपलभ्य सम्बन्धान्वेषणं भवति कस्यायमिति । न कस्यचिदपि इत्यवधार्य्यते । तस्मान्न सुखादिभ्योऽन्यः तद्वान् अस्तीति । अथ उपलब्धस्यावश्यं कल्पयितव्यः सम्बन्धी भवति । ततः आत्मानमप्यनेन प्रकारेणोपलभ्य कस्यायमिति ? सम्बन्धान्तरमन्विष्येम । तमपि कल्पयित्वा, अन्यमपि कल्पयित्वा, अन्यमित्यनवस्थैव स्यात् । अथ कञ्चित् कल्पयित्वा न सम्बन्ध्यन्तरमपि कल्पयिष्यसि, तावत्येव विरंस्यसि, तावता च परितोक्ष्यसि । ततो विज्ञाने एव परितुष्य तावत्येव विरन्तुमर्हसि । अत्रोच्यते । यदि विज्ञानादन्यो नास्ति, कस्तर्हि जानाति इत्युच्यते ? ज्ञानस्य कर्तुरभिधानमनेन शब्देन नोपपद्यते । तदेषः शब्दोऽर्थवान् कर्तव्यः इति ज्ञानाद् व्यतिरिक्तमात्मानं कल्पयिष्यामः इति ।**

अयमभिप्रायः । यदि सुखादिर्गुणः स्यात्, तदा तस्य शरीरगुणत्वासम्भवात् अन्याश्रयानुमापकत्वं भवेत्, न च सुखादिर्गुणः, किन्तु स्वतन्त्रज्ञानरूप एवेति, किमनुरोधेनातिरिक्तात्मसिद्धिः । न च सुखाद्यनुपहितः कदाचिदुपलभ्यते योग्यविशेषगुणद्वारा तत्प्रत्यक्षस्य परैरप्यङ्गीकारात् । तादृशगुणशून्यतत्स्वरूपोपलब्धेरभावादित्याह—**नहीति** । न च सुखादीनामिष्टत्वात् परार्थत्वं, नहि द्राक्षा स्वात्मने प्रिया भवति, किन्तु यस्मै रोचते । तथा च सुखादीनामपि कश्चिदर्थी ततोतिरिक्तः कल्प्यते इत्याह—**अथेति** । यदीष्टत्वेन परानुमानं क्रियेत, तर्हि अनवस्थैव स्यात् सुखाद्यतिरिक्तात्मकल्पनायामपि तस्यापीष्टत्वेन परार्थत्वात्तदतिरिक्तोऽपि सिद्धयेदेवं तस्य, तस्यापि, तत्तदतिरिक्तानुमापकत्वापत्तेरिति ।

न चोपलभ्यमानत्वं सम्बन्धिसत्ताव्याप्यं चन्द्रादौ व्यभिचारादित्याह—**नहि चन्द्रमसमिति**। तथा च व्यभिचारान्नोपलभ्यमानत्वेनाश्रयकल्पनेत्याह—**तस्मादिति**। अतिरिक्तकल्पनायामनवस्थां स्फोरयति—**अथेत्यादिना**। अनवस्थाभयाद् यदि क्वचित्सम्बन्ध्यन्तरकल्पनापरित्यागः, तावन्मात्रकल्पनया च सन्तोषः। तदा ज्ञाने एव तदुभयमस्तु किं कल्पनाश्रमेणेत्याह—**अथ किञ्चित् कल्पयित्वेति**।

ननु आत्मनो विज्ञानानतिरिक्तत्वे जानातीत्यादौ कर्तृबोधनानुपपत्तिः, विज्ञानस्यैव विज्ञानकर्तृत्वासम्भवात्। नहि छिदैव तत्कर्ता लोके व्यपदिश्यत इत्यभिप्रायेण पृच्छति—**कस्तर्हीति**। तथा च जानातीत्यादिशब्दसार्थक्याय तदतिरिक्तात्मकल्पनमुचितमित्याह—**तदेष शब्द इति**। प्रमाणव्यापारं विना शब्दसार्थक्यायाऽर्थान्तरकल्पना न युक्ता, अन्यथा हुंफडादि शब्देऽपि तदर्थमर्थान्तरकल्पनापत्तिरिति तदाह—**वेदा इति**।

**भाष्यम्। आह—वेदा एनं शब्दमर्थवन्तं कल्पयिष्यन्ति, यदि कल्पयितव्यं प्रमंस्यन्ते। बहवः खल्विह जनाः अस्ति आत्मा अस्ति आत्मा इति आत्मसत्तावादिन एव शब्दस्य प्रत्यक्षवक्तारो भवन्ति। तथापि नात्मसत्तां कल्पयितुं घटन्ते। किमङ्ग पुनः जानाति इति परोक्षशब्ददर्शनात्। तस्मादसदेतत्।**

**भाष्यम्। उच्यते। इच्छया आत्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे हि अभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रति अस्माकं इच्छा भवति, नो खल्वन्येन पुरुषेणोपलब्धेऽपि विषयेऽन्यस्य उपलब्धुरिच्छा भवति। भवति च अन्येद्युरुपलब्धे अन्येद्युरिच्छा। तेन उपलम्भनेन समानकर्तृका सा इत्यवगच्छामः। यदि विज्ञानमात्रमेवेदमुपलम्भकम् अभविष्यत्। प्रत्यस्ते तस्मिन् कस्यापरेद्युरिच्छा अभविष्यत्? अथ नु विज्ञानादन्यो विज्ञाता नित्यः, ततः एकस्मिन्नहनि य एव उपलब्धा, परेद्युरपि स एवैषिष्यतीति। इतरथा हीच्छा नोपपन्ना स्यात्।**

आत्मसत्तावादिनो विद्वांसो यदि आत्मनो विज्ञानातिरिक्तस्य सत्तां साधयितुं न समर्थाः, तर्हि वराको जानातिशब्दः कथं साधयितुं प्रभवे-

दित्याह—**पुनर्जानातीति** ।

हते भीष्मे हते द्रोणे कर्णे च विनिपातिते ।
आशा बलवती राजन् ! शल्यो जेष्यति पाण्डवान् ।।

इति न्यायादिति भावः ।

तदेवं विज्ञानवादं निरसिसिषुरतिरिक्तात्मसाधनप्रदिदर्शयिषयाऽह—**उच्यत इति** । हेतुमाह—**इच्छयेति** । ज्ञानेच्छयोः समानविषयकत्वं समानकर्तृकत्वञ्च दर्शयति—**उपलब्धपूर्वे हीति** । अनुपलब्धे नेच्छेत्येतत् प्रदर्शनायाह—**मेरुमिति** । न चान्येनाऽप्युपलब्धे इच्छेत्येतत्स्पष्टमाह—**नो खल्विति** । एवं चान्वयव्यतिरेकदर्शनादिच्छाज्ञानयोः समानकर्तृकत्वं निश्चीयते । तदाह—**समानकर्तृका इति** । तथा च ज्ञानसमानकर्तृकेच्छा ज्ञानातिरिक्तं स्थिरमात्मानं साधयतीतिभावः ।

ननु न दृष्टेऽनुपपन्नं नामेति न्यायेन समानसन्तानवर्तिज्ञानेच्छयोस्तत्सन्तानवर्तिना ज्ञानेन दृष्टे वस्तुनि तत्सन्तानजज्ञानान्तरस्येच्छा भवति, न भिन्नसन्तानजज्ञानस्येति नियमस्वीकारेण समानकर्तृकत्वाभावेऽपि, क्षतिविरहान्नातिरिक्तात्मसाधनावकाश इत्यभिप्रायेण शङ्कते—**अनुपपन्नमिति** ।

**भाष्यम् । अत्रोच्यते—अनुपपन्नमिति नः क्व सम्प्रत्ययः । यन्नः प्रमाणेनावगतम् । विज्ञानात्तावदन्यं नोपलभामहे यन्नोपलभामहे, तत् शशविषाणवदेव नास्ति इत्यवगच्छामः । क्षणिकत्वं च अस्य प्रत्यक्षपूर्वकमेव । न च ज्ञातरि विज्ञानादन्यस्मिन् असति, ज्ञाने चानित्ये अपरेद्युरिच्छा अनुपपन्ना । प्रत्यक्षावगतत्वादेव । नो खल्वप्येतत् दृष्टं, य एवान्येद्युरुपलब्धा स एवान्येद्युरेषिता—इति । इदं तु दृष्टं, यत् क्वचित् अन्येन दृष्टमन्यः इच्छति, क्वचिन्न समानायां सन्ततावन्य इच्छति सन्तत्यन्तरेणेच्छतीति । तस्मान्न सुखादिव्यतिरिक्तोऽन्योऽस्तीति । अत्रोच्यते । नहि अस्मर्तार इच्छन्ति इत्युपपद्यते । न वा अदृष्टपूर्वे स्मृतिः भवति । तस्मात् क्षणिक-विज्ञानस्कन्धमात्रे स्मृतिरनुपपन्नेति ।**

प्रमाणानुपलब्धं न स्वीकर्तुमुचितमित्याह—**यदिति** । **तस्मिन्निति** विज्ञानातिरिक्ते स्थिरे आत्मनीत्यर्थः । ज्ञानेच्छयोः समानकर्तृकत्वाभावं

दर्शयति विज्ञानवादी—**नो खल्विति** । समानसन्ततौ एकेन दृष्टमन्य इच्छति, अन्यसन्ततौ तु नेत्येतदाह—**क्वचिदिति** । उपसंहरति—**तस्मादिति** ।

समानधानमाह—अत्रोच्यते इति । स्मृतिलिङ्गेनात्मनोऽतिरिक्तस्य लाभः । य एव द्रष्टा, स एव स्मर्ता । नहि देवदत्तदृष्टं यज्ञदत्तः स्मरति, न च विज्ञानवादिनां स्थिरो द्रष्टा विज्ञानानां क्षणिकत्वादिति भावः ।

नन्विच्छास्मरणयोराक्षेपपरिहारौ तुल्यौ । यथाऽदृष्टे, अन्यदृष्टे वेच्छा न भवति, एवं स्मरणमपि इत्याक्षेपतौल्यम् । समानसन्तानजवासनातः परिहारस्यापि साम्यमित्यविशेषात् भेदेनोभयोपादाने कोऽभिप्राय इति चेत् ? अयमभिप्रायः । इच्छां प्रति नोपलब्धिः कारणं, किन्तु स्मृतिरिति, नोपलब्धिसमानकर्तृकत्वमिच्छायाः, किन्तु स्मृतिसमानकर्तृकत्वमेवेति नान्यदृष्टस्थले इच्छापत्तिः तत्र स्मरणाभावात्, स्मृतिस्तु पूर्वानुभवविषये एव भवन्ती समानर्तृकत्वं नियमेन गमयति, गर्भ इव पुंयोगमिति विशेषेण पृथक् स्मरणोपादानं बोध्यमिति ।

इच्छावत् स्मृतिरपि समानसन्ततौ भिन्नकर्तृका सम्भवत्येव वासनावशादित्यभिप्रायेण निराकरोति—**स्मृतिरपीति** ।

**भाष्यम्—अत्राह स्मृतिरपि इच्छावत् पूर्वज्ञानसदृशं विज्ञानं, पूर्वविज्ञानविषयं वा स्मृतिः इत्युच्यते । तच्च द्रष्टरि विनष्टेऽपि अपरेद्युरुत्पद्यमानं नानुपपन्नं, प्रत्यक्षावगतत्वादेव । अन्यस्मिन् स्कन्धघनेऽन्येन स्कन्धघनेन यत् ज्ञानं तत् सन्ततिजेनान्येनोपलभ्यते, नातत्सन्ततिजेनान्येन । तस्माच्छून्याः स्कन्धघना इति । अथास्मिन्नर्थे ( बृ० उ० ६ अ० ५ ब्रा० ) ब्राह्मणं भवति, विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति इति ।**

**उच्यते । नैतदेवम् । अन्येद्युर्दृष्टेऽपरेद्युः अहमिदमदर्शम् इति भवति प्रत्ययः । प्रत्यगात्मनि चैतद्भवति, न परत्र, अपरोह्यसौ अन्येद्युर्दृष्टवान् । तस्मात् तद्व्यतिरिक्तोऽन्योस्ति, यत्रायं अहंशब्दः । आह परत्राप्यहं शब्दो भक्त्या दृश्यते । यथा अहमेव पुत्रः, अहमेव देवदत्तः, अहमेव गच्छामि इति । अत्रोच्यते । न वयम् अहमितीमं शब्दं प्रयुज्य-**

**भानमन्यस्मिन्नर्थे हेतुत्वेन व्यपदिशामः। किं तर्हि शब्दाद् व्यतिरिक्तं प्रत्ययं प्रतीमो वयम्, इममर्थं वयमेवान्येद्युरुपलभामहे वयमेवाद्य स्मरामः। तस्माद्वयमिममर्थमवगच्छामः। वयमेव ह्यः वयमेवाद्य इति। ये ह्यः अद्य च न ते विनष्टाः। अथान्यस्मिन्नर्थे ब्राह्मणं भवति, (बृ० उ० ४ अ० ५ ब्रा०)। स वा अयमात्मा इति प्रकृत्य आमनन्ति अशीर्य्यो नहि शीर्य्यते इति। तथा (बृ० उ० ६ अ० ब्रा० ५) अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्म्मा इति। विनश्वरश्च विज्ञानम्। तस्माद्विनश्वरादन्यः स इत्यवगच्छामः। न च शक्यमेवमनुगन्तुम्। यथोपलभ्यन्ते अर्थाः, न तथा भवन्तीति, यथा तु खलु नोपलभ्यन्ते तथा भवन्तीति। तथाहि सति शशी नास्ति शशस्य विषाणमस्तीत्यवगम्येत। नच अहं प्रत्ययो व्यामोहः इति शक्यते वक्तुम्, बाधकप्रत्ययाभावात्। तस्मात्सुखादिभ्यः व्यतिरिक्तोऽस्ति। एवंचेत् स एव यज्ञायुधी इति व्यपदिश्यते।**

स्मृतिलक्षणं विकल्प्य दर्शयति—**पूर्वज्ञानेति**। दर्शनस्मरणयोर्भिन्नकर्तृकत्वेऽपि नानुपपत्तिः, तथा दर्शनादित्याह—**द्रष्टरीति**। चैत्रादिदृष्टस्य मैत्रादौ स्मरणं वारयति—**नातदिति**। एवञ्च समानसन्ताने एवाऽन्येन दृष्टस्याऽन्येन स्मरणं, नतु भिन्नसन्ताने इति दर्शनबलात्कल्प्यते। रूपविज्ञान-वेदना-संज्ञा-संस्कार रूपः पञ्चस्कन्धः सौगतानामात्मा, नान्यः, तदाह—**स्कन्धघन इति**।

स्वोक्तेऽर्थे आगमं दर्शयति—**विज्ञानघन इति**। समाधातुं निराकरोति—**नैतदेवमिति**। अन्येधुरिति। तथा च पूर्वापरकालस्थायिनमेकं ज्ञातारं विना प्रत्यभिज्ञेयं नोपपद्यते इत्यनया, तथा ज्ञाता सिद्ध्यत्येव। पूर्वापरदर्शिनोरभेदमाह—**अपरोह्यसौ इति**। अपरोऽभिन्न इत्यर्थः। न चाहंप्रत्ययविषयो विज्ञानं, तस्य क्षणिकत्वे पूर्वोत्तरकालस्थायित्वाभावात्। **यत्रेति**। अहमर्थस्यैवात्मत्वादिति भावः।

ननु नाहमर्थस्यात्मत्वमन्यत्रापि प्रयोगदर्शनादित्याशङ्कते—**परत्रेति**। अहमेव पुत्र इति पुत्रत्वादेः शरीरधर्मत्वेनात्मधर्मत्वाभावात्। ततश्चाहमर्थस्यानात्मत्वं स्पष्टमेव। न चाहं गच्छामीत्यत्राहं शब्दस्य कथमनात्मपरत्वम्।

उच्यते । आत्मनो विभुत्वेनान्यत्र गमनासम्भवाद्देहतात्पर्येणैव तादृशप्रयोगात्, देहस्य गमनदर्शनात्तस्य चानात्मत्वम् एवेति आक्षेपसमाधानायाह—**उच्यते इति** । न शरीराद्यतिरिक्त आत्माऽहंशब्दप्रयोगवलेन साध्यते, येन तस्यानात्मन्यपि प्रयोगदर्शनेन व्यभिचारः शङ्क्येत, किन्तु ज्ञातृविषयप्रत्यभिज्ञारूपं प्रत्यक्षमात्मनः पूर्वापरकालस्थायितया विज्ञानातिरिक्तत्वे प्रमाणं प्रदर्शयामः । न च स्मरणवत्प्रत्यभिज्ञापि समानसन्तानजवासनावशाद्भेदेऽप्युत्पत्तुमर्हति, नानया पूर्वापरदर्शी विज्ञानातिरिक्तः आत्मा सेद्धुमर्हतीति वाच्यम् । अन्यार्थविषयप्रत्यभिज्ञास्मरणयोर्वासनयोपपत्तौ विज्ञातृविषयैक्यप्रत्यभिज्ञायास्तयोपपादनासम्भवात् । वयमेव ह्यः, वयमेवाद्य इति भाष्येण पूर्वोत्तरदिनस्थायिनो ज्ञातुरात्मन एकत्वेन प्रत्यभिज्ञानं स्पष्टमेव दर्शितं, न चैतद्विज्ञानात्मनि सम्भवति, क्षणिकत्वेन पूर्वापरकालस्थायित्वाभावात् । न चेयमप्रमाणं वाधकाभावादित्यतिरिक्तात्मसिद्धिरिति । न चेयं प्रत्यभिज्ञाऽहंगौर इत्यादिवत् शरीरविषयैव किन्नेष्यते, शरीरस्य भौतिकत्वेन चैतन्यायोगात् । न च भूतस्यैव चैतन्यं गुणोऽस्तु, विकल्पप्रसंगात् । प्रत्येकस्य चैतन्यम्, उत समुदायस्य । नाद्यः । सर्वेषां प्राधान्यापत्त्या समुदायारम्भानुपपत्तेः । लोष्ठादावपि चैतन्यापत्तेश्च । न द्वितीयः । संघातस्य शयनादिवत्परार्थत्वेन चैतन्यायोगात् । तस्मादहं गौरइत्यादिप्रतीतिः देहात्मनोरविवेकाद्देहगतं गौरत्वादि आत्मगतत्वेनाध्यवस्यति इति भ्रान्तिरेव, मम शरीरं गौरं कृशमित्यादि प्रत्ययेनात्मशरीरादेर्भेदावगाहनात्, एकतरप्रतीतेरवश्यमिथ्यात्वेनाभेदावगाहिप्रत्ययस्यैव मिथ्यात्वं भेदावगाहिनस्तु यथार्थत्वमेवेति दिक् ।

ननु मम शरीरमितिवन्ममात्मा इत्यपि भेदव्यपदेशः ममात्मा न जानातीति लोकव्यवहारदर्शनादात्मान्तरमप्यङ्गीकार्यं स्यादिति चेत् ? न । ज्ञानस्यावस्थात्मना कथञ्चिद्भेदस्वीकारेण भेदव्यपदेशोपपत्तेर्ज्ञानस्यात्मधर्मतया धर्मधर्मिणोर्भेदाभेदोभयस्वीकारात् । नत्वात्मापेक्षयात्मनो भेदव्यपदेश इति, तद्भेदस्वीकारः प्रमाणाभावात् । नहि प्रमाणं विना प्रतीतिमात्राद् वस्तुसिद्धिः शुक्तिरजतादिवदारोपेणापि प्रतीत्युपपत्तेः, श्रवणमननादिना कृतशरीरात्मविवेकस्यापि योगिनोऽहमिति जानामीति च ज्ञानद्वयं न निवर्तते, अन्यथा स्वात्मनि अहंबुद्धिनिवृत्त्या तदुपासनानुपपत्तेः जानामीतिज्ञाननिवृत्तौ

शिष्योपदेशानुपपत्तेश्च । न चाहं जानामीत्यजानानः प्रामाणिकः परस्मै उपदिशति, तस्माद् योगिनोपि अहमिति, जानामीति ज्ञानद्वयमास्थेयमतएव भगवद्गीतायाम् "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेति" गुडाकेशं प्रत्युपदेशो भगवतो वसुदेवसूनोरहंमानवतः सङ्गच्छते । एवञ्च शरीराद्यतिरिक्तः पूर्वापरकालदर्शी आत्मा प्रत्यभिज्ञया सिद्धयति । विनाशकारणाभावात् स च नित्यः न तु विज्ञानत्वस्वरूपः अनित्यत्वप्रसङ्गात् । अत्रार्थे ब्राह्मणं प्रमाणयति । अशीर्यो नहि शीर्यते अविनाशीवेत्यादि ।

ननु वेदप्रामाण्ये विप्रतिपन्नं नास्तिकं प्रत्यागमोपन्यासो निरर्थकः, तस्य तत्राविश्वासादिति चेत् ? सत्यम् । न नास्तिकानां समाधानाय एतद् ब्राह्मणवाक्यमुपन्यस्यते किन्तु ये आस्तिका विज्ञानघन एव एतेभ्यो भूतेभ्य इति वाक्येन भूतचैतन्याभिधायिनानित्यात्मस्वीकारे विरोधमाशङ्कन्ते, तेषां समाधानयैवैतदुपन्यासः । न केवलौपनिषद्वाक्यादेवात्मनित्यत्वनिश्चयः पारलौकिकस्वर्गादिफलकाग्निहोत्रादिचोदनावाक्यादपि तन्निर्णयोऽन्यथा तस्याप्रामाण्यापत्तेरिति ध्येयम् । यथाप्रमाणं पदार्थोऽङ्गीकार्यः, न वैपरीत्येन । अत्र सोपहासमाह—**शशो नास्तीति** । प्रमाणानादरे शशो नास्ति विषाणमस्तीति वदतः किमुत्तरं स्यादित्यभिप्रायः । सुखाद्यतिरिक्तनित्यात्मस्वीकारे प्रयोजनं दर्शयति—**स एव यज्ञयुधीति** । प्रमाणप्रदर्शनाशक्यतया शशविषाणवन्न विज्ञानातिरिक्तात्मसिद्धिरित्यभिप्रायेण शङ्कते—**यदि विज्ञानादिति** ।

**भाष्यम्—आह यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तन्निदर्श्यताम्, इदं तत्, ईदृशञ्च इति । नच तत् निदर्श्यते । तस्मान्न ततोऽन्यदस्ति इति । अत्रोच्यते । स्वसम्वेद्यः स भवति, नासावन्येन शक्यते द्रष्टुम्, कथमसौ निदर्श्येत ? इति । यथाच कश्चित् चक्षुष्मान् स्वयं रूपं पश्यति, न च शक्नोत्यन्यस्य जात्यन्धाय तत् निदर्शयितुम् । न च तत् न शक्यते निदर्शयितुम् इत्येतावता नास्ति इत्यवगम्यते । एवमसौ पुरुषः स्वयमात्मानमुपलभते, नचान्यस्मै शक्नोति दर्शयितुम् अन्यस्य द्रष्टुस्तं पुरुषं प्रति दर्शनशक्त्यभावात् । सोऽप्यन्यः पुरुषः, स्वयमात्मानमुपलभते, न च परमात्मानम् । तेन सर्वे स्वेन स्वेनात्मना**

**आत्मानमुपलभमानाः सन्त्येव, यद्यपि परपुरुषं नोपलभन्ते इति। अथाऽस्मिन्नर्थे ब्राह्मणं ( बृ० उ० ६ अ० ३ ब्रा० ) भवति शान्तायां वाचि किं ज्योतिरेवायं पुरुषः ? आत्मज्योतिः सम्राडिति होवाच इति। परेण नोपलभ्यते इत्यत्रापि ब्राह्मणं ( बृ० उ० ५ अ० ९ ब्रा० ) भवति अगृह्यो नहि गृह्यत इति। परेण न गृह्यते इत्येतदभिप्रायमेतत्। कुतः ? स्वयं ज्योतिष्ट्ववचनात्। अथापि ब्राह्मणं ( बृ० उ० ६ अ० ब्रा० ७ ) भवति, अत्रायं पुरुषः स्वयं ज्योतिर्भवतीति। केन पुनरुपायेनायमन्यस्मै कथ्यते इति तत्राप्युपाये ब्राह्मणं ( बृ० उ० ६ अ० ब्रा०) भवति, स एष न इति, न इति आत्मेति होवाच इति। असौ एवंरूपः इति न शक्यते निदर्शयितुम्।**

स्वरूपलक्षणाभ्यान्निर्देश्यमित्याह—**न इदमीदृशं चेति**। अन्यत्वे प्रमाणोपदर्शनाशक्यत्वादाह—**तस्मान्नेति**। समाधातुमाह—**अत्रोच्यते इति**। यथा स्वकीयं सुखदुःखादि परस्मै तत्त्वतः प्रदर्शयितुं न शक्यते, उपायाभावात्। तथापि स्वानुकूलप्रतिकूलवेदनीयत्वेन प्रत्यात्मसिद्धं तदपह्नोतुं न शक्यते, एवमयमात्मा स्वसंवेद्यो नान्यस्मै प्रदर्शयितुं शक्यते, उपायाभावादेव, तथापि प्रत्यात्मसिद्धत्वान्न प्रत्याख्यातुं शक्यः। अत्र निदर्शनमाह—**यथा चेति**। जात्यन्धायेति। जन्मान्धायेत्यर्थः। दर्शनशक्त्यभावादिति। न दृष्टेर्द्रष्टारं पश्येदित्यादिश्रुत्या दर्शनशक्त्यभावोऽवगम्यते। परप्रत्यक्षायोग्या अपि सर्वे आत्मानः स्वानुभूतिसिद्धा इत्याह—**सर्वे स्वेनेति**। उक्तेऽर्थे आगमं सम्वादयति—**शान्तायामिति**। अत्र स्वयंऽज्योतिश्शब्दोपादानेन स्वसंवेद्यएव नान्योपायेनायं दर्शयितुं योग्य इति स्पष्टमेव लभ्यते। अग्राह्यो नहि गृह्यते' इति सामान्योक्त्याऽग्रहणं सामान्यतः प्रसक्तमपि स्वयंज्योतिष्ट्ववचनात् परेण न गृह्यते, आत्मना तु गृह्यत एवेति फलति। तदाह—**परेण न गृह्यते इति**। प्रसिद्धशरीरादिनिषेधेन नेति नेति बुद्ध्या परस्मै अयमुपदेष्टुं शक्य इत्याह स एष नेति। दृश्यस्यात्मत्वप्रतिषेध एवात्मोपदेशोपाय इत्याह—

**भाष्यम्—यच्च परः पश्यति, तत्प्रतिषेधस्तस्य उपदेशोपायः, शरीरं परः पश्यति, तेनात्मा उपदिश्यते—शरीरं नात्मा, अस्ति शरीरा-**

दन्य इति, स चात्मा इति शरीरप्रतिषेधेनोपदिश्यते । तथा प्राणादयो नात्मानः, तत्प्रतिषेधेन तेभ्योऽन्यः उपदिश्यते । तथा परस्थाः सुखादयः परेण लिङ्गैरुपलभ्यन्ते, तेऽपि नात्मानः इति तत्प्रतिषेधेनान्यः उपदिश्यते । यः स्वयं पश्यति, न ततोऽन्यः पुरुषः, इत्येतदपि पुरुषप्रवृत्त्याऽनुमीयते, यदाऽसौ पुरुषः पूर्वेद्युः सामिकृतानामर्थानां प्रतिसमाधाने शेषानुष्ठाने च यतते, अतः प्रवृत्त्याऽवगम्यते—नूनमसावनित्यान् नित्यमवगच्छति इति ।

यच्चेति । तथा च प्राणादीनामात्मत्वेन प्रतिषेधात्, तदन्य एवात्मा । सुखादिभ्यो विवेकमाह—तथेति । पूर्वदिनानुष्ठितावशेषप्रतिसन्धानादनित्यसुखादिव्यतिरिक्त आत्मा प्रतिपत्तव्य इत्याह—यदेति ।

भाष्यम्—उपमानाच्चोपदिश्यते, यादृशं भवान् स्वयमात्मानं पश्यति, अनेनोपमानेनावगच्छ—अहमपि तादृशमेव पश्यामीति । यथा कश्चिदात्मीयां वेदनां परस्मै आचक्षीत,—दह्यमानस्येव मे भवति, यात्यमानस्येव मे भवति, रुद्धमानस्येव मे भवति—इति । अतः स्वयमवगम्यमानत्वादस्ति तद्व्यतिरिक्तः पुरुषः इति ।

भाष्यम्—यदुच्यते—विज्ञानमपास्य तत् निदर्श्यताम् इति । यद्युपायमेव निषेधसि, न शक्यमुपायमन्तरेणोपेयमुपेतुम् । अयमेवाभ्युपायो ज्ञातव्यानामर्थानां यो यथा ज्ञायते स तथा इति । तद्यथा कःशुक्लो नाम ? यत्र शुक्लत्वमस्ति । किं शुक्लत्वं नाम ? यत्र शुक्लशब्दप्रवृत्तिः । क्व तस्य प्रवृत्तिः यच्छुक्लशब्दे उच्चरिते प्रतीयते । तस्मान्न विज्ञानं प्रत्याख्याय कस्यचिद्रूपं निदर्शयितुं शक्यम् । न च नियोगतः प्रत्यये प्रतीते प्रत्ययार्थप्रतीतो भवति । अप्रतीते हि प्रत्यये सति अर्थः प्रतीयते एव । नहि विज्ञानं प्रत्यक्षम् । निर्ज्ञेयोऽर्थः प्रत्यक्ष इति । एतत् पूर्वमेवोक्तम् । तदवश्यकर्तव्येऽपह्नवे कामं विज्ञानमपह्नुवीत । नार्थाः इत्येतदुक्तमेव । तस्मादस्ति सुखादिभ्योऽन्यो नित्यः पुरुषः इति ।

भाष्यम्—अथ यदुक्तं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति इति—परिचोदनोत्तरकाले

**अपह्नुत्य मोहाभिप्रायमस्य वर्णितवान्—" न वा अरे मोहं ब्रवीमि, अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्म्मा, मात्रासंसर्गस्त्वस्य भवति (बृ० उ० ६ अ० ५ ब्रा० ) इति तस्मान्न विज्ञानमात्रम् । तस्माद्वैषम्यम् । यदुक्तं ( १३।५ ) नचैष याति—इति विधिशब्दः इति । माभूद्विधिशब्दः, स्वर्गकामो यजेत इति वचनान्तरेणावगतमनुवदिष्यते । तस्मादविरोधः ।**

उपमानेनात्मोपदेशमाह—**यादृशमिति** । यद्यपीदृशमुपमानं न स्वमते सम्भवति, प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति गौतमसूत्रानुसारित्वात् । नैयायिकमते हि सदृशात्सदृशान्तरे बुद्धिरुपमानमिष्टम्, तथा चात्मदर्शनसाम्येन परात्मबोधनमुपमानफलमिति प्रदर्शनमयुक्तम् । तथापि शाब्दमेवेदं ज्ञानं प्रदर्शितम् सादृश्यविषयत्वादत्रोपमानपदं भक्त्या प्रयुक्तमिति बोध्यम् । स्वमते तु आत्मसादृश्यविशिष्टे परात्मनि अवगते तत्सादृश्यविशिष्टात्मावधारणमेवोपमानं बोध्यम् । न च सति परात्मज्ञाने एवं वक्तुं शक्येत, तदेव तु न सम्भवति । उपायाभावादिति वाच्यम् । चेष्टादिलिङ्गस्य परात्मावधारणोपायस्य सत्त्वात् ।

यदपि विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति ब्राह्मणवाक्यं भूतचैतन्ये प्रमाणमुपन्यस्तम्, तदपि न । उत्तरब्राह्मणवाक्येन तस्यातत्परत्वबोधनात् । तथा हि श्रीयाज्ञवल्क्येन पूर्वमात्मनोऽजरामृतत्वमभिधाय विज्ञानघन एव एतेभ्य इति वाक्यमुक्तम् । ततः सदसद् रूपश्रवणाद् भ्रान्ता मैत्रेयी तमुवाच अत्रैव मा भगवान् मोहान्तमपीपदद् विरुद्धोभयरूपाभिधानादिति । ततस्तत्सन्देहनिराकरणाय अविनाशी वा अरे आत्मा अनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवतीत्यब्रवीत् स मुनिः, ततस्तस्यातत्परत्वं स्पष्टमेव लभ्यत इति नापरोक्षमुपनिषद्दर्शिनां विदुषामित्युपरम्यते एतद् व्याख्यानादिति ।

यद्यपि याति इति न विधिः, लिङ्गादेरश्रवणादिति । तदभ्युपेत्य परिहरति—**माभूदिति** । यागबोधकवाक्यान्तरस्य सत्त्वेनैतस्यानुवादकत्वात्, वाक्यान्तरं विधायकं दर्शयति—**स्वर्गकामो यजेत इति** । न चेदृशप्रतिपादनाद्देहाद्यतिरिक्तात्मविवेके जातेऽपि पूर्ववदहं गच्छामीति देहाद्यालम्बनः

प्रत्ययोऽनुवर्तत एवेति । यादृशविवेके नेदृशप्रत्ययो न पुनर्भवेत्, तादृशविवेकोपायः प्रतिपाद्यतामिति वाच्यम्, तादृशोपायस्य श्रवणमननादेर्वेदान्ते प्रदर्शितत्वेनात्र तत्प्रदर्शनोपयोगाभावात् । यावन्मात्रप्रतिपादनेन वेदप्रामाण्यं सिद्धयति, तावन्मात्रस्यैवात्र प्रतिपादनमावश्यकमित्यनुसन्धाय तावन्मात्रमेव प्रतिपादितम् । दृढात्मविवेकमधिजिगांसुभिर्वेदान्तोक्तः श्रवणमननादिरुपायोऽवलम्बनीय इति संक्षेपः ।

**इति कल्पकलिकायामात्मवादः।**

**षष्ठे शब्दनित्यत्वाधिकरणम्**

कार्यत्वानित्यत्वयोः परस्परमविनाभावग्रहणात् प्रयत्नानन्तरभावित्वेन कार्यत्वनिश्चयादुच्चारणानन्तरं विनष्टः शब्द इति शब्दस्यानित्यत्वान्न सम्बन्धस्य नित्यत्वं शक्तुं शक्यमित्यभिप्रायेण सूत्रमवतारयति—**कर्मैके तत्र दर्शनादिति ।**

**भाष्यम्—उक्तं (८।४) नित्यः शब्दार्थयोः सम्बन्ध इति । तदनुपपन्नम्, शब्दस्यानित्यत्वात् विनष्टः शब्दः, पुनरस्य क्रियमाणस्यार्थेन अकृतकः सम्बन्धो नोपपद्यते । नहि प्रथममश्रुताच्छब्दात् कश्चिदर्थः प्रत्येति । कथं पुनरनित्यः शब्दः ? प्रयत्नादुत्तरकालं दृश्यते यतः । अतः प्रयत्नानन्तर्यात् तेन क्रियते—इति गम्यते । ननु अभिव्यञ्ज्यात् स एनम् । नेति ब्रूमः । नहि अस्य प्राक् अभिव्यञ्जनात् सद्भावे किंचन प्रमाणमस्ति । सन् च अभिव्यज्यते, नासत् ।**

नन्वेतदधिकरणारम्भो निष्प्रयोजनः, सम्बन्धस्यानित्यत्वेऽपि वेदप्रामाण्योपपत्तेः सम्बन्धनित्यत्वप्रतिपादनस्य वेदप्रामाण्यसिद्धिरेव प्रयोजनम् । तच्च शब्दानित्यत्ववादिनो नैयायिकादयोऽपि समर्थयन्ते, यदि सम्बन्धानित्यत्वे शब्दादर्थप्रतीतिर्न स्यात्, किम्बा सम्बन्धकरणाय पुरुषापेक्षा स्यात्, तदा ऽवबोधकत्वात् सम्बन्धार्थं पुरुषापेक्षणाच्चाप्रामाण्यं स्यादपि । तदेतदुभयं नास्ति, अनित्यत्ववादिनाभिवार्थप्रतीतिरविशिष्टा शब्दार्थव्यवहारस्यानादितया, न सम्बन्धांशे स्वातन्त्र्येण पुरुषापेक्षापीति सम्बन्धनित्यत्वसाधनं निष्फलमिति चेत् ?

सत्यम् नैयायिकादयोऽनित्यत्ववादिनः शब्दादर्थप्रत्ययमिच्छन्ति, नैतावता पराभ्युपगममात्रेण शब्दार्थप्रतीतिः सिद्ध्येत् किन्तु न्यायेनेति, तदर्थं तद्विचार आवश्यकः, शब्दस्य क्षणिकत्वे सम्बन्धग्रहणानुपपत्तिः, अगृहीतसम्बन्धस्येन्द्रियवत् प्रत्यायकत्वे, प्रथमश्रवणेऽपि अर्थप्रत्ययापत्तिरिति, सम्बन्धग्रहणाय नित्य एव शब्दः स्वीकार्यः अन्यथा शब्दस्य प्रत्यायकत्वा-योगाद्वेदार्थप्रत्ययो निर्हेतुकः स्यादिति। लौकिकार्थप्रत्ययस्तु निर्मूलोऽपि सम्भवतीति, न तद्दृष्टान्तेन आम्नायैकसमधिगम्यधर्मप्रत्ययः स्वीकर्तु-मुचितः, व्यवहारानादित्वमपि शब्दनित्यत्वपक्षे एव युज्यते, नान्यथा। न चानित्त्यघटादिनाप्युदकाहरणादि-व्यवहारोऽनादिर्दृश्यते, तद्वत्र किन्न स्यादिति वाच्यम्, तादृशव्यवहारस्यानाद्याकृतिनिबन्धनत्वात्। तथा हि अपूर्व-घटव्यक्त्या जलाहरणमिच्छता पूर्वं तद् व्यक्तौ जलाहरणसामर्थ्यमवगन्तव्यम्, अन्यथा तदसाधनेऽपि प्रवृत्त्यापत्तेः। सामर्थ्यावगमश्च कार्यदर्शनलिङ्गाकानु-मानेनैव, नान्यथा। सामर्थ्यस्यैन्द्रियकत्वाभावात्। कार्यदर्शनं चापूर्वव्यक्तौ-नास्तीति, तज्जातीये तादृशकार्यदर्शनादपूर्वव्यक्तौ—इयं तत्कार्यसमर्था-पूर्वदृष्टैस्तत्कार्यसमर्थजातीयत्वादित्यनुमानेन तदवगम्य, तत्र प्रवर्त्तितव्यम्, नैवं शब्दे वक्तुं शक्यते। सास्नादिमदर्थप्रतिपादनसामर्थ्यमपूर्वशब्दव्यक्तौ नावधृतम्, न च किञ्चित् सर्वगोशब्दानुगतं सामान्यमस्ति, यतोऽपूर्वशब्देऽपि तादृशसामान्यदर्शनलिङ्गेन तदर्थप्रतिपादनसामर्थ्यानुमानं स्यात्। शब्दत्व-स्याश्वादिशब्दसाधारण्यान्न ततो विशिष्यार्थप्रतिपादनसामर्थ्यावगमो वक्तुं शक्यते, गोशब्दत्वसामान्यस्य च पूर्वमेव निराकृतत्वादिति शब्दस्याबोधक त्वापत्त्या वेदप्रामाण्यं भज्येत। अतो वेदप्रामाण्यसिद्धये सम्बन्धनित्यत्व-प्रतिपादनमावश्यकमिति ध्येयम् केचिद्वादिनः नैयायिकाः।

सूत्रस्थकर्मशब्दः कृतकत्वपर्यायः। तथा च शब्दः कृतकः तत्र दर्शनादित्यस्य प्रयत्ने सति तदुत्तरकाले दर्शनादित्यर्थः। एवं च शब्दः कृतकः प्रयत्नानभिव्यङ्ग्यत्वे सति प्रयत्नोत्तरमुपलभ्यमानत्वाद् घटादिवदित्यनुमान-मत्र विवक्षितं शब्दस्यानित्यत्वे तत्सम्बन्धः सुतरामनित्य इति शब्दनित्यत्वा-क्षेपेण सम्बन्धनित्यत्वाक्षेपोऽपि सूचितः। ननु सूत्रे कर्मशब्दस्य कृतकत्व-परत्वात्, तदनुरोधेन कृतकः शब्दः इति प्रतिज्ञायते। उच्यते अनित्यत्व-कृतकत्वयोः परस्परव्याप्त्वादेकसाधनेऽपरस्यापि सिद्धेरवर्जनीयत्वादित्यभि-

प्रायेण तथोपादानादेवं विनाशतात्पर्येण प्रयुक्तोऽस्थानादिति हेतुः साक्षात्कृत-कत्त्वसाधनानुपयुक्तोऽपि अनित्यत्वसाधनद्वारा कृतकत्वसिद्धये पर्यवस्यतीति बोध्यम् । प्रयत्नानभिव्यंग्येति विशेषणसिद्धिमाशङ्क्य परिहरति—**नेति** । अभिव्यञ्जनात् प्राक् यदि शब्दसद्भावे किञ्चित्प्रमाणं स्यात्, तर्हि प्रयत्नेन तदभिव्यक्तिरेव स्वीक्रियेत, न तु तदुत्पत्तिः । न च तत्र प्रमाणमस्तीति घटादिवदुत्पत्तिरेव युक्तेत्याह—**नहीति** । सत एवाभिव्यक्तिर्नासत इत्याह—**सन्निति** ।

सू० अस्थानात् ।। ७ ।। (पृ० २)

**भाष्यम्—नो खल्वप्युच्चरितं मुहूर्तमप्युपलभामहे । अतो विनष्टः इत्यवगच्छामः । न च सन् उपलभ्यते अनुपलम्भकारणानां व्यवधाना-दीनामभावेऽप्यनुपलम्भनात् । न च, असौ विषयमप्राप्तः आकाशविषय-त्वात् । कर्णच्छिद्रेऽप्यनुपलम्भनात् ।**

सू० करोति शब्दात् ।। ८ ।। (पृ० ३)

**भाष्यम्—अपि च शब्दं कुरु, मा शब्दं कार्षीः—इति व्यवहर्तारः प्रयुञ्जते न ते नूनमवगच्छन्ति—स एवायं शब्दः इति ।**

न चोच्चारणानन्तरमवस्थानेऽपि व्यवधानेनाश्रवणमुपपद्यते, व्यवधाय-कानवगमात् । तदाह—**अनुपलम्भेति** । इन्द्रिय-सम्बन्धाभावमाशंक्य निरस्यति—**आकाशेति** । शब्दस्याकाशे एव स्थितिर्वाच्या, आकाशस्य । श्रोत्रत्वात्तद्देशस्थितौ सम्बन्धाभावो दुर्घट इति तस्य प्रत्यक्षत्वं स्यात्तस्माद् विनष्ट इत्येव कल्पना युक्ता तदाह **कर्णच्छिद्र इति** ।। ७ ।।

किञ्च घटं करोतीतिवच्छब्दं करोतीति व्यवहाराविशेषाद् घटवद-स्याप्यनित्यत्वमेवेत्याह **करोतिशब्दादिति** ।। ८ ।।

साधकान्तरमाह—**सत्त्वान्तरे च यौगपद्यादिति** ।

सू०—सत्वान्तरे च यौगपद्यात् ।। ९ ।। (पृ० ४)

**भाष्यम्—नानादेशेषु च युगपच्छब्दमुपलभामहे तदेकस्य नित्य-स्यानुपपन्नमिति । असति विशेषे नित्यस्य न अनेकत्वम् । कार्य्याणान्तु बहूनां नानादेशेषु क्रियमाणानामुपपद्यते ऽनेकदेशसम्बन्धः तस्मादप्य-नित्यः ।**

नाना देशेषु युगपच्छब्दोपलम्भादनित्यत्वम् । न च गोत्वादीनां युगपदनेकत्रोपलम्भेऽपि अनित्यत्वानुगमादत्रैव हेतोर्व्यभिचारः, अविभुत्वे सतीति विशेषणीयत्वात् । गोत्वादीनां विभुत्वान्न व्यभिचारः । न च शब्देऽविभुत्वमिति विशेषणमसिद्धम्, शब्दोऽविभुः कार्त्स्न्येनैकत्रोपलभ्यमानत्वाद् घटवदित्यनुमानेनाविभुत्वसिद्धेः । न च गोत्वादीनामप्येकत्र व्यक्तौ कार्त्स्न्येनोपलम्भात्, तेषामप्यविभुत्वापत्तिः, तत्र तद् व्यक्तिविशेषानुरञ्जितगोत्वादेः प्रत्यक्षेणोपलम्भान्निखिलव्यक्त्यनुरञ्जनरूपकार्त्स्न्यस्य तत्र भानाभावात् । तथा चैवं प्रयोगः—युगपदनेकदेशोपलभ्यमानत्वाद् घटादिवदिति, एकत्वे एकदेशस्थेन पुरुषेणोच्चार्यमाणः तद्देशे एव तदीयमुखवदुपलभ्येत, कार्यत्वे तु क्रियाभेदात्प्रतिक्रियं कार्यभेदो घटवदुपपद्यते । तदाह—**कार्याणान्त्विति** । न चैवं सोऽयं गकार इति प्रत्यभिज्ञा नोपपद्येत, सेयं दीपकलिका तदेवेदं भवतः कार्षापणं यन्मथुरायां गृहीतमितिवत् सादृश्यनिबन्धनत्वेन तदुपपत्तेः । ततो गकारादीनां भेदात् कार्यत्वमेवेति ।

ननु कथं भेदात्कार्यत्वमवगम्यते भिन्ना एव नित्या गकाराः किन्न सन्तु । मैवम् । भेदे नित्यत्वासम्भवात्, भेदे हि सति सोऽयं गकार इति, तदेकत्वावगाहिप्रत्यभिज्ञायाः सादृश्यहेतुकत्वेन भ्रमत्वं सुखेन वक्तुं शक्यम्, नित्यत्वे तु भ्रान्तिनिदानाभावत्प्रमैव सा वक्तव्येति नित्यत्वहान्यापत्तेः । अत एव भाष्यकारोऽपि वक्ष्यति 'अपि चैकरूप्ये सति देशभेदे च कामं देशा एव भिन्नाः स्युः, न तु शब्द' इति । ततश्च नित्यत्वे सति एकत्वमेवेति, नानादेशोपलम्भो न स्यात् । उपलभ्यन्ते च नानादेशेषु तस्माद्भिन्ना एव गकारादयो वर्णा इति, तदेकत्वावगाहिप्रत्यभिज्ञाया भ्रमत्वं, भ्रमत्वाच्च शब्दस्य कार्यत्वम् । तदाह—**नानादेशेष्विति** । अयमर्थः तदेकस्येति हेतुः, नित्यो ह्ययमेकः स्यात्, एकत्वे चानुपपन्नं नानादेशोपलम्भनमिति । न च भिन्ना नित्या गकारा एव किं न स्वीक्रियन्ते । अत आह—**असति विशेष इति** । विशिष्टरूपस्य गकारस्य नित्यत्वपक्षे नानेकत्वं सम्भवति, तथा सति अविशेषबुद्धेरप्रामाण्यापत्तेः, तदप्रामाण्ये च नित्यत्वहानिरिति ।

न च व्यञ्जकध्वनिदेशभेदाद् व्यंग्यस्य शब्दस्य भिन्नदेशेषु उपलम्भः । प्रदीपादौ व्यभिचारात्, व्यञ्जकानां ध्वनीनां देशभेदोऽपि नास्ति, सर्वेषा-

माकाशदेशत्वात्, तस्य च स्वतः अवयवतोवा भेदाभावात् निरवयवत्वात्। भवन्मते व्यङ्ग्यव्यञ्जकयोर्ध्वनिशब्दयोराकाश एको देश इति सर्वैरेकत्र शब्दाभिव्यक्तिः स्यात्। अस्मन्मते तु वायवीयत्वाच्छब्दो वाय्ववयवदेश इति भिन्नदेशो भवतीति युक्तमिति।

अनित्यत्वे साधकान्तरमाह—प्रकृतिविकृत्योश्च ॥ १० ॥ ( पू० ५ )

**भाष्यम्। अपिच दध्यत्र—इत्यत्र इकारः प्रकृतिः, यकारो विकृतिः इत्युपदिशन्ति। यद्विक्रियते, तदनित्यम्। इकारसादृश्यं च यकारस्योपलभ्यते, तेनापि तयोः प्रकृतिविकारभावो लक्ष्यते।**

उपदिशन्ति व्याकरणसूत्रकाराः। तथा च स्मृतिप्रामाण्यादिकारयकारयोः प्रकृतिविकृतिभावो दधिक्षीरवदवगम्यते इति। तद्वदेवानित्यत्वमपि बोध्यम्। अत्रत्यं भाष्यं निगदेनैवव्याख्यातम्।

साधकान्तरमाह

वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥ ( पू० ७ )

**भाष्यम्—अपिच बहुभिः रुच्चारयद्भिः महान् शब्दः श्रूयते। स यदि अभिव्यज्यते, बहुभिरल्पैश्चोच्चार्य्यमाणस्तावानेवोपलभ्येत। अतो मन्यामहे—नूनमस्य एकैकेन कश्चिदवयवः क्रियते, यत्प्रचयादयं महान् उपलभ्यते।**

कारणगताल्पत्व—महत्त्वाभ्यां कार्ये अल्पत्व—महत्त्वयोर्दर्शनाद् प्रकृतेऽपि 'बहुभिरुच्चारयद्भिर्महान् शब्दः श्रूयते' इति भाष्येण शब्देऽपि कारणगतमहत्त्वादेव महत्त्वमिति, कार्यत्वमेव स्वीकर्तुमुचितं नहि व्यञ्जकेन व्यङ्ग्येऽतिशयः, दीपसहस्रैरपि पटादौ महत्त्वादर्शनादिति भावः ॥११॥

सूत्रम्। समन्तु तत्र दर्शनम् ॥ १२ ॥ (उ० १)

**भाष्यम्—तु शब्दात्पक्षो विपरिवर्तते। यदुक्तम्। ( पू० १ ) प्रयत्नादुत्तरकाले दर्शनात् कृतजोऽयमिति। यदि विस्पष्टेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामः। ततो नित्यप्रत्ययसामर्थ्यात् प्रयत्नेनाभिव्यज्यते—इति भविष्यति। यदि प्रागुच्चारणादनभिव्यक्तः प्रयत्नेनाभिव्यज्यते। तस्मादुभयोः पक्षयोः सममेतत्।**

तु शब्दः पूर्वपक्षं व्यवच्छिनत्ति। अयमभिप्रायः—प्रयत्नानन्तरोपलब्धिरिति हेतुरनैकान्तिकः। अनेन हि प्रयत्नोत्तरकाले शब्दस्य सत्ता गम्यते, नतु पूर्वकाले तत्प्रतिषेधोऽपि। न च पूर्वकाले तत्सत्तायां प्रमाणाभावः, सोऽयं गकार इति प्रत्यभिज्ञाया एव प्रमाणत्वात्। न च प्रदीपकलिकादौ व्यभिचारान्न पदार्थसत्ता साधनक्षमा सा। तत्र प्रत्यक्षविरोधेन तदसाधकत्वेऽपि, प्रकृते प्राक्काले सदसत्त्वग्राहिप्रमाणाभावेनाऽविरोधात्तत् साधकत्वाङ्गीकारात्। अत एवात्मनः पूर्वापरकालस्थायित्वप्रदर्शनार्थं प्रमाणत्वेन प्रत्यभिज्ञोपादानं सर्वत्र दृष्टं सङ्गच्छते। यदि परिसंख्यारूपेण प्रागूर्ध्वानुपलभ्यमानत्वे सतीति विशेषणं हेतौ प्रक्षिप्यते, तदापि वैशेषिकमते शब्दत्वे व्यभिचारः सोप्येवं रूपो न चासावनित्यः। सांख्यमते तु नित्यात्मचैतन्ये व्यभिचारः सुषुप्त्यादौ तदस्फुरणात्। न च तदानीमसौ नास्ति, नित्यत्वात्।

बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं च तदिति।

वादिनः शाक्यस्यापि प्रतिसंख्यानिरोधादिभि र्व्यभिचारः। प्रतिसंख्यानिरोधादि र्नेह प्रदर्श्यंते ग्रन्थगौरवभयादुपयोगाभावाच्च।

एवं भूमिजलावृतमाकाशं सदपि नोपलभ्यते खननोत्सेचनादिप्रयत्नानन्तरमुपलभ्यते इति, तत्रापि हेतुरनैकान्तिकः, आकाशस्यापि प्रत्यक्षत्वमग्रे स्फुटीभविष्यतीति। नोपलभ्यमानत्वं तत्रासिद्धमित्यवधेयम्। न चाकाशं सर्वगतमिति भूम्याद्यावृतमप्यस्तु, शब्दस्तु नैवं रूपः, तत्कथं प्रयत्नात्पूर्वं वर्तेत इति, भ्रान्तोसि, शब्दोप्याकाशवत्सर्वगत एवेति विशेषाभाव इति। १२॥

अस्थानादितिहेतोर्व्यभिचारप्रदर्शनार्थं सूत्रम्।

सतः परम् अदर्शनं विषयानागमात्॥ १३॥ (उ० २)।

**भाष्यम्—यदपरं कारणमुक्तं ( पू० २ ) उच्चरितप्रध्वस्तमिति अत्रापि यदि शक्ष्यामो नित्यतामस्य विस्पष्टं वक्तुं ततो नित्यप्रत्ययसामर्थ्यात् कदाचिदुपलम्भं कदाचिदनुपलम्भं दृष्ट्वा किञ्चिदुपलम्भस्य निमित्तं कल्पयिष्यामः। तच्च संयोगविभागसद्भावे सति भवतीति संयोगविभागावेवाभिव्यञ्जकौ—इति वक्ष्यामः। उपरतयोः संयोगविभागयोः श्रूयते इति चेत्। नैतदेवम्। न नूनमुपरमन्ति संयोगविभागाः, यतः उपलभ्यते शब्दः इति, नहि ते प्रत्यक्षाः इति।**

अयं भावः । यदा कूपपूरणप्रबन्धेनाकाशस्तिरोधीयते, तदा, तत्रास्थानादिति हेतुरनैकान्तिकः । न च तिरोधानं नाम व्यवधानेनादर्शनम्, आकाशं तु सदैवाप्रत्यक्षमिति किमत्र तिरोधानम् ।

मैवम् । तदप्रत्यक्षत्वे प्रमाणाभावात् । तत्सिद्धिरेव न स्यात् । न च शब्दगुणलिङ्गेन तदनुमानं, शब्दस्य गुणत्वाभावात् ।

किं चास्य गुणत्वस्वीकारेऽपि वायोरेवासौ गुणो, नाकाशस्य, वर्णाभिव्यक्तिजनककण्ठताल्वादिस्थानसम्बन्धाद् वायौ शब्दो गुण उत्पद्यते, श्रोत्रं गते वायौ तत्रत्यशब्दं संयुक्तसमवायेन श्रोत्रं गृह्णाति । न चानित्यसमवेतत्वेन शब्दस्यानित्यत्वं शङ्क्यम् । सत्ताघटत्वादिवन्नित्यत्वात् । न चाकाशस्य नीरूपत्वात् कथं प्रत्यक्षता, नीरूपस्यापि रूपस्य प्रत्यक्षदर्शनात् । प्रत्यक्षं प्रति रूपवत्त्वस्याप्रयोजकत्वात् । न च नीरूपद्रव्यस्य न प्रत्यक्षत्वं गुणस्य द्रव्यत्वाभावान्नीरूपस्यापि प्रत्यक्षत्वे बाधकाभावः । कालस्य नीरूपस्यापि प्रत्यक्षत्वाभ्युपगमेन तथापि रुपवत्वस्य तत्राप्रयोजकत्वात्, आकाशस्यापि नीलरूपवत्त्वेन नीरूपत्वाभावात् । अत एवेहाकाशे पतत्री पतति इति सर्वजनीनानुभवः सङ्गच्छते । वायुर्नीरूपः स्पर्शवान् आकाशस्तु निःस्पर्शो रूपवानित्यनयोर्विशेष इति दिक् ।

चक्षुषोऽनुग्राहकत्वादालोको यथा घटाद्यभिव्यञ्जकः, तथा श्रोत्रसंस्कारकत्वाद् ध्वनिः शब्दाभिव्यञ्जकः । न च ध्वनीनां केन रूपेण संस्कारकत्वमिष्यते । नहि किञ्चिच्चिह्नं तत्र दृश्यते इति चेत् ? तर्हि केन रूपेण शब्दजनकत्वं ध्वनीनामिति पर्यनुयोगः जनकत्वपक्षेऽपि कर्तुं शक्यते, चिह्नादेस्तत्राप्यसत्त्वात् । शक्तिरूपं सामर्थ्यन्तु उभयत्राप्यविशिष्टं, तच्च कार्यानुमेयं, न रूपादिवत्प्रत्यक्षमतीन्द्रियत्वादित्यसकृदुक्तमेव ।

भाष्यकारेण गूढाभिसन्धिना संयोगविभागयोरभिव्यञ्जकत्वमुक्तं, पूर्वपक्षिणा वायवीयसंयोगविभागाभिधानाभिप्रायानभिज्ञेन कण्ठताल्वादिस्थानसंयोगविभागपरत्वाभिमानेनाक्षिप्यते—**उपरतयोरिति** । गूढाभिसन्धि स्फोरयति—**न नूनमिति** । वायवीयानां संयोगविभागानां नोपरमोऽयमेव शब्दाभिव्यञ्जकः । कण्ठादिसंयोगविभागयोरनभिव्यञ्जकत्वात्तदुपरमे न क्षतिः । न च वायवीययोः संयोगविभागयोः प्रत्यक्षत्वमित्याह—**नहि ते इति** ।

यदि शब्दमित्यत आरभ्य प्रागमिधातेनही' त्यस्माद् ग्रन्थाद् गूढाभिप्रायावेव पूर्वोत्तरपक्षवादिनौ । तथाहि अप्राप्ताश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्युरिति पूर्वपक्षिणा ताल्वादिसंयोगविभागाभिप्रायेणैव दोषा दर्शिताः । वायवीयानां तेषामप्राप्त्यसम्भवेन तदभिप्रायेण दोषासम्भवात् । ननु नहि ते प्रत्यक्षा इति सिद्धान्तवादिना संयोगविभागानां वायवीयत्वस्फोरणात्कथं पुनरत्र गूढाभिसन्धिरिति चेत्, न । ताल्वादिसंयोगविभागानामपि वर्णजनकशक्तिमत्त्वेन प्रत्यक्षत्वाभावात्, तत्तात्पर्येणापि तादृशोक्तिसम्भवादितिध्येयम् ।

ननु ध्वनीनामभिव्यञ्जकत्वं संस्कारद्वारा वाच्यम् संस्कारः किं शब्दस्य, उत श्रोत्रस्य, अथवा द्वयोरिति । आद्ये नित्यस्य सर्वगतस्यैकस्य शब्दस्यैकत्र देशे संस्कारे सर्वत्रोपलम्भः स्यात्, अविशेषात् । अनित्यत्वे तु भेदादन्येषामसंस्कृतत्वसम्भवेनानुपपत्तिपरिहारः स्यादपि । न च शब्दाधारस्यत्त्यैक एव प्रदेशः संस्कृतो न सर्व इति यः प्रदेशः संस्कृतः, तत्र शब्द उपलभ्यते, न प्रदेशान्तरेऽसंस्कृतत्वादिति वाच्यम्, व्योम्नो निरवयवत्वेन स्वतोऽवयवतो वा प्रदेशासम्भवात्, तस्य चैकत्र संस्कारे सर्वत्र सर्वशब्दानां श्रवणं स्यात् । द्वितीयेपि कल्पे आकाशमेव श्रोत्रमिति वादिनां मते तस्यैकत्वाद्विभुत्वाच्चसर्वत्र प्राप्तौ सर्वशब्दानां सर्वस्मिन् देशे श्रवणं प्रसज्येत संस्कृतत्वाविशेषात् ।

किञ्चैतन्मते एकस्य शब्दश्रवणवेलायां सर्वपुंसां श्रवणं स्यात्, आकाशस्यैव श्रोत्रत्वात् । तस्य चैकत्वादिति । न च धर्माधर्मोपगृहीताकाशभाग एव श्रोत्रम्, तस्य च धर्माधर्मभेदाद् भेद इति, नाव्यवस्था । अत एव न बधिरस्य शब्दश्रवणापत्तिरपि शब्दश्रवणादृष्टाभावेन तं प्रति नभसः श्रोत्रत्वाभावादिति वाच्यम्, आकाशस्य निष्प्रदेशत्वेनैतादृशकल्पनानवकाशात् ।

सांख्यानामपि श्रोत्रस्याहंकारित्वेनेयमापत्तिस्तुल्यैव, अहंकारस्याप्याकाशवन्निरवयवत्वाद् व्यापकत्वाच्च । किंच सकृत् संस्कृतेन श्रोत्रेण सर्वशब्दोपलब्धिः स्यात्, घटायोन्मिलितं चक्षुः पटमपि प्रकाशयतीति न्यायात् । अन्त्यकल्पे पूर्वकल्पद्वयोक्तदूषणसमुच्चयो वाच्य इति । कृतकत्वाङ्गीकारे तु नायं दोषः, एकशब्द-श्रवणवेलायां न सर्वशब्दश्रवणापत्तिः, शब्दान्तराणान्तदानीमसत्त्वादिति आह भाष्ये—**यस्याप्यभिव्यञ्जन्तीति** ।

**भाष्यम्—यदि शब्दं संयोगविभागाः एवाभिव्यञ्जन्ति, न कुर्वन्ति आकाशविषयत्वाच्छब्दस्य, आकाशस्यैकत्वात्, यः एवायमत्र श्रोत्राकाशः स एव देशान्तरेष्वपीति, स्रुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत। यस्य पुनः कुर्वन्ति, तस्य वायवीयाः संयोगविभागाः वाय्वाश्रितत्वाद्वायुष्वेव करिष्यन्ति। यथा तन्तवः तन्तुष्वेव पटम् तस्य पाटलिपुत्रेऽनुपलम्भो युक्तः स्रुघ्नस्थत्वात्तेषाम्। यस्याप्यभिव्यंजन्ति तस्याप्येष न दोषः, दूरे सत्याः कर्णशष्कुल्याः अनुपकारकाः संयोगविभागाः, तेन दूरे यच्छ्रोत्रम्, तेन नोपलभ्यते इति। नैतदेवम्। अप्राप्ताश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्य्युः, सन्निकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम् न च युगपदुपलभेते। तस्मान्नाप्राप्ताः उपकुर्वन्ति। न चेदुपकुर्वन्ति तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागौ इति।**

**नैतदेवम्, अभिघातेन हि प्रेरिताः वायवस्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागान् उत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते। ते च वायोरप्रत्यक्षत्वात् संयोगविभागाः नोपलभ्यन्ते। अनुपरतेष्वेव तेषु शब्दः उपलभ्यते, नोपरतेषु। अतो न दोषः अत एव चानुवातं दूरादुपलभ्यते शब्दः।**

अयं भावः—आकाशस्य श्रोत्रत्वानभ्युपगमाद्, अभ्युपगमेऽपि तस्य निर्भागत्वानङ्गीकारादिह पतति पतत्रीत्यादि-प्रत्यक्षानुरोधात्। तथा च श्रोत्रस्य प्रतिपुरुषं भिन्नत्वात् संस्कारद्वारा शब्दश्रवणभेद उपपद्यते। न चैक-श्रोत्रसंस्कारे सर्वश्रोत्रसंस्कारो वक्तुं शक्यते, भिन्नत्वात्। एवञ्च यच्छ्रोत्रं संस्कृतम्, तेनेव शब्दग्रहणम्, नान्येन तस्यासर्वगतत्वान्न सर्वत्रोपलम्भः शब्दनित्यत्वपक्षेऽपि तदाह—**दूरे इति**। श्रोत्रं स्वाभिमतं दर्शयति—**कर्णशष्कुल्या इति**। तथा च शब्दश्रवणान्यथानुपपत्त्या शब्दग्रहणसामर्थ्यं कल्पनीयम्, अन्यथा बधिरस्याप्याकाशसत्त्वेन शब्दोपलम्भप्रसङ्गात्।

अथवास्तु तावन्निरवयवाकाशमेव श्रोत्रम्, तावतापि ध्वनिसंस्कारस्याधिष्ठानगतत्वेनाधिष्ठानस्य च प्रतिपुरुषं भेदात्, सर्वश्रोत्रसंस्कारापत्तिरिति नाव्यवस्था। न चाधिष्ठानसंस्कारे न श्रोत्रसंस्कार इत्यसंस्कृतेनैव श्रोत्रेण

शब्दोपलम्भस्तथा चासंस्कृतत्वाविशेषाच्छ्रोत्रान्तरेणापि तदुपलम्भापत्त्या सैवाव्यवस्थेति वाच्यम्, अधिष्ठानद्वारा श्रोत्रस्यैव संस्कार इति स्वीकारादन्यथा असंस्कृतकर्णशष्कुलीकस्य तदुपलम्भअप्रसङ्गात् ।

न चाधिष्ठानद्वारा दूरस्थश्रोत्रं किन्न संस्क्रियते इत्यत्र आह—**अप्राप्ता इति** । प्राप्यैव ध्वनयः श्रोत्रसंस्कारं कुर्वन्ति, अप्राप्तास्तु कथं तत्संस्कुर्युरिति । संयोगविभागा इति ध्वनीनामुपलक्षणम् । न चैकश्रोत्रकल्पे एकस्मिन्नधिष्ठाने संस्कृते तद् द्वारा श्रोत्रं संस्कृतमेवेति दूरस्थस्यापि शब्दश्रवणप्रसङ्गः श्रोत्रस्यैकत्वात्संस्कृतत्वाच्चेति वाच्यम् । ज्ञानाङ्गं हि संस्कारो ज्ञानसमानदेश एव ज्ञानं च स्वशरीर-प्रदेश एव नान्य-शरीरे इति संस्कारस्यापि तत्रैव ज्ञानजनकत्वं न शरीरान्तरे वैगुण्यात् । नन्वात्मनोऽपि निरवयवत्वान्निरवयवस्य च प्रदेशासम्भवात्कथं शरीरप्रदेशे ज्ञानमुच्यते ? सत्यं निष्प्रदेश आत्मा, तथापि शरीरावच्छेदेनैवात्मनि ज्ञानदर्शनादेवंविधोक्तो बाधकाभावात् । अथ वा यथा घटाकाशसंयोगो नाकाशं व्याप्नोति, किन्तु क्वचिदेवान्यत्र पटसंयोगादेरपि दर्शनात्तथा कर्णशष्कुल्यपीति तदवच्छेदोऽपि क्वाचित्क एवेति न तदवच्छिन्न-संस्कारसांकर्य्यमिति नाव्यवस्था । यथा घटस्याव्यापकत्वात्तदनुरोधित्वात्तदीयसंयोगस्य न व्यापकत्वम्, तथा कर्णशष्कुल्या अपि तादृशत्वात्तदीयसंयोगोऽपि न व्यापकः, एवञ्च बधिरस्य न शब्दोपलम्भ आकाशात्मक-श्रोत्राभेदेऽपि । तदीयाकाशस्य धर्माधर्मोपगृहीतकर्णशष्कुल्यवच्छिन्नत्वाभावात् ।

ननु बधिरात्मनोऽपि व्यापकत्वे शरीरान्तरेऽपि सत्त्वादात्मान्तरवत्तदवच्छेदेनैव किन्न शृणोतीति चेत्, तदीयादृष्टोपार्जितशरीराद्यवच्छेदेनैव तद्भोगसम्भवेन ग्रामवासिनां सर्वेषां तत्स्वामित्वाभावद्देहे सद्भावमात्रेण तत्स्वामित्वाभावेन तत्र श्रवणापत्तिविरहात् शब्दश्रवणादृष्टाभावात् ।

संस्कारकभेदादपि न शब्दश्रोत्राकाशसंस्कारसाङ्कर्यम् संस्कारका हि ध्वनयः प्रादेशिकाः सावयवाश्चेति तदाहितसंस्कारोऽपि प्रादेशिक इति नैकत्र संस्कारेणान्यत्रोपलम्भ इति ।

यदप्युक्तं सकृत्संस्कारेण सर्वत्रोपलब्धिरिति । तदपि न यथाकार्यं कल्पनाया औचित्येन प्रतिशब्दं संस्कारहेतुभूतध्वनिजातिभेदस्य कल्पनात्,

ध्वनिसंयोगस्यैव श्रोत्रसंस्काररूपतया स्थिरवाय्वपनयस्य तत्त्वाभावात्। वर्णानित्यत्ववादिनां यथा वर्णान्तरजनकताल्वादिसंयोगेन वर्णान्तरस्योत्पत्तिवारणाय तत्तद्वर्णजनकतत्तत्ताल्वादिस्थानभेदः कल्प्यते, तथा नित्यवादिनामपि तद्वर्णाभिव्यञ्जकध्वनिभेदकल्पनं सममिति नातिरिक्तकल्पनागौरवमेवं ताल्वादिसंयोगजनकप्रयत्नतद्धेतुविवक्षाभेदेऽपि बोध्यम्। तदेतत्सर्वमभिप्रेत्याह—**तस्मादिति**। शब्दश्रवणरीतिं दर्शयति **अभिघातेनेति**। अभिघातेन—कण्ठताल्वाद्यभिघातेन स्तिमितानि स्थिराणि। यद्यपि वायोः सदागतित्वान्न स्थिरत्वम्, तथापि सूक्ष्मोवायुर्यदा परान्न कम्पयति, तदा स्थिर इव भवतीत्यभिप्रायेण **स्तिमितानीत्युक्तम्**। सर्वतो दिक्कान्—सर्वदिक्षु भवान् वेगवत्त्वाच्छरादिवद् गच्छति, तेन न सर्वत्र शब्दोपलम्भः। संयोगविभागानुपलम्भे हेतुमाह—**वायोरिति**। एवञ्चानुपरतेष्वेव शब्द उपलभ्यते इति सिद्धान्तितम्ः। ईदृशरीत्या लोकमार्गोप्यनुरुद्ध्यते लोको हि यं शब्दं परस्मै श्रावयितुमिच्छति, तमेवोच्चारयति। न तु शब्दान्तरश्रावणेच्छया शब्दान्तरमुच्चारयति। लोकरीतिश्च परीक्षकैरनुसरणीया, अन्यथा लोकस्य तत्राविश्वासापत्तेः।

वैशेषिकास्तु संयोगाद् वा विभागाद् वा शब्दाद् वा शब्दनिष्पत्तिरि-(२.२.३)ति, ऊचुः। संयोगजः शब्दो यथा भेरीदण्डसंयोगाज्जायते यः, स द्वितीयः पाटचमानवेणुदलद्वयविभागजः, कर्णगोचरस्तु शब्दजः शब्दः। तत्र संयोगादेर्जायमानः शब्दः वीचीतरङ्गन्यायेन स्वसमानजातीयान् शब्दान् सर्वदिक्षु जनयति, तेषु निरन्तरमुत्पाद्यमानेषु यो यः कर्णपथमवतरति, स श्रूयते इति सेयं कल्पना न युक्ता, लोकविरुद्धत्वात्, कल्पनागौरवाच्च। यं श्रावयितुमित्यादिना लोकविरोधस्तावत्प्रदर्शित एवैकः, अन्येन विरोधेन सह कल्पनागौरवमिदानीं प्रदर्श्यते। एकशब्देनैव श्रवणोपपत्तौ तदर्थमनेकशब्दकल्पनागौरवम्। किञ्च शब्दस्य शब्दान्तरारम्भकत्वम्, अप्यदृष्टत्वात् प्रमाणविरुद्धम्। अमूर्तस्य शब्दस्य निष्क्रियत्वादारम्भकत्वानुपपत्तिः, इयति देशे आरभते नान्यत्रेति नियामकानुपलब्ध्या सर्वत्रारम्भापत्तिश्च। अन्तिमस्यापि शब्दत्वाच्छब्दान्तरारम्भकत्वापत्तिश्च। अनुवातं दूरेण शब्दोपलब्धिरसमर्थिता च स्यात्।

किञ्च वीचीसन्तानवदेकदेशे शब्दारम्भः स्यात् न चतुर्दिक्षु, वीचीनां सक्रियत्वाद् वीच्यन्तरारम्भकत्वं युज्यते, शब्दस्य निष्क्रियत्वान्न तदारम्भकत्वम्, कुड्यादिभिः शब्दान्तरारम्भकत्वविघातानुपपत्त्या व्यवहितेऽपि शब्दान्तरारम्भापत्तिः। अमूर्तस्य मूर्तैर्व्यवधानाभावात्। न च शब्दो व्योमगुणः, न च कुड्यमध्ये तदस्तीति, कथं तत्र शब्द इति शक्यम्। कुडचेन व्योम्नो विनाशोत्सारणासम्भवात् नित्यत्वात् व्यापकत्वाच्च।

न च शब्दस्यारम्भकत्वे किञ्चित्प्रमाणम्। अर्थापत्तेस्त्वयानभ्युपगमात् प्रकारान्तरेण, शब्दश्रावणोपपत्तेश्च। नापि सामान्यतो दृष्टानुमानम्, लिङ्गाभावात्। प्रत्युत शब्दो न शब्दान्तरारम्भकः शब्दत्वादन्त्यशब्दवदित्यनुमानेनानारम्भकत्वनिर्णय एवेति दिक्।

आर्हतैस्तु शब्दस्यागमनं परिमाणं स्पर्शः अभिभवश्च स्पर्शवानपि त्वगिन्द्रियाग्राह्यः सूक्ष्माश्च पुद्‌लभागा इति सर्वं दृष्टविरुद्धं कल्प्यते। एतन्मतेऽपि अदृश्यावयवैरवयविनः शब्दस्य रचनाऽनुपपन्नैव। द्रवत्वं विना संश्लेषोऽपि कथं सक्तुवत्संश्लेषोपपादने तु वायुसम्पर्कात्तद्वदेव विश्लेषः स्यात्। लघूनामवयवानां केनचिन्निबन्धाभावेन वृक्षाद्यमिघातेन लोष्ठवद्विश्लेषापत्तिरिति न किञ्चिदेतत्।

सूत्रम्—प्रयोगस्य परम्॥ १४॥ (उ० ३)

**भाष्यम्—यदपरं कारणमुक्तं शब्दं कुरु, मा कार्षीः इति व्यवहर्तारः प्रयुञ्जन्ते। यद्यसंशयं नित्यः शब्दः, शब्दप्रयोगं कुर्विति भविष्यति। यथा गोमयान् कुर्विति समाहारे। (संवाहे वा)**

**गोमयान् कुरु** इति। ननु कार्यत्वमात्रस्य प्रतिज्ञातत्वेन गोमयादावपि तत्सत्त्वेन कथं हेतोरनैकान्तिकत्वं? सत्यम्इदमुपलक्षणमाकाशमात्रं कुरु इत्यत्र हेतोरनैकान्तिकत्वं द्रष्टव्यम्। ननु आवरणाभावमात्रस्यैवाकाशत्वं वदतां बौद्धानां मते वस्त्वन्तरापसारणजन्यत्वादाकाशेऽपि न व्यभिचार इति चेत्, न, तन्मते अभावस्य कार्यत्वानभ्युपगमेन व्यभिचारस्य दुरुद्धरत्वात्। मतान्तरे तु आकाशस्य नित्यत्वेन व्यभिचारः स्फुट एव। न चाकाशमात्रं कुरु इति प्रयोगो निष्फलः वस्त्वन्तरापसारण-फलकत्वेन सार्थक्यात्।

अथाकाशे गौणः करोति शब्द प्रयोगः, एवं तर्हि शब्देऽपि गौण एव तस्यापि प्रत्यभिज्ञया नित्यत्वसिद्धेरप्रत्यूहत्वादिति ।। १४ ।।

सूत्रम्—आदित्यवद् यौगपद्यम् ।। १५ ।। ( उ० ४ )

**भाष्यम्—यत्तु (पू० ४) एकपदस्य सतो नानादेशेषु युगपद् दर्शनमनुपपन्नमिति । आदित्यं पश्य देवानां प्रिय एकः सन् अनेकदेशावस्थित इव लक्ष्यते । कथं पुनरवगम्यते एकः आदित्यः—इति ? उच्यते । प्राङ्मुखो देवदत्तः पूर्वाह्णे सम्प्रति पुरस्तादादित्यं पश्यति । तस्य दक्षिणतोऽवस्थितो न द्वौ पश्यति, आत्मनश्च सम्प्रति न तिरश्चीनं देवदत्तस्यार्जवे । तस्मादेक आदित्य इति । दूरत्वादस्य देशो नावधार्य्यते, अतो व्यामोहः । एवं शब्देऽपि व्यामोहादनवधारणं देशस्य । यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात्, तथापि तावदनेकदेशता कदाचिदवगम्येत, नच तत् संयोगदेशमागच्छति । प्रत्यक्षा हि कर्णशष्कुली तद्देशो गृह्यते । वायवीयाः पुनः संयोगविभागाः अप्रत्यक्षस्य वायोः, कर्णशष्कुलीप्रदेशे प्रादुर्भवन्तो नोपलभ्यन्ते—इति नानुपपन्नम् । अत एव व्यामोहः, यत् नानादेशेषु शब्दः इति । आकाशदेशश्च शब्द इति, एकं च पुनराकाशम् अतोऽपि न नानादेशेषु । अपि च एकरूप्ये सति देशभेदेन कामं देशा एव भिन्नाः, नतु शब्दः । तस्मादयमप्यदोषः ।**

सत्त्वान्तरे च यौगपद्यमिति सूत्रे यदनित्यत्वे कारणमुक्तमेकस्य नानादेशोपलम्भनमिति, तत्र व्यभिचारमाह अनेन सूत्रेण । एकस्यैव सवितुर्यथा नानादेशोपलम्भेऽपि नानेकत्वम्, एवं शब्देऽपीति न नानादेशोपलम्भनमनित्यत्वसाधनमादित्ये व्यभिचारादित्यर्थः । देवानां प्रियो मूर्खः । यद्यप्येवंविधशब्दोच्चारणं भाष्यकृतां न शोभते, तथापि प्रत्यहमादित्यं पश्यन्नपि यस्तमेकमनेकदेशस्थं नावधारयति, यस्मै च विशिष्यैतत्प्रतिपादनीयम्, स वस्तुतस्तथाविध एवेति तत्तात्पर्येणायं शब्दप्रयोगः समुचित एवेति बोध्यम् ।

वस्तुतो न आदित्योऽनेकदेशस्थः किन्तु अनेकदेशस्थत्वेन ज्ञायते इत्यभिप्रायेणैव शब्दः प्रयुक्तः । आदित्यस्य नानादेशोपलम्भे अयं हेतुः यः पुरुषः

प्राच्यां दिशि यावद्दूरं सूर्यं पश्यति, ततः क्रोशसहस्राद् दूरं प्रतीच्यां स्थितः पुरुषः तावद्दूरम् एव तं तत्र पश्यति, ततो नानादेशोपलब्धिः स्पष्टैव। न च तथा सति भिन्न एवादित्योऽस्तु। मैवं योग्यानुपलब्धिविरोधात्।

अपि च मध्याह्ने सर्वोपि जनः स्वोपरि सवितारमीक्षते, न च सर्वस्योपरितन एकदेशः तस्माद्भिन्नदेशं पश्यतीति भावः। कुतः कारणादेकः सविता नानादेशेषूपलभ्यते ? इदं कारणं यो यत्र स्थितो यावद्दूरं वृक्षादि गृह्णाति तत्रैव सन्निहितं सूर्यं पश्यन् तत्रैव देशे स्थितं सूर्यमवधारयति पश्चात्तत्र गत्वा पुनस्तावद्दूरमेव पुनस्तं पश्यति, तत्रापि गत्वा पुनस्तावद्दूरं पश्यति, ततोऽवगम्यतेऽयमिति दूरस्थोऽपि नानादेशस्थितैः पुरुषैः तत्सान्निध्याध्यासेन भिन्न-भिन्न-देशे गृह्यते, पूर्वं हि यो वृक्षादिदेशो स्वदेशत्वेनावधृतः, न च वृक्षसूर्ययोरन्तरालं गृहीतं, तत्र गतस्तु तयोरन्तरालं तावदेवावधारयति इति, यथा सूर्यस्य तत्तद्देशविशेषादर्शनादनेकदेशस्थत्वज्ञानं तथा शब्दस्यापि व्यापकत्वात् सर्वदेशे उच्चारणाश्रवणानन्तरश्रवणादनेकदेशस्यत्वज्ञानम्। न च कात्स्न्र्येनैकदेशे उपलम्भाद् घटादिवच्छब्दस्याप्यविभुत्वमेवेति वाच्यम्। निरवयवतयाऽवयवशोवृत्तिविरहात्स्वरूपत एव तद्वृत्तेरुपगमात्। अवयवशोवृत्तिविरहादेव कात्स्न्र्येनाभिव्यक्तिः, न तु कात्स्न्र्येन वर्तमानतया निरवयवे तदुभयवृत्तिविकल्पासम्भवस्य पूर्वमेव प्रदर्शितत्वात्। न च शब्दस्य सर्वगतत्वेनोपलम्भः स्यादिति वाच्यम्। व्यङ्ग्यभानस्य व्यञ्जकाधीनतया व्यञ्जकानां ध्वनीनां प्रादेशिकत्वेन प्रदीपदेशे घटस्येव ध्वनिप्रदेशे एव तदभिव्यक्तिस्वीकारात्। व्यञ्जकानां ध्वनीनां अव्यापकतया सर्वत्र तदभिव्यञ्जनसामर्थ्यविरहात्, नाविच्छिन्नरूपेण सर्वत्रोपलम्भः, किन्तु यत्र देशे यदा यदा ध्वनिरुत्पद्यते, तत्र तत्र तदा तदा तदुलम्भः, अन्यत्रान्यदा च ध्वनीनामभावात्तदनुपलब्ध्या मध्ये तद्विच्छेदः प्रतीयत इति। तत्रादित्यवन्नानादेशस्थत्वोपलब्धिरिति ध्वनेरविभुत्वाच्छब्देप्यविभुत्वबुद्धिरेवं ध्वनेर्गतिमत्वाद्वेगवत्त्वाच्च यदा येनाध्वना ध्वनिरायाति निर्याति च, तदा तेनैवाध्वना शब्दोप्यायातीव, निर्यातीवेति प्रतीयते इति शब्दे तन्मार्गागभनप्रत्ययो ध्वनिगततन्मार्गागमननिमित्तक एव परेषामालोकगतिनिबन्धनान्धकारगतिवदिति बोध्यम्।

सवितुरेकत्वं साधयति—**प्राङ्मुख इति**। पूर्वाह्णे पुरस्तादादित्यं पश्यतो देवदत्तस्य दक्षिणदेशस्थितः पुरुष आदित्यद्वयं न पश्यति, यदि

पश्येत्तदैकं देवदत्तस्यार्जवे, एकञ्च स्वस्येति । इदमुपलक्षणम् । देवदत्तस्याप्यादित्यद्वयदर्शनापत्तिः यद्वा सर्वस्यापि तथा दर्शनापत्तिरिति । न चैवं कश्चित्पश्यति तस्मादेक एवेति ।

अनेकदेशस्थत्वमपि दर्शयति—**आत्मनश्चेति** । देवदत्तस्यार्जवे स्थितमादित्यमात्मनस्तिरश्चीनं तस्य दक्षिणदेशस्थितो न पश्यति, किन्त्वात्मनोप्यार्जवे एव । न चोभयोरेकदेशः भिन्नदेशस्थत्वात् ।

तस्मात् स्वस्वार्जवे दर्शनादनेकदेशस्थत्वमादित्ये प्रतीयते न चासौ भिन्नः पूर्वोक्तयुक्तेरित्ययमपि हेतुरनैकान्तिक इति, नानेन शब्दानामनित्यत्वं साधयितुं शक्यमिति भावः ।

नन्वेवं सूर्यस्यानेकदेशस्थत्वमनेकेनोपलब्धम्, न त्वेकेन शब्दस्यानेकदेशस्थत्वन्तु एकेनैवोपलब्धमिति वैषम्यादेकस्यानेकदेशदर्शनमित्यस्यैव हेतुत्वेन विवक्षणान्न व्यभिचार इति चेत्, न । एकस्यापि पुंसस्तत्र तत्र गत्वा सवितृभिन्नदेशत्वदर्शनसम्भवस्योपपादितत्वेन व्यभिचारस्य दुर्वारत्वात् ।

न च युगपदिति विशेषणान्न व्यभिचारः । शब्दस्तु युगपदनेकदेशेषूपलभ्यते नैवमादित्य इति वाच्यम् । एकस्यापि देशान्तरं गतस्य तत्रापि तथैव सवितारं पश्यतोऽयं नानादेशस्थैस्तत्र तत्रोपलभ्यत इति युगपदेकस्यापि पुंसस्तज्ज्ञानसम्भवात् ।

यदि एकस्य एकेन्द्रियजन्यमनेकदेशदर्शनं हेतूक्रियते, तदापि जलादौ सौरेण तेजसा प्रतिस्रोतः प्रवर्तितेन चाक्षुषतेजसा सवितुरनेकदेशस्थत्वग्रहणेन व्यभिचारस्य तदवस्थत्वात् । न च पात्रगतानां प्रतिबिम्बानामेवानेकदेशदर्शनम्, न सवितुः प्रत्यभिज्ञया बिम्बप्रतिबिम्बयोरभेदाभ्युपगमात् भेदे प्रमाणाभावात् । चक्षुषश्चिपिटीकरणादिना एकस्यापि चन्द्रमसोऽनेकधा दर्शनाच्चेत्यन्यत्र विस्तरः ।

नन्वादित्यस्य दूरस्थत्वात्तदीयदेशानवधारणादनेकदेशगतत्वप्रत्ययो भ्रम इति युक्तं शब्दस्य तु सन्निकृष्टत्वान्न तद्देशावधारणे व्यामोह इति कथमनेकदेशस्थत्वप्रत्यय इत्याशङ्क्यात्रापि व्यामोहं दर्शयति—**एवं शब्देऽपीति** । यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात्, तदा तेन शब्दस्यैकदेशत्वं गृह्णीयादपि, न च तथा, किन्तु वस्तुतः स्वदेहस्था कर्णशष्कुली स्वात्मप्रदेशे

एव शब्दं गृह्णाति, तत्र स्वप्रदेशानवधारणादुच्चारयितृप्रदेशकल्पनया नाना देशगतत्वं भ्रान्त्या प्रतिपद्यते जनैरित्यभिप्रायेणाह—**यदि श्रोत्रमिति** । श्रोत्रस्य संयोगादिदेशागमने कारणमाह—**प्रत्यक्षा हि कर्णशष्कुलीति** ।

ननु न कर्णशष्कुलीमात्रं श्रोत्रं वधिरेऽपि तत्सत्त्वेन शब्दश्रवणापत्तेः, किन्तु पूर्वोक्तधर्माधर्मोपगृहीतनभोभाग एव । स च न प्रत्यक्ष इति चेत्, न । रसनादीनामधिष्ठानादन्यत्रवृत्तेरदर्शनाच्छ्रोत्रस्य बहिर्गमने तदधिष्ठानकर्णशष्कुल्या अपि तत्र गमनापत्तिरित्यभिप्रायात् । एकस्य हि नानेकदेशसम्बन्धः सम्भवति, तथा प्रतीतिस्तु भ्रान्तिरेव एकस्यादित्यस्यानेकदेशावगतिवद् इत्यवधेयम् ।

इदं पुनरिहावधेयं यत्रानेके वक्तारः, श्रोता च पुनरेक एव । तत्रैव श्रोत्रागमनप्रत्याख्यानेन शब्दस्यैकदेशत्वप्रत्ययः पारमार्थिकः । अनेकदेशत्वप्रत्ययश्चापारमार्थिक इति व्यवस्थापयितुं शक्यते । यत्र तु पुनरेक एव वक्ता, श्रोतारश्चानेके तत्रैकदेशप्रतीतिरेवापारमार्थिकी अनेकदेशप्रतीतिश्च पारमार्थिकीति युज्यते । बहुभिः स्वदेशे श्रूयमाणः शब्दो वस्तुतो नानादेशः स्यात् । श्रोत्रस्य वक्तृदेशागमनाङ्गीकारे तु वक्तुरेकत्वात्तद्देशस्थ एव शब्दः श्रूयेत । तथा च तत्रैकदेशस्थत्वप्रतीतिः प्रमा स्यात्, नान्यथेति श्रोत्रागमनप्रतिषेधादेकदेशप्रतीतिः भ्रान्तिरेव । न च विभोः शब्दस्य वक्तृदेशगतैः ध्वनिभिर्व्यज्यमानतया तन्निबन्धनप्रादेशिकत्वावगमो भ्रम एवेति चेत्, तथासति परत्रापि नानादेशस्थैर्ध्वनिभिरभिव्यज्यमानशब्दे तन्निबन्धननानादेशत्वप्रतीतिरपि भ्रम एवेति, श्रोत्रागमनप्रत्याख्यानं वृथैव ।

भवतु तावदनेकदेशप्रतीतिरिवैकदेशप्रतीतिरपि भ्रान्तिरेव, तथापि भाष्यकारेणैकदेशप्रतीतेर्भ्रमत्वं न प्रदर्शितम्, अप्रस्तुतत्वात् । सूत्रकारो हि बहुषु वक्तृषु सत्सु श्रोतुर्युगपदनेकदेशदर्शनं शब्दस्यानित्यत्वसाधनाय पूर्वपक्षत्वेनोपन्यस्तवान्, तदनुरोधाद् भाष्यकारेणापि नानादेशप्रतीतेरेव भ्रान्तित्वं समर्थितम् ।

न च तर्हि ध्वन्यागमनमेव प्रतिषेध्यम्, कृतं श्रोत्रागमननिरासेन, ध्वन्यागमनस्य भ्रान्तिं प्रति कारणत्वेऽपि तत्र प्रमाणत्वाभावात् । न च शब्दवैभवमेव प्रमाणं किं प्रमाणान्तरान्वेषणेन, तस्य परं प्रत्यसिद्धत्वात् । तस्मात्तत्र

प्रमाणत्वेन कर्णशष्कुली—प्रतिषेध एव प्रदर्शितः । न हीयमेकदेशस्था नानादेशगतान् शब्दान् ग्रहीतुं प्रभवतीति । न नानादेशत्वं पारमार्थिकम्, येन शब्दभेदः कल्पयितुं शक्येत । एवञ्च यत्र एक एव वक्ता, श्रोतारश्चानेके तत्र शब्दैकदेशगतत्वप्रतीतेर्भ्रमत्त्वेऽपि, अप्रस्तुतत्वान्न तदुपपादितं भाष्यकृता । तदनेकदेशप्रतीतेस्तु प्रस्तुतत्वात्तदुपपादितमिति निष्कर्षः । न च संयोगादिदेशं यथा श्रोत्रं न गच्छति तथा संयोगादयोऽपि श्रोत्रदेशं नायान्ति तद्वदेवाप्रत्यक्षत्वात् । तथा च कथं शब्दग्रहणमत आह—**वायवीया इति ।** तथा च संयोगादीनां श्रोत्रदेशागमनं न प्रत्यक्षविरुद्धं वायवीयत्वेनाप्रत्यक्षत्वादिति तेषामागमनं कल्प्यते, श्रोत्रस्य कर्णशष्कुलीरूपस्य बहिर्देशकल्पनं दृष्टविरुद्धत्वान्न युक्तमिति भावः ।

असम्भवश्च शब्दे नानादेश इत्याह—**आकाशदेशश्चेति** । ननु बहुश्रोतृस्थले घटपटादिवच्छब्दे भेदः पारमार्थिक एव, आकाशदेशत्वेऽपि तत्प्रदेशभेदान्नानादेशत्वं वक्तुं शक्यमित्यत आह—**अपि चेति** । सम्भवत्यपि देशभेदे प्रत्यक्षप्रत्यभिज्ञया शब्दैक्यसमर्थनान्न तद्विरुद्धनानादेशत्वानुमानमुत्पत्तुमर्हति न चैकस्यानेकदेशसम्बन्धोऽनुपपन्नः । कथमनुपपन्नः । दृश्यते हि एक एव देवदत्तः कदाचित्पाटलिपुत्रे, कदाचिन्मथुरायामिति । न चासौ भिद्यते इति कश्चिदनुन्मत्तः शक्यते कल्पयितुम्, प्रत्यभिज्ञाविरोधात् । एवं शब्दोऽप्येकः सन्ननेकत्रोपलभ्येत, न चासौ भिद्येतापि देशकालभेदेऽपि धर्म्यंशे तद्वदेव तत्त्वेन प्रत्यभिज्ञायमानत्वात् । न च तस्य पर्यायेणानेकदेशसम्बन्धः शब्दस्य तु युगपदेवानेकदेश—सम्बन्धः प्रतीयते इति वैषम्यम् । तस्याऽव्यापकत्वेन युगपदनेकदेशत्वासम्भवात् पर्य्यायेण भवति शब्दस्य तु व्यापकत्वाद् युगपदेव सर्वदेशसम्बन्धः प्रत्यभिज्ञाया उभयत्र साम्यात् पर्याययौगपद्यन्तु व्यापित्वाव्यापित्वप्रयुक्तमिति तद्वैषम्यमकिञ्चित्करं सर्वथासाम्ये दृष्टान्तंभावो व्याहन्येत, तस्य भेदघटितत्वात् । न च शब्दस्यव्यापित्वे प्रमाणाभावः, तदेकत्वावगाहिप्रत्यभिज्ञायाः प्रमाणत्वेनासकृदुक्तत्वात् । न च ज्वालादिवद्भ्रमत्वं, वाधकज्ञानाभावात्, प्रत्युतानित्यत्वकल्पनायामेव बाधकं दृश्यते युगपदनेकेषामेकशब्दश्रवणानुपपत्तिरिति दूरान्तिकस्थितयोः क्रमेण शब्दश्रवणाय सम्बद्धस्यैव शब्दस्य श्रोत्रेण ग्रहणं वक्तव्यम्, न चोच्चारित-

स्यैकस्य सकृदनेकश्रोत्रसम्बन्धः शक्यसम्भवः, कदम्बकोरकन्यायेन शब्दान्तरारम्भो दृष्टविरुद्धत्वात् पराकृत एवेति । प्रत्यभिज्ञाप्रामाण्याय शब्दनित्यत्वाङ्गीकार एव युक्तः अभिव्यञ्जकानुरोधात्तदभिव्यक्तिः पुनः क्वाचित्कीतिदिक् ॥ १५ ॥

सूत्रम्—वर्णान्तरमविकारः ॥ १६ ॥ (उ० ५)

**भाष्यम्—नच दध्यत्र इत्यत्र प्रकृतिविकारभावः (पू० ५) शब्दान्तरम् इकराद् यकारः । नहि, यकारं प्रयुञ्जाना इकारमुपाददते । यथा, कटं चिकीर्षन्तो वीरणानि । न च, सादृश्यमात्रं दृष्ट्वा विकृतिर्वा उच्यते । नहि, दधिपिटकं दृष्ट्वा कुन्दपिटकञ्च, प्रकृतिविकारभावोऽवगम्यते । तस्मादयमप्यदोषः ।**

पूर्वपक्षे दध्यत्रेत्यादाविकारादेर्यकारादिविकारादिबोधकव्याकरणस्मृतिः प्रमाणत्वेन प्रदर्शिता । तस्या अतत्परत्वमनेन सूत्रेण दर्शयति । तत्र व्याकरणसूत्रकारस्य भगवतः पाणिनेराचार्यस्य नायमभिप्राय इकारस्य स्थाने तद्विकारभूतोयकारो भवतु, किन्तु अजुपश्लिष्टस्येकारस्य प्रयोगप्रसङ्गे यकारघटितदध्येति प्रयोगः कर्तव्यः स्वतन्त्रेण दधिदध्यशब्दयोः सिद्धयोरुत्सर्गतः कोषपठितदधिशब्दस्यैव सर्वत प्रयोगप्रसक्तौ तदपवादभूतेकोयणचोत्यादिना संहितायामचि परतः स्वतः सिद्धस्य दध्यशब्दस्यैव साधुत्वं तस्यैव च प्रयोगः कर्तव्य इति प्रयोगनियम एव तात्पर्यम् । अत एव कथं पुनरिदमित्याशंक्य सिद्धे शब्दार्थसम्बन्धे इतिवार्तिकेन तत्र भवान् कात्यायनः नित्यपक्षे एव सूत्रकाराशयं स्फुटीचकार श्रीमता महाभाष्यकारेणापि तथैव व्याख्यातमिति नापरोक्षं व्याकृति विदुषाम् ।

न च दध्यशशब्दस्यापि स्वातन्त्र्ये दधिवद्दध्यशब्दस्याप्युपादानं स्यादपवादरूपेण तु दध्योपादानादवसीयते, दधिशब्देकारस्यैव विकारो यकार इति वाच्यम्, सर्वेषां स्थायिनामादेशानां स्वरूपतः पाठे गौरवापत्त्या साधुत्वव्यवस्थानुपपत्त्या च लाघवाय संहितायामचि यणन्तानां साधुत्वमन्यत्रेगन्तानामिति व्यवस्थासिद्धये एकत्रमिव दर्शितत्वात्, कार्यार्थी नियमतः कारणमुपादत्ते इति यकारं प्रयुञ्जानो नियमत इकारमुपाददीत, तत्तु न दृश्यत इत्याह—**नहि यकारमिति ।** वीरणं-वीततरापरपर्यायं गांडर इति प्रसिद्धं तृण

विशेषः। पूर्वपक्षोक्तं द्वितीयहेतुं निरस्यति—**सादृश्यमात्रमिति**। दधिपिटकमिति पिटको—मञ्जूषा। न च दधिकुन्दयोः न सर्वथा सादृश्यं इकारयकारयोरपि सर्वथा सादृश्याभावादसिद्धो हेतुः स्यादिति। यत्किञ्चिद्रूपेण सादृश्यविवक्षणेऽनैकान्तिकमेवेत्याह—**नहि दधिपिटकमिति**। बृद्धिश्च कर्तृभूम्नास्येति सूत्रोक्तासिद्धिप्रदर्शनार्थं सूत्रम्।

सूत्रम्—नादवृद्धिपरा ॥ १७ ॥ (उ० ६)

**भाष्यम्—यच्चैतत् बहुभिर्भेरीमाध्मनद्भिः शब्दमुच्चारयद्भिर्महान् शब्द उपलभ्यते, तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते (पू० ६) नैवम्। निरवयवो हि शब्दः, अवयवभेदानवगमात्, निरवयवत्वाच्च महत्वानुपपत्तिः—अतो न वर्द्धते शब्दः। मृदुरेकेन, बहुभिश्चोच्चार्य्यमाणे तान्येवाक्षराणि कर्णशष्कुलीमण्डलस्य सर्वां नेमिं व्याप्नुवद्भिः संयोगविभागैर्नैरन्तर्य्येण अनेकशो ग्रहणात् महान् अवयववान् इवोपलभ्यन्ते। संयोगविभागाः नैरन्तर्य्येण क्रियमाणाः शब्दमभिव्यञ्जन्तो नादशब्दवाच्याः। तेन नादस्यैषा वृद्धिः, न शब्दस्येति।**

भेरीं वाद्यविशेषमाध्मद्भिः-र्नादयद्भिः अनेन ध्वन्यात्मकः शब्दो निर्दिष्टः। उच्चारयद्भिरित्यनेन वर्णात्मकः, शब्दस्य निरवयवयत्वेनावयवान्तरप्रयुक्तमहत्वाभाव इत्याह—**निरवयवोहीति**। न च महत्वं हेतुः, किन्तु महत्वेन ज्ञायमानत्वं, तच्च वस्तुतो महत्वशून्येपीति, नासिद्धो हेतुरिति वाच्यं, शब्दत्वेऽनैकान्तिकत्वात्।

किञ्च महत्यामल्पायाञ्च खातायां व्योम्नि महत्वाल्पत्वधीर्जायते, न च तत्र कृतकत्वमिति हेतोरनैकान्तिकत्वं स्पष्टमेव।

व्यञ्जकगताल्पत्वमहत्वाभ्यामेव शब्दे तद्बुद्धिरित्येतदुपपादयति—**मृदुरेकेनेति**।

नादशब्दवाच्या इति। ननु नाद शब्देन वायवीयसंयोगविभागानां, तद्विशिष्टवायोरेव वा ग्रहणप्रत्यक्षत्वं न स्याद् वायोरप्रत्यक्षत्वाद् वर्णात्मक शब्दस्यैत्र श्रोत्रत्वस्वीकारेणावर्णात्मकशङ्खादिध्वनीनामश्रौत्रत्वापत्तेरिति चेत्?

अत्रकेचित् वायोरप्रत्यक्षत्वेऽपि तद्‌गुणभूतानां ध्वनीनां प्रत्यक्षत्वोपगमात् । न च वायोरेव शब्दाभिव्यञ्जकत्वमिति सिद्धान्तो भज्येत ? ध्वनीनामेव व्यञ्जकत्वेन तेषां वायुत्वाभावादिति वाच्यं, वायोरभिव्यञ्जकत्वानङ्गीकारात् वायुगुणभूता ध्वनय एव मारुतप्रेरिताः श्रोत्रं संस्कारयन्तः शब्दस्य व्यञ्जका इत्येव सिद्धान्तः । न च वर्णोच्चारणकाले तेषामश्रवणात् कथमभिव्यञ्जकत्वं ? शब्दोच्चारणकालेऽपि तेषां श्रवणस्यावर्जनीयत्वात् अत एव दूरादुच्चारिते वर्णानामश्रवणेऽपिध्वनीनां श्रवणं ग्रामीणापणादौ दूराज्जनतारवमात्रं श्रूयते, न वर्णविशेषः । द्राविणभाषानभिज्ञस्य तद् भाषोच्चारणे ध्वनिमात्रमेवानुभूयते, न वर्णविशेष इति सार्वजनीनोऽनुभवः । एवञ्च ध्वनयः कण्ठादिस्थानसंयोगविशेषलाभे वर्णानभिव्यञ्जयन्तः स्वयमप्युपलभ्यन्ते ।

अन्ये तु ध्वन्याख्यशब्दाभावेऽपि वायूनामेव नानात्वात् शङ्खादिध्वनिश्रवणोपपादकत्वमातिष्ठन्ते । नच शङ्खादिध्वनौ शब्दत्त्वाभावे कथं वायुभिः तदभिव्यक्तिः, निराश्रयजातेरभिव्यक्त्यसम्भवात् इति वाच्यम्, शब्दत्वस्य प्रतिवर्णं सद्भावस्वीकारेण निराश्रयत्वाभावात् न च तथापि शङ्खादिभिः कस्मिन् वर्णे शब्दत्वं व्यज्यते सर्ववर्णानां नित्यत्त्वेन, विभुत्वेन चैतादृशपर्यनुयोगाभावादिति दिक् ।

अथवास्तु ध्वनित्वं वर्णत्त्ववच्छब्दत्वव्याप्यो जातिविशेषः, तद्भेदोऽपि गकारादिभेदवत् पारमार्थिक एव सर्वथा वर्णानित्यत्वपक्षे यथा शब्दभेदः मनुष्यादौ वर्णोपलम्भः शङ्खादौ नादमात्रोपलम्भः, तथा ध्वनीनां शक्तिविशेषः कल्प्यते केचिद्ध्वनयः वर्णान् व्दञ्जयन्ति, केचित् नेति ध्वनयः वायवीया वा शब्दजातिविशेषो वा नात्र विशिष्याभिनिवेशः । परन्तु नादस्य शब्दत्वान्तरजातिविशेषवत्वाभ्युपगमे शब्दवदमूर्तस्य तस्य वृद्धचसम्भवान्नादवृद्धीतिसूत्रे नादशब्देन तद्‌गुणकावयवा लक्ष्यन्ते इत्येतद् व्याकतु संयोगविभागाश्च नादशब्दवाच्या इति भाष्यम् ।

अथ सिद्धान्तसूत्रम्—

सूत्रम्—नित्यस्तु स्याद्दर्शनस्य परार्थत्त्वात् ( १८ सि० )

**भाष्यम्—नित्यः शब्दो भवितुमर्हति । कुतः दर्शनस्य परार्थत्वात्, दर्शनमुच्चारणं, तत्परार्थं, अर्थं प्रत्याययितुम्, उच्चरितमात्रे हि विनष्टे शब्दे न चान्योऽन्यान् अर्थं प्रत्याययितुं शक्नुयात् । अतो न परार्थमुच्चार्य्येत । अथ न विनष्टः, ततो बहुशः उपलब्धत्वादर्थागम इति युक्तम् । अर्थवत्सादृश्यादर्थागम इति चेत् ? न, कश्चिदर्थवान् सर्वेषां नवत्वात् । कस्यचित् पूर्वस्य कृत्रिमः सम्बन्धो भविष्यति इति चेत् । तदुक्तं सदृश इति चावगते व्यामोहात् प्रत्ययो व्यावर्तेत । मालाशब्दात् मालाप्रत्यय इव । यथा गावीशब्दात् सास्नादिमति प्रत्ययस्यानिवृत्तिः, तद्भविष्यति इति चेत् । नहि, गोशब्दं तत्रोच्चारयितुमिच्छुः । नेहान्यशब्दोच्चिचारयिषा । न चैकेनोच्चारणयत्नेन संव्यवहारः स्वार्थसम्बन्धश्च शक्यते कर्तुम् । तस्माद्दर्शनस्य परार्थत्वान्नित्यः शब्दः ।**

अस्यार्थः—शब्दो नित्यः दर्शनस्य परार्थत्वादिति । ननु प्रासादः शुक्लकाकस्य कृष्णत्वादितिवदत्रापि हेतोः पक्षधर्मत्वाभावः । दर्शनस्य परार्थत्वे किमायातं शब्दस्य, येन नित्यत्वं साध्यते । यदि दर्शनस्य परार्थत्वादित्यनेन परार्थदर्शनत्वादिति कथञ्चिद्विवक्ष्यते, तदापि दीपज्वालाघटादिषु व्यभिचाराः, अनित्यत्वेऽपि तेषां परार्थत्वात् । एवं दर्शनपदेनोच्चारणविवक्षणे उच्चारणस्यपरार्थत्वादित्यभिप्रेयते यदि तदा उच्चारणस्यपक्षमात्रवृत्तितयाऽसाधारणत्त्वापत्तिरिति चेत् ? एतत्सूत्रस्यानुमानप्रदर्शनपरत्वाभावात्, अनुमानप्रयोगे ईदृग्दूषणं स्यात् । तत्विह न विवक्ष्यते, किन्तु अर्थापत्तिप्रदर्शनमनेन सूत्रेण क्रियते । अर्थापत्तौ च दूषणद्वयमेव, नाधिकमन्यथैवोपपत्तिः, अन्यथाप्युपपत्तिः । एवं चात्रापि शब्दस्य नित्यत्वे अनित्यत्वे एव वा यद्यर्थप्रत्ययः स्यात्तदा अर्थापत्तौ दूषणं स्यात् । तत्त्विह नास्ति, नित्यत्वे एव शाब्दबोधोपपत्ते र्वक्ष्यमाणत्वात् । क्षणिकत्वे सम्बन्धग्रहणानुपपत्या अर्थबौधकत्त्वानुपपत्तिः स्यात् । नहि अदृष्टार्थसम्बन्धः शब्दोऽर्थं प्रत्याययति, तथासति अगृहीतसम्बन्धत्वाविशेषात् सर्वशब्दात् सर्वार्थबोधापत्तेः न च यावता कालेन सम्बन्धग्रहो निष्पद्यते, तावत्कालमस्तु कालान्तरे तत्सत्तायां प्रमाणप्रयोजनाभावान्न नित्यत्त्वसिद्धिः । सम्बन्धज्ञानोपपत्तये कालान्तरेऽपि तत्स्थितेरावश्यकत्वात् । न च शब्दान्तरे सम्बन्ध-

ग्रहणात् शब्दान्तरेणाप्यर्थप्रत्ययोभ्युपेय इति, न तदर्थं स्थापित्वापेक्षेति बाच्यम्, तथा सति गोशब्दे सम्बधग्रहणादश्वशब्देनाप्यर्थबोधापत्तेः। न च स्वभावात्कश्चिदेव शब्द एवमर्थबोधको न सर्वः। नहि एकस्य यः स्वभावः परस्यापि स एवेति वक्तुं शक्यम्, विचित्रस्वभावत्वात्। भावानामिति।

मैवं क एवं स्वभावको नेति निश्चेतुमशक्यत्वात्। यतोऽर्थप्रत्ययो दृश्यते, स एव तत्स्वभाव इत्येवं रुपेण निश्चयः शक्य इत्यपि न। श्रोतॄणामेवं स्वभावनिर्णयसम्भवेऽपि वक्तॄणां तदसम्भवात्। अर्थप्रत्ययात्पूर्वं शब्दे तत्सामर्थ्यानवधारणे तदर्थविवक्षया तच्छब्दप्रयोगानुपपत्तिः।

अथाऽयं शब्दोऽमुमर्थं बोधयिष्यतीति जानाति वक्ता प्रयोगात्पूर्वमपि, तर्हि शब्दे नादृशसामर्थ्यावधारणं प्रागेवेति, तदनित्यत्त्वानुपपत्तिः। न च तेजोवदग्रहीतसम्बन्धः शब्दोऽर्थप्रत्यायकः प्रथमश्रवणेप्यर्थप्रत्त्यायापत्तेः। तस्माद् गृहीतसम्बन्धः एव प्रत्यायको मन्तव्यः। उच्चरितविनष्टे सम्बन्धग्रहणानुपपत्त्या न प्रत्याकत्त्वमित्याह—**उच्चरितमात्रेइति**। नित्यत्त्वे तु सम्बन्धग्रह सुकर इत्याह—**तथेति**। अर्थवत्सादृश्यात् अर्थावगम इति, गृहीतस्यसम्वन्धेनार्थवता शब्दान्तरेण सादृश्याद् गृहीतसम्बन्धत्वेन शब्दान्तरं भ्रान्त्यावगतमर्थं प्रत्याययेदित्यर्थः। क्षणिकत्वादेः सर्वेषामभिनवत्त्वाद् गृहीतसम्बन्धस्य स्थिरय कस्यचिच्छशब्दस्याभावात् कस्य सादृश्येन कस्य वाचकत्वं वक्तव्यं? कस्यचिद् गृहीतसम्बन्धस्य सत्त्वे स्यान्नान्यथेत्याह—**न कश्चिदिति**। अदृष्टसङ्गतितत्त्वेन सर्वेषां तुल्यत्वात्। न च संकेतग्रहकाले श्रुतानां गोशब्दानामन्तिमः शब्दोऽर्थवान् व्युत्पत्तिकाले तत्सादृश्यादन्ये शब्दा अर्थं प्रत्याययन्तीति चेत्?

न य एवाश्रुततज्जातीयशब्दान्तरस्यानर्थकः, स एव श्रुतशब्दान्तरस्यार्थवानित्येकस्मिन् विरुद्धद्वयापत्तेः। न च संकेतग्रहकाले गवादिशब्दो मुख्योऽर्थवान्, प्रतीतिकाले तु तत्सादृश्याद् गौण इत्यपि न। एकस्यैव शब्दस्य श्रवणाश्रवणवशेन मुख्यत्वगौणत्त्वापत्ते रिति कस्यचिदेकस्य जगदादिवर्त्तिनः कृत्रिभो भविष्यति सम्बन्ध इत्याक्षेपस्योत्तरं भाष्यं तदुक्तमिति सम्बन्धाकरणे या युक्तिः पूर्वमुक्ता, सैव तच्छब्देन परामृश्यते। सम्बन्धकरणं दुःशकं क्षणिकत्वपक्षे त्वशक्यमेव, शब्दस्तावदनुच्चार्य सम्बन्धेन योजयितुमशक्यः

उच्चारणापवर्गिणि तत्र सम्बन्धकरणे न किञ्चित् प्रयोजनमेवं चाकृतसम्बन्धः एव पूर्वो विनष्ट इति नार्थवान् उक्तस्त्वकृतसम्बन्धः कथमर्थवत्वेन विज्ञायेत । न चानुच्चरिते उच्चरितनष्टे वा शक्यत्वाद् भाभूत् सम्बन्धकरणमुच्चार्यमाणस्यैव सम्बन्धकरणमस्तु बाधकाभावादिति वाच्यम्, सर्वशब्दार्थसम्बन्धाभावे सम्बन्धकरणासम्भवात् जगदादौ प्रसिद्धैः कृतसम्बन्धैः शब्दैः सादृश्यादिदानीन्तनशब्देभ्योऽर्थप्रतीतिः इदानीन्तनानां पुंसां तादृशशब्दज्ञानाभावात्तत् सादृश्येदानीन्तने सुतरां ज्ञानाभावाद्देशकालपुरुषविप्रकर्षात् । सम्बन्धकरणवदभिधानमपि नोपपद्यते । अर्थवत्वेन ज्ञातस्य पूर्वशब्दस्य विनष्टत्वात्तदभिधातुमशक्नुवन् वक्ता कतरं शब्दं ब्रूयात् किमर्थवन्तम्, उत तत्सदृशम् ? नाद्यः । अतीतत्त्वेन तद्भाषितुमसामर्थ्यात्, नूतनस्यार्थवत्वेनाग्रहणात् । नाप्यन्त्यः अर्थवतः शब्दस्य ग्रहणाभावात् तत्सादृश्यस्य दुर्ज्ञेयत्त्वात् । वक्तुरपि श्रोतृत्वबेलायामेष एव प्रसङ्गः । तथा च सर्वेषां वक्तॄणामर्थवान् शब्दो न कश्चिदिति, न सादृश्यादर्थप्रतीतिः ।

किंच सादृश्यं व्यक्तितो भिन्नमभिन्नं वा । एवमेकमनेकं, नित्यमनित्यं वा भिन्नत्वनित्यत्वे जातिरूपमेव स्यात् । तच्च गत्वादिजातिनिराकरणादेव निराकृतम्, अभेदानित्यत्वे शब्दव्यक्तिवदेव क्षणिकत्वमिति पूर्वोक्तदोषोऽत्रापि समः भूयोऽवयवसामान्ययोगस्यैव सादृश्यत्वेन निरवयवेषु वर्णेषु न तत्सम्भवः । प्रतिपदं वर्णानां भिन्नतया तत्रापि सादृश्यं दुर्घरमेवेति दिक् ।

सदृश इति यथा गवयेऽयं गौरिति व्यामोहात् प्रत्ययो भवति, पश्चादयं गोसदृश इति ज्ञाने जाते गोबुद्धिस्ततो निवर्त्तते, गोसदृशस्य गोत्वाभावादेवमर्थवत्सादृश्यज्ञाने पूर्वार्थवच्छब्दबुद्धिः शब्दान्तरे व्यावर्तेत, नायमर्थवान् । किन्तु तत्सदृश इति भावः । अत्र दृष्टान्तमाह—**मालाशब्दादिति** । मालापदस्य प्रतिप्रयोगं भिन्नत्वात् पदान्तरे तद्बुद्धिर्व्यावर्तते ।

ननु तत्सदृशेऽपितद्बुद्धिरनुवर्तते यथा गोशब्दसदृशाद् गावीशब्दादित्याशङ्कते—**यथेति** । उत्तरमाह—**गोशब्दमिति** । नास्मन्मते क्षणिको गोशब्दः, किन्तु स्थायी । ततश्चार्थवन्तं गोशब्दमनुसृत्यगाव्यादिषु गौशब्दबुद्धिर्जायते गोशब्दाभिधित्सया तदभिधानसामर्ध्यवैकल्याद् गावीशब्दोऽनेनोच्चारित इति मूलभूतगोशब्दज्ञानादेव सतो बोधो, न तु गोशब्दसदृशो

गावीशब्द इति ज्ञानादन्यथा यत् किञ्चित् सादृश्यस्य शालामालाशब्दयोरपि परस्परं सत्त्वात्ताभ्यां समानबोधापत्तिः स्यात्, सर्वात्मना सादृश्यन्तु गोगाव्योरपि नास्त्येवेति, गावीशब्दे गोशब्दप्रत्ययानुवृत्तिर्युक्तैव ।

क्षणिकत्वे तु अर्थवच्छब्दोच्चिचारयिषया तत् सदृशस्योच्चारणं स्यान्नतु तस्यातीतत्वादिति तत्प्रत्ययानुवृत्तिर्न स्यादिति भावः । न च वर्णानां नित्यत्वेऽपि आनुपूर्वीविशेषविशिष्टस्य पदस्य वाचकत्वे नाभीष्टस्यान्नित्यत्वं दुर्वारं नित्यविभूनां वर्णानां स्वतो देशकालतो वा क्रमासम्भवादभिव्यञ्जकध्वनिक्रमारोपादेव क्रमवत्वं वक्तव्यं, ध्वनिक्रमस्य विवक्षाधीनत्वेन पुरुषानुप्रवेशाच्छब्दस्य स्वातन्त्र्यभावात्प्रमाणत्वमपि न स्यादित्यणूनां नित्यत्वेऽपि घटादेरनित्यत्ववद् वर्णानां नित्यत्वेऽपि वाचकस्यानित्यत्वमेवेति वर्णनित्यत्वप्रतिपादनं मुधैव । येषां मते वर्णातिरिक्तं पदं, यथा वैयाकरणानां पदे वर्णा न विद्यन्त इति सिद्धान्तात् । तेषां शब्दनित्यत्वकल्पना अर्थवती येषां त्वारोपितक्रमविशिष्टस्य तादृशक्रमस्यैव वा वाचकत्वं तेषां वर्णनित्यत्वकल्पना नार्थवती वाचकानामनित्यत्वादिति चेत् ? अत्रोच्यते न पदनिष्ठक्रमस्य वाचकत्वमस्मन्मते । तथाहि अन्यत्रैतदर्थप्रकाशकत्वायोगाद् द्वयमेवावशिष्यते—क्रमोपेताः वर्णाः, वर्णनिष्ठक्रमश्चेति । तत्र क्रमोपेतावर्णाएव वाचकाः, न तु क्रमः, क्रमः क्रमवतामङ्गमिति न्यायात् । क्रमस्य वर्णधर्मत्वेन धर्मधर्मिणोश्चाभेदाभ्युपगमेन वस्त्वन्तरत्वाभावात्, ततश्च प्रतीयमाना वर्णा वाचकाः । नन्वेवमपि क्रमस्य पुरुषविवक्षाधीनत्वेन पोरुषेयत्वाद्विशिष्टवाचकत्वेऽप्रामाण्यं पूर्वपूर्वप्रयोगसिद्धक्रमस्यैवोत्तरोत्तरपुरुषेणाश्रयणात् सम्बन्धवदनादित्वेन पौरुषेयत्वाभावात् । न च स्वतन्त्रेण क्रम विवक्षाभावेऽपि वस्तुतः पुरुषकृतत्वेनानित्यत्वमेवेति वाच्यम्, कौटस्थ्यनित्यत्वानभ्युपगमात् । व्यवहारानादितया नित्यत्वोपगमात् । गकारौकारविसर्जनीयानामेव क्रमेणगवादिशब्दव्यवहारोऽनादिरिति तादृशक्रमविशिष्टगोशब्दस्य नित्यत्वं, न तु वर्णवत् कूटस्थनित्यत्वम् ।

ननु तथापि पुरुषकार्यत्वं न परिहृतमिति, पौरुषेयत्वेनाप्रामाण्यं स्यादेव, न सर्वथा पुरुषव्यापारः परिजिहीर्षितः, असम्भवात्; किन्तु व्यापारे पुरुषस्वातन्त्र्यं सति पुरुषस्य स्वातन्त्र्ये, तदधीनं प्रामाण्यं स्यान्न पारतन्त्र्ये,

नहि शक्यादिवाक्यमुच्चारयतामस्माकं गुणदोषाभ्यान्तत्प्रमाणमप्रमाणं वा भवति । तत् कस्य हेतोस्तदुच्चारणेऽस्माकं स्वातन्त्र्याभावात् । न च पदवद्वर्णानामपि नित्यत्वमस्तु किं कूटस्थनित्यत्वेन एवं सति घटवत् परमाणूनामप्यनित्यत्वमेवास्तु किं नित्यकल्पनेनेत्यपि स्यात् । न चोपादानाभावे द्व्यणुकारम्भानुपपत्या घटाद्यनुत्पत्तिरेव स्यात्, तर्हि वर्णाभावे किमुपादाय शब्दरचनापि स्यादित्यत्रापि दीयतां दृष्टिः, न च वर्णावयवेन, तस्य पूर्वमेव निराशात् । न च कण्ठादिसंयोगविभागाभ्यां सम्भवत्यारम्भस्तस्मात् पूर्वोक्तमेव ब्रवीमि, पूर्वश्रुतमेव शृणोमीत्यादि प्रत्यभिज्ञया नित्यत्वमेव तत्र प्रतीयते, नत्वपूर्वरचनेति, तदर्थं शब्दनित्यत्वस्वीकार एवोचितः । न चैवं पदक्रमयोरपि कूटस्थनित्यत्वप्रसङ्गः । तत्रापि तथैव प्रत्यभिज्ञानादिति वाच्यम्, तयोर्वर्णाभिन्नतया तन्नित्यत्वनिबन्धनैव तत्र तादृशप्रत्यभिज्ञेति स्वीकारादिति दिक् ।

सूत्रम्—सर्वत्र यौगपद्यात् ॥ १९ ॥ ( हे० १ ) इति सूत्रं **न चाकृत्याशब्दस्येति ।**

**भाष्यम्—गोशब्दे उच्चरिते सर्वगवीषु युगपत् प्रत्ययो भवति । अतः आकृतिवचनोऽयम् । नचाकृत्या शब्दस्य सम्बन्धः शक्यते कर्तुं, निर्दिश्य हि आकृतिं कर्ता सम्बध्नीयात् । गोपिण्डे च बहूनामाकृतीनां सद्भावाच्छब्दमन्तरेण गोशब्दवाच्यां विभक्तामाकृतिं केन प्रकारेणोपदेक्ष्यति ? नित्ये तु सति गोशब्दे बहुकृत्वः उच्चारितः, श्रुतपूर्वश्चान्यासु गोव्यक्तिषु अन्वयव्यतिरेकाभ्यामाकृतिवचनमगवमयिष्यति । तस्मादपि नित्यः ।**

ननु शब्दनित्यत्वाधिकरणे सम्बन्धनित्यत्वप्रतिपादनमयुक्तमप्रवृतत्वादिति चेत् ।

अत्र केचित् प्रकरणं द्विविधं महाप्रकरणम् अवान्तरप्रकरणं चेति । आद्यं सम्बन्धनित्यत्वप्रकरणं, द्वितीयं शब्दनित्यत्वप्रकरणं, तत्र महाप्रकरणेन सम्बन्धनित्यतायां प्रकृतायां सम्बन्धनित्यता शब्दनित्यतां विना न सम्भवतीति तदङ्गभूतशब्दनित्यत्वचिन्तनमवान्तरप्रकरणेन कृतं । तस्मिन् संप्राप्ते पुनः

प्रकृतायामेव सम्बन्धनित्यतायां युक्त्यन्तरमुपपाद्यते यौगपद्यादिति सूत्रेणेत्याहुः ।

तदयुक्तम्, शब्दनित्यत्वचिन्ताया इदानीं समाप्त्यभावात् । अन्ये तु शब्दनित्यत्वमेव समम्बन्धनित्यत्वद्वारा साध्यते, विनश्वरेषु शब्देषु सम्बन्धनित्यत्वासम्भवात् न च विनश्वरघटादिव्यक्तिषु घटत्वादिजातिनित्यसम्बन्धवत् प्रकृतेऽपि नित्यसम्बन्धः किन्न स्यात् । घटत्वादिजातेर्बहुव्यक्त्याश्रयत्वेन सर्वव्यक्तीनामुच्छेदाभावादनुच्छेदरूपेण सतीषु व्यक्तिषु तन्नित्यसम्बन्धो घटते, गवादिशब्दानान्त्वनुच्छेदरूपेण वर्तमानत्वाभावान्न स घटते इति तदर्थं शब्दनित्यत्वमावश्यकं । भेदाप्रतीत्या एकव्यक्तितयापि नित्यत्वमेवेति । न च सम्बन्धनित्यत्वेन शब्दनित्यत्वप्रतिपादनयुक्तं तत्रैव प्रमाणाभावात् । मैवम् । अज्ञातपदपदार्थसम्बन्धस्य पुंसो व्युत्पादनाय अङ्गुल्या निर्दिश्य यत्र यत्र पुरः स्थितव्यक्तौ सम्बन्धः क्रियते, तत्र व्यक्तिविशेषनिष्ठतयैव ग्रहणेन सम्बन्धस्य सर्वव्यक्तिसाधारणत्वेनाग्रहणात् सर्वगवीबोधनापत्तेः । न च गोत्वादिजातावेव सम्बन्धकरणान्नानुपपत्तिः, पार्थिवत्वद्रव्यत्वसत्वादीनामनेकधर्माणां तत्र सांकर्यात्, सकृत् प्रयोगे निर्धारणासम्भवात् ।

तथा चैवं प्रयोगः अकृत्रिमः सम्बन्धो न विनाशी, नित्येन नित्यसम्बन्धादाकाशपरमाणुवदिति । वस्तुतस्तु सम्बन्धनित्यत्वं नानेन बोध्यते, अप्रस्तुतत्वात् । शब्दनित्यत्वमेवानेन सूत्रेण बोध्यते । भाष्यमपि तदभिप्रायकमेव सङ्गच्छते संमुग्धानेकसामान्यविषये सकृच्छ्रुतस्य गवादिशब्दस्य गोत्वादिविशेषाभिधायकत्वं कथयितुं ग्रहीतुं वा न शक्यते । बहुकृत्वः श्रवणे तु प्राणिशुक्लागमनसास्नालाङ्गूलादिभ्यो विविच्यान्वयव्यतिरेकाभ्यां निष्कृष्य गोत्वमात्रे गवादिपदसम्बन्धो ग्रहीतुं कथयितुं वा शक्यते चिरेण ।

नन्वेतावता स्थायित्वमात्रं लभ्यते, नित्यत्वं तु कुतः ? पश्चान्नाशकाभावान्नित्यत्वसिद्धेरप्रत्यूहत्वात् । एतच्चानपेक्षत्वसूत्रे साधयिष्यते । भाष्ये कर्तुमित्यनेन कथयितुं ग्रहीतुं वेत्युपलभ्यते । सकृच्छ्रुतस्य गवादिशब्दस्य बहुशः प्रयोगदर्शनं विना गोत्वादिमात्रवाचकत्वं ग्रहीतुं कथयितुं वा न शक्यते । तदाह न **चाकृत्येति** । नित्यत्वपक्षे तु तस्य बहुकृत्वः श्रवणादन्वयव्यतिरेकाभ्यां गोत्वादिमात्रवाचकत्वं शक्यनिर्णयम् । तदाह—**नित्यत्वे त्विति** ।

सूत्रम्—संख्याभावात् ॥ २० ॥ ( हे० २ )

भाष्यम्—अष्टकृत्वो गोशब्द उच्चरितः इति वदन्ति, नाष्टौ गोशब्दाः इति । किमतः ? यद्येवम् । अनेन वचनेनावगम्यते प्रत्यभिजानन्तीति । वयं तावत् प्रत्यभिजानीमो न नः करणदौर्बल्यम्, एवमन्येऽपि प्रत्यभिजानन्ति 'स एव अयमिति' । प्रत्यभिजानाना वयमिवान्येऽपि नान्य इति वक्तुमर्हन्ति । अथ मतं, अन्यत्वे सति सादृश्येन व्यामूढाः 'सः' इति वक्ष्यन्ति । तन्न, नहि ते 'सदृशः' इति प्रतियन्ति, किन्तर्हि स एवायमिति । विदिते च स्फुटेऽन्यत्वे, 'व्यामोहः' इति गम्यते । न च, अयमन्यः इति प्रत्यक्षम्, अन्यद्वा प्रमाणमस्ति ।

भाष्यम्—स्यादेतत् बुद्धिकर्मणी अपि ते प्रत्यभिज्ञायेते, ते अपि नित्ये प्राप्नुतः । नैष दोषः । नहि ते प्रत्यक्षे, अथ प्रत्यक्षे नित्ये एव । ह्यस्तनस्य शब्दस्य विनाशात् 'अन्योऽद्यतन' इति चेत् । नैष विनष्टः यतः एनं पुनरुपलभामहे । नहि प्रत्यक्षदृष्टं मुहूर्त्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति । परिकल्पयन्तो द्वितीयसन्दर्शने मातरि, जायायां, पितरि वा नाश्वस्युः । नहि अनुपलम्भमात्रेण 'नास्ति' इति अवगम्य, 'नष्टः' इत्येव कल्पयन्ति । अप्रमाणतायां विदितायां नास्ति इत्यवगच्छामः । नहि, प्रमाणे प्रत्यक्षे सति, अप्रमाणता स्यात् । अस्तीति पुनः अव्यामोहेनावगम्यमाने न क्वचिदप्यभावः । नचासिद्धेऽभावे व्यामोहः, न च सिद्धोऽभावः तस्मादसति व्यामोहे, नाभावः । तदेतदानुपूर्व्या सिद्धम् । तस्मात् पुरस्तादनुच्चरितम् अनुपलभमाना अपि न 'विनष्टः' इत्यवगन्तुमर्हन्ति । यथा, गृहान्निर्गताः सर्वगृहजन मपश्यन्तः पुनः प्रविश्य उपलभमाना अपि न प्राक् प्रवेशात् 'विनष्टः' इत्यवगच्छन्ति तद्वत् एनमपि न अन्यः इति वक्तुमर्हन्ति । येऽपि सर्वेषां भावानां प्रतिक्षणं विनाशमभ्युपगच्छन्ति, तेऽपि न शक्नुवन्ति शब्दस्य बदितुम्, अन्तेहि क्षयदर्शनात् ते मन्यन्ते, न च शब्दस्यान्तः, न च क्षयो लक्ष्यते । सः इति प्रत्यक्षः प्रत्ययः, सदृशः इत्यानुमानिकः न च, प्रत्यक्षविरुद्धमनुमानमुदेति, स्वकार्यं वा साधयति । तस्मान्नित्यः ।

इति सूत्रम् । क्रियावतामभेदे क्रियाभ्यावृत्तिगणने कृत्वसुच् प्रत्ययो विधीयते । अष्टकृत्वः गोशब्दउच्चरित इति प्रयोगे कृत्वसुच्प्रत्ययदर्शनात् पूर्वोच्चरितगोशब्दे एवोच्चारणक्रियावृत्तिरिति प्रतीयते, क्षणिकत्वे तत्र पुनः पुनः क्रियाभ्यावृत्तिर्न स्यादिति स्थिरत्वमेव गम्यते इत्याह—**अष्टकृत्व इति** । तत्रैव पुनः पुनरुच्चारणावृत्तौ अष्टकृत्वइत्युपपद्यते । शब्दान्तवत्वे तु अष्टौ गोशब्दा इति स्यादित्याह—**नाष्टाविति** । अद्य अष्टकृत्वो ब्रह्मणा भुक्तवन्त इत्यादौ द्रव्यभेदेऽपि कृत्वसुचो दर्शनादनैकान्तिकत्वेन न द्रव्याभेद-साधनक्षमत्वमित्यभिप्रायेण शङ्कते—**कियत इति** । न द्रव्याभेदसाधनाय कृत्वसुच्प्रत्ययस्य हेतुतयोपादानम्, येनानैकान्तिकदोषोद्भावनेनासाधकत्व-मुच्येत, प्रायः प्रत्यभिज्ञायां कृत्वसुच्प्रत्ययसाहचर्यदर्शनात्तदुपलक्षितप्रत्य-भिज्ञाया एव प्रमाणत्वेनात्र विवक्षणादित्यभिप्रायेणोत्तरमाह—**प्रत्यभि-जानन्तीति** ।

ननु स्वसम्वेद्यत्वात् प्रत्यभिज्ञायाः साक्षादेव प्रमाणत्वेन प्रदर्शन-सम्भवात् किं कृत्वसुजुपलक्षणेन ? सत्यम्, आत्मप्रत्यभिज्ञा स्वसंवेद्या, तस्यास्तु हेतुदोषनिराकरणद्वारा सर्वानुभवसिद्धप्रामाण्यसिद्धये तदुपादानादित्याह—**वयमिति** । ज्वालाकार्षापणादौ सदृशेऽपि तत्प्रत्यभिज्ञादर्शनादनाश्वासस्त-त्रेत्याशङ्कते—**अथेति** । इन्द्रियदोषाधीना हि भ्रान्तिः, सर्वस्य व्यापकतया निराकर्तुमर्हा विषयदोषनिबन्धना तु सर्वेषां स्यादेवेति, न प्रत्यभिज्ञाप्रामाण्य-मित्याशङ्क्य, निराकुरुते—**तन्नेति** । न हि ते सदृश इति प्रतिपद्यन्ते, किन्तर्हि स इति परिहारभाष्यम् । सदृश एवेति यत्र निश्चयस्तत्र स इति प्रत्य-भिज्ञानस्य भ्रमत्वम् । यथा दीपज्वालादौ सदृश इति बाधकप्रत्ययदर्शनात् । यत्र पुनः स एवेति नित्यं प्रत्यभिज्ञानं जायते, तत्र न भ्रमत्वमन्यत्वग्राहक-प्रमाणाभावादित्याह—**न हि ते सदृश इति** । नन्वेवमपि गृहीतग्राहितया प्रत्यभिज्ञानस्याप्रामाण्यं कलास्त्वित्वादेरधिकग्रहणेनागृहीतग्राहित्वात् । तथा च ज्वालादौ प्रमाणान्यत्वे स्फुटे प्रत्यभिज्ञानमप्रमाणं शब्दे त्वन्यत्वग्राहक-प्रमाणाभावात्तत्प्रमाणमेवेत्याह—**विदिते इति** । पुनः प्रत्यभिज्ञानस्या-प्रामाण्यं शङ्कते बुद्धिकर्मणी इति ।

नन्विदमयुक्तं बुद्धिकर्मणोर्नित्यत्वसिद्धेः शब्दनित्यत्वसिद्धेरप्रत्यूहत्वात् तदनित्यत्वसाधकत्वाभावाच्च । एवञ्च प्रकृतसाधनबाधनानुपयुक्तसिद्धान्तान्त-

रदूषणं निग्रहस्थानमेवापद्यते । अत एवेदृशाभिधानस्यायुक्तत्वं प्रकृतं दूषयितुमशक्नुवतस्तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते इत्युक्त्या भाष्यकृता स्वयमुक्तमिति चेत्, न, तत्रानैकान्तिकत्वप्रदर्शनेन प्रत्यभिज्ञायाः शब्दनित्यत्वसाधनत्वं नेत्यत्रैव तात्पर्यात् । तथा च प्रकृतशब्दनित्यत्वदूषणोपयुक्तमेवेति न निग्रहस्थानमिति—**नहि ते प्रत्यक्षे इति ।**

नन्विदमुत्तरमसङ्गतम् । यदि परेण प्रत्यक्षेण हेतुना बुद्धिकर्मणोरनित्यत्वं साधयेत्, त्तदेदं दूषणं युज्येत, तत्तु न । घटादिषु व्यभिचारात् । यदि वा अनित्यत्त्वव्याप्तं अप्रत्यक्षत्वं भवेत्, तदपि व्यापका नित्यत्व विरुद्धप्रत्यक्षत्वाभिधानमत्रोच्येत, तदपि न सम्भवति, अतीन्द्रियत्वादाकाशेरप्रत्यक्षत्वेनानित्यत्वापत्तेश्च, किन्त्र यदि स्वरूपेण बुद्धिकर्मणोरनित्यवं साध्येत, ततस्तद्दूष्यं स्यादपि । यदातु प्रत्यभिज्ञायास्तत्र व्यभिचार उच्यते, तदा तयोर्नित्यत्वविरहेऽपि प्रत्यभिज्ञायास्तत्रदर्शनाद् व्यभिचारः स्फुट एवेति नोत्तरं कथमपि सङ्गच्छते इति चेद् ?

अत्र केचिद् यदि बुद्धिकर्मणोः प्रयत्यक्षत्वं स्यात्तदा तदेवदेमिति प्रत्यक्षमूलकप्रत्यभिज्ञानस्य तत्र दर्शनाद् व्यभिचारेण प्रमाण्यं स्यादिति न तेन शब्दे नित्यत्वं साधयितुं शक्येतेति, तयोः प्रत्यक्षत्वनिषेधेन तत्पृष्ठरुढप्रत्यभिज्ञानस्यापि प्रतिषेधान्न व्यभिचार इति, ततस्तन्नित्यत्वं सुसाधमित्युत्तरभाष्याशयः ।

अथ ते प्रत्यक्षे इति । तथा च विपक्षाभावात्तत्र प्रत्यभिज्ञानस्य हेतोः सत्त्वेऽपि न व्यभिचार इति भावः । ननु नहि ते प्रत्यक्षे यदि ते प्रत्यक्षे नित्ये एवेत्यनवस्थोक्तेः कोऽभिप्रायः ? अयमभिप्रायः बुद्धिकर्मणोर्नित्यत्वं वा स्यादनित्यत्वं वा नहि तेन मदीयः पक्षो दुष्यति, प्रत्यक्षत्वनित्यत्वयो र्व्यवस्थितविषयत्वात् । येन तत्तद्व्यक्त्यात्मना बुद्धिकर्मणोरनित्यत्वं न तेन तयोः प्रत्यभिज्ञानविषयत्वं घटबुद्धावश्वबुद्धिवत्, येन तु शक्तिजात्यात्मना अनयोः प्रत्यभिज्ञानं, तेन नित्यत्वमेव सर्वेषामिष्टमित्याहुः ।

तन्न । प्रत्यभिज्ञानिराकरणाभावात् प्रत्यभिज्ञानिराकरणाभिप्राये तु न ते प्रत्यभिज्ञायेते इत्येवं वक्तव्यं स्यात् तथा तु नोक्तं, प्रत्यक्षशब्देन तद्ग्रहणे क्लेश इति, न तन्निराकरणपरं भाष्यम् । प्रत्यभिज्ञानं हि गवादाविव

बुद्धिकर्मणोरप्यविशिष्टं दृश्यते । अयं गौरयमपि गौरितिवदियमियं बुद्धिः अयं चलति अयमपीति प्रत्यभिज्ञानं सर्वानुभवसिद्धं नापह्नवमर्हति । न चाप्रत्यक्षत्वे बुद्धिकर्मणोः केन प्रमाणेन प्रत्यभिज्ञानं स्यात्, येन तयोर्ग्रहणमिति ब्रूमः । न च तयोरनुमानेन ग्रहणं भवति, सामान्यविषयत्वात्, तु प्रत्यभिज्ञानं न तेन सम्भवतीति वाच्यम् । अनुमानस्यापि विशेपविषयत्वात्, व्यवहिताधीयानस्वरविशेषेण देवदत्तानुमानदर्शनात् । न च तदेवेदमिति प्रत्यक्षमेवं ज्ञानं प्रत्यभिज्ञानं, तच्च न बुद्धिकर्मणोः परोक्षत्वादिति वाच्यम् । परोक्षापरोक्षसाधारणगृहीतग्रहणस्यैव प्रत्यभिज्ञानत्वेन तथा विवक्षणे पूर्वंपरिभाषापत्तेः वाङ्मात्रेण शब्देऽऽपि तत्प्रतिषेधसम्भवाच्च, यदि तु प्रत्यक्षमात्रं प्रतिषिध्यते, न प्रत्यभिज्ञानम्, तदा प्रत्प्रतिषेधवैयर्थ्यं, व्यभिचारापरिहारात् । विशिष्य प्रत्यक्षनित्यत्वनिराकरणं कर्मण्ययुक्तं स्वसिद्धान्तविरोधादित्यग्रे निरूपयिष्यते ।

तस्माद् भाष्यमिदमेवं व्याख्येयम्—नहि अस्माभिर्नित्यत्वसाधनाय प्रत्यभिज्ञानमुच्यते, येन बुद्धिकर्मणोर्व्यभिचारं प्रदर्श्य तदाभासी क्रियते, किन्तु अनित्यत्वे प्रत्यभिज्ञाप्रत्यक्षविरोधः प्रदर्श्यते, न च प्रत्यक्षे व्यभिचारो दूषणं, येन तदुद्भावनं प्रकृतदूषकत्वेनोपयुक्तं स्यादिति, सिद्धान्तान्तरदूषणमात्रं स्याद् । बुद्धिकर्मणोरपि प्रत्यभिज्ञानान्नित्यत्वं स्यादित्याक्षेपे । यद्यपि निग्रहस्थानमेव दूषणं वक्तुं शक्यं, तथापि तदुपेक्ष्य शब्दवन्न बुद्धिकर्मणोर्नित्यत्वमित्यत्र विशेषं दिदर्शयिषुणा '**न ते प्रत्यक्षे**' इत्युक्तम् । शब्दे हि अनुमानेनानित्यत्वं साध्यते, तच्च न बलवता प्रत्यभिज्ञाप्रत्यक्षेण शब्दनित्यत्वसाधकेन विरोधादिति तस्य नित्यत्वमेव, बुद्धिकर्मणोस्तु नित्यत्वमनित्यत्वमित्येतद्द्वयमानुमानिकमेवेत्येकतरपक्षे बलावलविशेषाभावान्नावश्यं नित्यत्वमेवेत्यभिप्रायेणोच्यते—**न हि ते प्रत्यक्षे** इति ।

यद्वा लिङ्गविधयापि प्रत्यभिज्ञानेन नित्यत्वं साधयितुं शक्यते, तत्र प्रत्यभिज्ञानं प्रत्यक्षत्वेन विशेषणीयं, बुद्धिकर्मणोस्त्वप्रत्यक्षत्वान्न तत्र प्रत्यक्षप्रत्यभिज्ञानव्यभिचारः । न च प्रत्यक्ष प्रत्यभिज्ञानस्यापि घटादौ व्यभिचरितत्वेन न तत्साधनक्षमत्वं, स्थायित्वमात्रस्यैव सिषाधयिषितत्वेन व्यभिचाराभावात् ।

अथवा श्रौत्रप्रत्यक्षत्वमत्र विवक्षितम्, न, पक्षमात्रवृत्तित्वेनासाधारण्यं शब्दत्वेऽपि तत्सत्त्वेनासाधारण्याभावात् । न च तथापि ध्वनौ व्यभिचारः, भूतावयवधर्मध्वन्यन्यत्वे सतीति विशेषणात् तथा चोक्तम्—

हेतुरेव ह्यसौ स्पष्टो नित्यत्वस्योपलभ्यते ।
भूतावयवधर्माख्यध्वन्यन्यत्वविशेषितः ॥ इति ॥

न च कर्मणः स्वमते प्रत्यक्षत्वात् तदप्रत्यक्षाभिधानं स्वसिद्धान्तविरुद्धमिति वाच्यम् । अतीन्द्रियपरमाण्वाश्रितकर्माभिप्रायकत्वात् ।

बुद्धेरप्रत्यक्षत्वं तु साधितमेव घटादिवृत्तिकर्मणां शब्दवदेव प्रत्यभिज्ञया प्रत्यक्षत्वं नित्यत्वं चैतदुभयमिष्टमेवेत्यभिप्रायेणाह— भाष्ये—**अथ प्रत्यक्षे नित्ये एवेति ।** प्रत्यक्षेषु नित्यत्वे सिद्धे अतीन्द्रियेपि तदेवोचितं वस्तुस्वभावपरित्यागानौचित्यादतस्तदप्रत्यक्षवचनमुपक्रममात्रमिति । न चैषां नित्यत्वे निरन्तरमुपलब्धिः स्यात्, व्यञ्जकसद्भावासद्भाववशेन तदुपलब्धेः कादाचित्कत्वात् । यद् भवतां कारणं तदेवास्माकं तदभिव्यञ्जकमिति, नात्र तदनुयोगः । शब्दत्वकर्तृत्वोपलब्धिवद् बुद्धिकर्मणोरपि न सततमुपलब्धिः । न च तदभिव्यञ्जनशक्तिस्तदाश्रये द्रव्ये सततमस्त्येवेति, कथं न सततमुपलब्धिः । कारणशक्तिरपितथैवास्तीति किं न कार्यमपि सततम्, सहकारिवैकल्यादिति चेत्, इहापि तदेवेति गृहाण ।

न चाभिव्यक्त्युत्पत्त्योस्तुल्यदोषगुणत्वे किमित्यभिव्यक्तिपक्षे एव विशेषाभिनिवेशः प्रत्यभिज्ञानमपि साजात्यालम्बनेन समर्थितमेवेति वाच्यम् । सौगतेषु सत्सु प्रथमं तावदाश्रयाद् भेद एव क्रियासु दुर्वचः, ततस्तद्विशेषोत्क्षेपणादिः, तत्र कियात्वावान्तरजातिरासां प्रत्येकव्यक्तिवृत्तिरित्यादिबहुतरक्लेशः । न च बुद्धिभेदानुरोधात्क्लेशः सोढव्यः, आश्रयभेदादपि बुद्धिभेदस्योपपादयितुं शक्यत्वात् । यथा वर्णे द्रुतादिभेदो न स्वाभाविकः, तथा कर्मण्यपीतिदिक् ।

बुद्धिरपिचैतन्यमेव, पुंसः स्वाभाविकत्वात् नित्यमेकं च । न च घटपटादिबुद्धिभेदानुपपत्तिः विषयभेदनिबन्धनत्वाद् बुद्धिभेदस्य । न च पुंसो नित्यचैतन्यस्वभावत्वे इन्द्रियादि व्यापारं विनापि सर्वदा विषयभानापत्तिः सहकारिवैकल्ये शक्तिमात्रेण कार्योत्पत्त्यदर्शनात् । यथादहनकर्मकृशानु-

रुपनीतं दाह्यं विना न दहति । स्वच्छो दर्पणः स्फटिको वा विम्बसन्निधानं विना तच्छायां न गृह्णाति, तथा नित्यचैतन्यस्वभावः पुरुषो देहवृत्तिरिन्द्रियोपनीतान् विषयान् गृह्णाति असावेव बुद्धिरितीन्द्रियादिवैकल्यान्न सर्वदा बुद्धिरिति ।

ननु भाष्ये बुद्धेरेव नित्यत्वमुक्तं, न चैतन्यस्थ तत्र बुद्धिशब्देन चैतन्यस्यैव विवक्षितत्वात् । न च बुद्धौ प्रत्यभिज्ञैव न दृष्टा, नहि घटबुद्धिः पटबुद्धित्वेन प्रत्यभिज्ञायते विषयविशिष्टत्वेन प्रत्यभिज्ञानाभावेऽपि विषयोपरागमपहाय बोधात्मकत्वे न प्रत्यभिज्ञानस्य सर्वानुभवसिद्धत्वादियं बुद्धिरियमपि बुद्धिरित्याकारेण घटपटोभयबुद्धौ तस्याः सत्वाद्भेदभानस्य विषयाधीनत्वादित्युक्तमेव ।

तदेवं प्रत्यक्षद्रव्यवृत्तिकर्माभिप्रायं, चैतन्याभिप्रायं च । अथ **प्रत्यक्षे नित्ये एवेति भाष्यं** । न च चैतन्य न प्रत्यक्षम् इति कथमस्य प्रत्यक्षत्वेनाभिधानम् ? सत्यम्, चितिशक्ति र्न प्रत्यक्षा किन्त्वत्र बुद्धिशब्देन लक्षणया प्रमाता गृह्यते, स च नित्योऽपि प्रत्यक्षोऽपि तस्य ज्ञानरूपोविकारोऽनित्योऽप्रत्यक्षश्चेति तदभिप्रायं पूर्वभाष्यम् ।

तदयं भाष्यार्थः पूर्वपक्षवादी बुद्धिकर्मणोर्यन्नित्यत्वं प्रसंजयति, तद्यदि ज्ञानाभिप्रायेण, तदाऽसंगतमप्रत्यक्षत्वात्, ज्ञानस्य यदि चैतन्याभिप्रायेण तदा युक्तमेव पुरुषस्य नित्यत्वात् । किन्तु तत्र प्रत्यक्षत्वं नास्तीति ध्येयम् ।

उत्पत्तिविनाशाभ्यां पूर्वदिनोच्चरितशब्दाद्दिनान्तरोच्चरितशब्देऽन्यत्वमाशङ्कते—**ह्यस्तनस्येति** । निराकुरुते **नैष इति** । कारणमाह **पुनरिति** । प्रत्यभिज्ञाप्रमाणविरोधान्न भेद इति कुतो, नाशादित्याह—**नहीति** । अन्यथा दण्डमाह—**द्वितीयेति** । नहि अनुपलम्भमात्रेणाभावसिद्धिरतिप्रसङ्गादित्याह—**नहीति** । कुतस्तर्हि अभावसिद्धिरित्यत आह—**अप्रमाणतायामिति** । योग्यस्य प्रमाणेनानुपलब्ध्याऽभावसिद्धिरितिभावः । शब्दस्तु—व्यञ्जक सद्भावे प्रत्यक्षेणोपलभ्यते इति आह—**नहि प्रमाणेति** । उपलभ्यमानत्वं शुक्तिरजतादौ व्यभिचारीत्यत आह—**अव्यामोहो नेति** । नहि बाधकप्रमाणं विना व्यामोहः शुक्ति रजतादौ नेदं रजतमिति बाधकेन रजताभावः सिद्धयतीति, तत्र रजतप्रत्ययस्य व्यामोहत्वम् । नैवं प्रकृते शब्दाभावसाधकं

प्रमाणमस्ति, येन तत्प्रत्ययस्य व्यामोहत्वं स्यादिति भावः। **पुरस्तादिति**। सतोऽपि शब्दस्याभिव्यञ्जकाभावादेवानुपलब्धिसम्भवेन विनाशकल्पनायां प्रमाणाभाव इति भावः। पूर्वापरदर्शनेमध्ये तददर्शनेऽपि न तदानीमभाव इत्यत्र सर्वानुभवं दर्शयति—**यथेति**। इदमुपलक्षणम्। गृहस्थलादेरपि तद्वद्विनाशे क्व निवर्तेत सुषुप्तावनुपलब्ध्या सर्वस्य प्रत्यहमुत्पत्तिविनाशाभ्युपगमेऽशौचमपि कपोतसूतकायितं स्यादित्यलमसम्भूतार्थनिराकरणेन।

स्थूलविनाशान्यथानुपपत्त्यासिद्धं क्षणिकत्वं घटादीनामिव शब्दस्याप्यविशिष्टमिति वादिनां बौद्धानां मतं निराकर्तुमाह—**येऽपीति**। घटादौ इव अत्रापि तैरेव साधनैः क्षणभङ्गो निराकार्यः। ह्यस्तनो घटोऽद्याप्यस्ति घटत्वादघनघटवदित्यनुमानमेकं क्षणभङ्गसाधनम्। अपरं सोऽयं घट इति प्रत्यभिज्ञा। न चानुमानमयुक्तं मुद्गराभिहते घटे हेतोरनैकान्तिकत्वात्। तस्यापि सत्त्वसाधने प्रत्यक्षबाध इति चेत्, सदेवं तर्हि ह्यस्तनो घटोऽद्याप्यस्ति निष्प्रयत्नत्वे सति अवयवविश्लेषाभावे सति अद्य यावत् स्थूलनाशानाक्रान्तत्वाद् दृश्यमानघटवदित्यनुमानं बोध्यम्।

न च घटादिः क्षणिकः सत्त्वाद्दीपज्वालग्वदित्यनुमानेन सप्रतिसाधनत्वमिति वाच्यम्। प्रत्यभिज्ञाप्रत्यक्षविरोधेनेदृशानुमानोत्पत्तेरनवाकाशात् नचार्थक्रियाकारित्वान्यथानुपपत्त्या क्षणिकत्वम्, सत्त्वपक्षे एवार्थक्रियाकारित्वोपपत्त्या वैपरीत्यात्। न च क्षणिकस्यार्थक्रियाकारित्वाभ्युपगमे ज्वालायाः प्रभारम्भकत्वानुपपत्तिः, ज्वालायाः क्षणिकत्वानुपगमात्। सूक्ष्मा हि तदवयवाः शीघ्रं देशान्तरं गच्छन्ति, प्रभूतं पिण्डितं तेजः वर्तिदेशे तिष्ठति, तत्र यावदूर्ध्वं गच्छति, तावज्ज्वालेति कथ्यते, ततोप्यतिक्रम्य यत् प्रयाति, तत्प्रभेति। ततोऽपि परं यत्प्रयाति, तत्तु सूक्ष्मत्वान्न प्रतीयते। तथा चाविनष्टमेवतेजः निःसृत्य ततोऽपिपरं गच्छत् सूक्ष्मत्वाददृश्यतामाप्नोति न क्षणिकत्वम्। न चाविनष्टम् सत् किमर्थमूर्ध्वं व्रजति, तत्रैव किन्नावतिष्ठते, उत्तरावयवैरूर्ध्वदेशस्यावरुद्धत्वाद् यावत्तेषां देशान्तरे प्रसर्पणं न स्यात्तावत्पूर्वावयवानामधोदेशगतानामूर्ध्वदेशगमनं न स्याद्। यथा यथा तूत्तरेऽवयवा व्रजन्ति, तथा तथावकाशलाभात्पूर्वपूर्वावयवा अपीति।

ननु प्रभायां विरलेषु तेजस्सु सत्स्वपि तेजोऽन्तरसंक्रान्तिस्तत्र सम्भवतीति, किमर्थं देशान्तरगमनं कल्प्यते। स्थितैः पूर्वावयवैः उत्तरावयवसंयोगात्

सान्द्रतामापन्नै र्ज्वालाभिरिव तृणादिदाहापत्तेः गतिशीलानां तेजसामेकत्र चिरमवस्थानासम्भवाच्च। न च क्षणिकशरीरादौ व्यभिचारदर्शनात्प्रत्यभिज्ञायाः न स्थैर्यसाधनक्षमत्वं, शरीरादेः क्षणिकत्वाभावात्। न च बाल्याद्यवस्थानामेकान्ततः शरीराद् भेदे घटवद् पृथगुपलम्भापत्तिः। अभेदे तु प्रतिक्षणमुत्पत्तिविनाशौ धर्मिणोऽपि तद्वदपरिहार्याविति कथं न क्षणिकत्वं? शरीरादेर्बाल्याद्यवस्थात्मना परिणामाङ्गीकारेण प्रतिक्षणमुत्पत्तिविनाशकल्पनायां प्रमाणाभावाद्गौरवात् प्रत्यक्षविरोधाच्चेति दिक्।

तदाह—**न शक्नुवन्तीति। उदेतीति।** तथा चानुमानस्योत्पत्तिनिरोधलक्षणो बाधः शीघ्रप्रवृत्तिशीलेन प्रत्यभिज्ञाप्रत्यक्षेणाभेद साधकेनानुमानविषयभेदापहारादनुमानानुत्पत्तिरेव। पूर्वमनुमानप्रवृत्तौ तु पश्चाज्जातेनापि बलवता प्रत्यभिज्ञाप्रत्यक्षेणाऽनुमाने मिथ्यात्वलक्षणो बाधो ज्ञाप्यते शुक्तिरजतज्ञानस्येव नेदं रजतमिति ज्ञानेन। तस्य बाधं विनोत्तरोत्पत्तेरसम्भवादिति न मिथ्याज्ञानस्य स्वविषयसाधकत्वं बाधितत्वादित्याह स्वकार्यमिति।

सूत्रम्—अनपेक्षत्वात् ॥ २१ ॥ (हे० ३)

**भाष्यम्—येषामनवगतोत्पत्तीनां द्रव्याणां भाव एव लक्ष्यते, तेषामपि केषाञ्चिदनित्यता गम्यते, येषां विनाशकारणमुपलभ्यते। यथा, अभिनवं पटं दृष्ट्वा। नचैनं क्रियमाणमुपलब्धवान्। अथवा अनित्यत्वमवगच्छन्ति रूपमेव दृष्ट्वा, तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा "विनश्यति" इत्यवगच्छति। नैवं शब्दस्य किञ्चित् कारणमवगम्यते। यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्यते।**

इति सूत्रम्। प्रत्यभिज्ञया शब्दस्य नित्यत्वे साधिते स्वारसिको विनाशो निरस्त एव। हेत्वन्तराधीनो विनाशो विनाशकहेत्वभावान्न सम्भवतीत्यनेन सूत्रेण बोध्यते। अयं भावः—कार्यनाशो द्विधा भवति—समवायिकारणनाशादसमवायिकारणनाशाच्च, आद्यो यथा तन्तुनाशात्पटनाशः। द्वितीयस्तन्तुसंयोगनाशात्पटनाशः तदेतद्विनाशद्वयं पटस्य वर्तमानतादशायामपि ज्ञातुं शक्यते। तदाह—**यथेति।** नूतनं पटं क्रियमाणमदृष्ट्वापि तद्वर्तमानतादशायामेव तन्तुतत्संयोगसापेक्षोत्पत्तिकः पटो भवतीति निश्चित्य,

नूनमयं तन्तुनाशात्, तदीयसंयोगनाशाद्वा विनङ्क्ष्यतीति तदनित्यत्वमवधारयति। नैवं शब्दे कारणद्वयमस्ति, यद्विनाशादेतद्विनाशोऽवगम्येत। अतोऽवयवसंयोगादिकारणापेक्षत्वाभावादसम्भावितविनाशो नित्य एव शब्द इति समुदितार्थः।

सूत्रम्—प्रख्याभावाच्च योगस्य ॥ २ ॥ (हे० ४)

**भाष्यम्—इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम्। ननु वायुकारणकः स्यादिति, वायुरुद्गतः संयोगविभागैः शब्दो भवतीति, तथा च शिक्षाकाराः आहुः "वायुरापद्यते शब्दतामिति"। नैतदेवं वायवीयश्चेच्छब्दो भवेत् वायोः सन्निवेशविशेषः स्यात्। नच वायावीयान् अवयवान् शब्दे सतः प्रत्यभिजानीमः। यथा पटस्य तन्तुमयान्। नचैवं भवति। स्याच्चेदेवं स्पर्शनेनोपलभेमहि। नच वायवीयानवयवान् शब्दगतान् स्पृशामः। तस्मान्न वायुकारणकः। अतो नित्यः।**

इति सूत्रम्। साक्षात् पूर्वसूत्रेण संगत्यभावादाह—**इदमिति**। तथा च कैश्चिच्छब्दैः पूर्वपक्षं विधाय, तदुत्तरं सूत्रं योजनीयम्। तथाहि वायुरापद्यते शब्दामि इति शिक्षाकारोक्त्यनुसारात्पटादिवयविद्रव्यविशेष एव शब्दः। तथा च पटादिवदयवसंयोगादिविनाशादयमपि विनङ्क्ष्यतीति शब्दविनाशोपि सुज्ञान इत्याशङ्क्य तन्निराकरणाय "प्रख्याभावाच्च योगस्ये"ति सूत्रं पूर्वोत्तर पक्षाभ्यां योजनीयम्।

प्रकृष्टा प्रत्यक्षा आख्या–धीः प्रख्या प्रत्यक्षप्रत्यभिज्ञा योगो—अवयवसन्निविशेषः। यदि शब्दो वायवीयः स्यात्? तर्हि तदवयवसंयोगविशेषः शब्दे उपलभ्येतेत्याह—**वायवीय इति**। शेषः स्पष्ट इति।

सूत्रम्—लिङ्गदर्शनाच्च ॥ २३ ॥ (हे० ५)

**भाष्यम्—लिङ्गं चैवं भवति, वाचा विरूपनित्यया इति अन्यपरं हीदं वाचो नित्यतामनुवदति। तस्मान्नित्यः शब्दः।**

इति सूत्रम्। अन्यपरं—अन्यार्थद्योतकं वाक्यं लिङ्गमुच्यते। तच्चापि शब्दस्य नित्यत्त्वे दृश्यते लिङ्गमाह—वाचा विरूपनित्यया इति। अस्य लिङ्गत्वं स्फोरयति—**अन्यपरमिति**। रूपयतीति रूपः वाचः कर्ता,

विगतो रूपो यस्याः सा, सा चासौ नित्या च तया इत्यर्थः। एवं चोच्चारणस्याभिव्यञ्जकत्वेन हेतुत्वाभावानिरवयत्वात् सर्वदेशकालगतत्वादपरोक्षत्वाच्चाकाशवन्नित्य एव शब्दो, न कार्यं इति संक्षेपः।

इति कल्पकलिकायां शब्दनित्यताधिकरणम्।

## अथ सप्तमं वाक्याधिकरणम्

सूत्रम्—उत्पत्तौ वाऽवचनास्युरर्थस्यातन्निमित्तकत्वात् ॥२४॥ (पू०)

**भाष्यम्—यद्यप्यौत्पत्तिकः नित्यः शब्दोऽर्थसम्बन्धश्च तथापि न चोदनालक्षणो धर्म्मः। चोदना हि वाक्यं; नहि अग्निहोत्रं जुहुयात् स्वर्गकामः इत्यतो वाक्यादन्यतस्मात् पदात् अग्निहोत्रात् स्वर्गो भवति इति गम्यते। गम्यते तु पदत्रये उच्चारिते। न चात्र चतुर्थः शब्दोऽस्ति अन्यत्। अतः पदत्रयसमुदायात्। न चायं समुदायोऽस्ति लोके यतोऽस्य व्यवहारादर्थोऽवगम्यते। पदानि अमूनि प्रयुक्तानि, तेषां नित्योऽर्थः अप्रयुक्तश्च समुदायः। तस्मात्समुदायस्यार्थः कृत्रिमो व्यामोहो वा। न च पदार्था एव वाक्यार्थः, सामान्ये हि पदं प्रवर्तते, विशेषे वाक्यम्। अन्यच्च सामान्यम् अन्यो विशेषः। न च पदार्थाद्वाक्यार्थावगतिः असम्बन्धात्। असति चेत् सम्बन्धे, कस्मिंश्चित्पदार्थेऽवगतेऽर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात्। न चेतदेवं भवति। तस्मादन्यो वाक्यार्थः।**

इति सूत्रम्, अस्यार्थः, उत्पत्तिशब्देन लक्षणया स्वाभाविकत्वमुच्यते। एवञ्च पदार्थसम्बन्धानामेतावता पूर्वप्रबन्धेन नित्यत्वे साधितेऽपि, वेदशब्दाः अर्थस्य-धर्मस्याऽवचनाः स्युः, अप्रमाणानीति यावत्। वक्ष्यमाणप्रत्येक-समुदायविकल्पेन वर्णपदादीनां वाक्यार्थबोधं प्रत्यहेतुत्वात्। अर्थस्य तन्त्रेण पदे वाक्ये चोभयत्र सम्बन्धः एतदर्थस्फोरणाय यद्यप्यौत्पत्तिको नित्यः शब्दोऽर्थः, सम्बन्धश्च। तथापि न चोदनालक्षणोऽर्थो धर्म इति भाष्यम्। अस्यार्थः। यद्यपि पूर्वप्रबन्धेन पदार्थसम्बन्धानां नित्यत्वं साधितं, तथापि वाक्यार्थे वेदवाक्यानां न प्रामाण्यं सिद्ध्यति, वक्ष्यमाणरीत्ता तत्प्रतिपत्तौ मूलाभावात्। निर्मूला च प्रतीतिर्जातापि प्रतिभावन्न प्रामाण्यमश्नुते—इति, सफलः पूर्वप्रयासः। तथा च मूलाभावात्पुनराक्षेपः।

यद्यपि पदार्थनित्यत्वं न विशिष्य साधितं, जातिसद्भावमात्रस्यैव प्रदर्शितत्वात्, तथापि शब्दनित्यतासाधनोक्तदिशा तस्या अपि नित्यता साधितप्रायैव, साधनस्य प्रत्यभिज्ञाप्रत्यक्षस्योभयत्र साम्यादिति, अग्निहोत्रयागादिरूपधर्मो वाक्यार्थ एव, न पदार्थः । एतद्वाक्यघटकस्य कस्यचिदपि-पदस्य तदभिधायकत्वाभावात् । न च स्वार्थेऽगृहीतसम्बन्धं वाक्यं पदवत्प्रत्यायकमव्युत्पन्नस्यापि प्रत्यायकत्वापत्तेः । न च समुदाये शक्तिग्रहोपायः, लौके तत्प्रयोगाभावेन व्यवहाराभावात् । न च समुदायोऽतिरिक्तः समुदायिनो, येन व्यवहारात्स्वातन्त्र्येण तत्र शक्तिग्रहः स्यादित्याह—**नहीति** ।

अयम्भावः—पदानि प्रत्येकमर्थं गमयन्ति, किम्वा संहतानि, अथवा-पदातिरिक्त एव समुदायः, किम्वा पदार्थाः, अत्रापि पूर्ववद्विकल्पः । एवं स्मृतिसम्बन्धादीनामपि विकल्पनं सम्बन्धग्रहणा भावात् । अमीषां कस्यापि न गमकत्वमपूर्वत्वाद्वाक्यार्थस्य । न च नेत्रादिवदगृहीतसम्बन्धस्य प्रत्यायकत्वम्, अव्युत्पन्नस्यापि प्रत्यायकत्वापत्तेः, अतो धूमादिवद् गृहीतसम्बन्धस्यैव प्रत्यायकत्वमास्थेयम् । यदि चाप्रतीतोऽपि वाक्यार्थे पदसम्बन्धः स्वीक्रियते, तदा प्रयोजनाभावो धूमादिवत्प्रतीतसम्बन्धस्यैव प्रत्यायकत्वात्, तत् सत्त्वे प्रमाणाभावाच्च ।

ननु मास्तु वाक्यार्थे पदसम्बन्धः वाक्यस्यैव तत्र सम्बन्धोऽस्तु, चोदनालक्षणोऽर्थो धर्म इत्युक्तौ चोदनापदं वाक्यपरमेवेति, तदेव वाक्यार्थे मूलमित्यलम् मूलान्तरान्वेषणप्रयासेनेति चेत्, मैवम् । पदातिरिक्तवाक्याभावात् पदार्थातिरिक्तवाक्यार्थाभावाच्च । तथाहि—समुदायः समुदायिभ्योऽतिरिच्यते, न वा । आद्ये प्रत्येकातिरिक्तसमुदायस्यानुपलम्भेन, सत्तैव न सिद्ध्यति, कुतः प्रामाण्यम् ? प्रमाणप्रमेयोभयाभावात् । न च पदसमुदायो वाक्यं पदार्थसमुदायो वाक्यार्थ—इति निरुक्तया पदतदर्थातिरिक्तवाक्यतदर्थयोः सद्भावोऽस्त्येवेति वाच्यम् । युगपद्ग्रहणाभावेन समुदायत्वासम्भवात् । न च युगपद् ग्रहणाभावेऽपि युगपत्सत्तया समुदायोऽस्तु, सत्तायौगपद्यस्य व्यवहाराङ्गत्वाभावात् । अन्यथा पदतदर्थादीनां नित्यतया सर्वेषां पदानामेकवाक्यतापत्तिः, तथा सर्वेषां पदार्थानां वाक्यार्थापत्तिश्चेति, ज्ञानयौगपद्येनैव तद्वक्तव्यम्, तच्च प्रकृते नास्ति ज्ञानानामयौगपद्यादिति न पदार्थसमुदायो वाक्यार्थं इत्येतद्वक्तव्यम् ।

अपि च न समुदायमात्रं वाक्यम्, पदार्थसमुदायमात्रं वा वाक्यार्थः। गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्यादावपि पद-तदर्थसमुदायसत्त्वेन वाक्यतदर्थत्वापत्तेः। तस्मात् सम्बद्धानि पदानि, पद सम्बन्धो वा वाक्यम्, सम्बद्धाश्च पदार्थाः पदार्थसम्बन्धो वा वाक्यार्थ इत्येव वाच्यम्। सम्बन्धश्च प्रकृते न सम्भवति, अपेक्षाविरहात्। अपेक्षा हि अर्थतो वाच्या न स्वरूपतः। तदर्थकेष्वपि दृष्टत्वात्।

अस्तु वा अपेक्षा, तथापि एकवाक्यतानियामकः कश्चन सम्बन्ध एव नास्ति, कमपेक्षेत। न च कार्यकारणसंयोगादि सम्बन्धाभावेऽपि एकार्थ-समवायः सम्बन्धोऽस्ति, कथमुच्यते नास्तीति? किन्तु तस्योक्तानुक्तसाधा-रण्येनाव्यावर्तकतयानुपयोगादिति दिक्। नान्त्यः पदपक्षोक्तदूषणसम्पाता-दिति। **गम्यते तु इति।**

ननु एतत् पदत्रयसमुदायादग्निहोत्रात्स्वर्गो भवति इति बोधो यदि जायते तदैतत्समुदायस्यैव तत्र मूलत्वसम्भवेन निर्मूलत्वाभिधानमयुक्तमिति चेत्? न। प्रत्येकं पदार्थानां मूलत्वनिराकरणतात्पर्येणैतद्भाष्यप्रवृत्तेः। **न चायं समुदायोऽस्ति इति।** अनेन भाष्येण न तावद्वैदिकवाक्यरूपसमु-दायो निराक्रियते युक्तिसाम्येन वैदिकसमुदायवल्लौकिकपदसमुदायस्यापि निराचिकीर्षितत्वात्। तथा च न चायं समुदायोऽस्ति लोके इति भाष्यम्। नैव जातीयकः समुदायोऽस्ति लोके इत्यर्थपरं बोध्यम्।

न च गामानयेत्यादि वाक्यानां लोके सत्त्वाद्वाक्यमात्रनिषेधतात्पर्यपरत्वे भाष्यमिदमसङ्गतं स्यात्। मैवम्। गौरश्वः पुरुष इत्याद्यसम्बद्धपदसमूहस्य वाक्यत्वनिरासाय सम्बद्धार्थकपदसमूहस्यैव वाक्यत्वाङ्गीकारेण सम्बन्धस्य सर्वथा निराकरणात्। आपाततः प्रतीयमानस्यापि वस्तुतस्सत्त्वेन ज्ञायमानत्वा भावादसत्त्वोपचारान्न क्षतिः। नहि सम्बन्धसिद्धिं विना लौकिकवैदिकयोरन्य-तरस्यापि पदसमूहस्य वाक्यत्वं वक्तुं शक्यत इति भावः।

अतिरिक्तानतिरिक्तविकल्पेन समुदायासिद्धेश्च येषां लोके प्रयोगस्तेष्वेव सम्बन्धग्रहोऽन्वयव्यतिरेकाभ्यां न समुदायस्य लोके प्रयोगो, येन तत्र व्यव-हारतः सम्बन्धग्रहः स्यादित्याह—**यत इति।** कानि तर्हि प्रयुज्यन्ते इत्यत आह—**अमूनीति।** तथा च पदानां लोके प्रयोगात्तेष्वेव सम्बन्धग्रहो

व्यवहारस्योपायस्य तत्रैव सत्त्वात्। पदार्थानां वाक्यार्थत्वं निराकुरुते—**न चेति**। द्वयोर्भेदं दर्शयति—**सामान्ये होति**। न च सामान्यविशेषयोरभेदः बुद्धिविशेषकत्वादित्याह—अन्यच्चेति। असम्बन्धादिति। परस्परमसम्बद्धानां बहूनां पदार्थानामनेकवाक्यार्थगामितया न नियमेनैकविशिष्टार्थंगमकत्वं सम्भवति, मिथः संगतानां तु तद्वाक्यार्थमात्रगामितयाऽसाधारणानैकान्तिकत्वमिति, न पदार्थानां वाक्यार्थगमकत्वमिति भावः।

असम्बद्धस्य गमकत्वे अव्यवस्थामाह—**अर्थान्तरमिति**। विनिगमनाविरहादिति भावः। **सर्वमिति**। असम्बद्धत्वाविशेषात्। ततश्च सर्वस्यानायासेन सार्वज्ञ्यापत्तिः, पदान्तरोच्चारणवैयर्थ्यं चेति भावः। न च पदार्था एव वाक्यार्थ इति एतन्मतं त्वयुक्तम्। गौरश्वः पुरुष इत्यादावपि पदार्थसत्त्वेन वाक्यर्थत्वापत्तेः। किंच अर्थान्तरान्वितपदार्थस्यैव वाक्यार्थत्वं, न पदार्थमात्रस्येति चेत्? सत्यम्। अर्थान्तरान्वितोपि पदार्थं एव। यत्र केवलं पदमुच्चार्यते, तत्र तत्पदं केवलं पदार्थस्वरूपमभिधत्ते। यत्र पुनः पदान्तरसमभिव्याहृतमुच्चार्यते, तत्र पदान्तरार्थान्वितं स्वार्थमभिधत्ते इति, पदान्तरान्वितस्वार्थस्य वाक्यार्थत्वात् युक्तं पदार्थस्यैव वाक्यार्थत्वमिति। मैवम् तथासति पदार्थेऽनाश्वासापत्तेः। क्वचिद् गोपदस्य सास्नादिविशिष्टार्थाभिधायित्वं क्वचिद् गामानयेत्यादावानयनान्वितस्य, क्वचित् पश्येत्यादिसमभिव्याहारे दर्शनान्वितस्य स्वार्थस्येत्यनेकपरित्यागस्वीकारापत्तेः। न च सामान्यत इतरपदार्थान्वितत्वेनान्वितत्वमात्रेण वा स्वार्थत्वमिति नाव्यवस्था, केवलपदोच्चारणे तदर्थप्रत्ययानापत्तेः। न चेष्टापत्तिः, स्मरणमात्रस्वीकारादिति वाच्यम्, अनुभूतपरामर्शाभावेन स्मरणत्वायोगात् अन्वयव्यतिरेकाभ्यां पदजन्यत्वावधारणेन स्मृतिप्रमोषकल्पनानवकाशात्, अतः पदार्थस्वरूपमात्रं पदैरभिधीयत इति नान्विताभिधानसिद्धिः। तथा च न पदार्था वाक्यार्थः पदैः सामान्यतः पदार्थस्वरूपमात्राभिधानेऽपि विशिष्टवाक्यार्थविशेषस्य तैरभिधानाभावादिति बोध्यम्। गृहीतसम्बन्धैः पदैः पदार्थावगम इत्येव नियमः, वाक्यैः पुनरगृहीत सम्बन्धैरपि वाक्यार्थावगम इति कल्प्यते स्वभावविशेषादित्यभिप्रायेण शङ्कते—**अप्रयुक्तादपीति**।

**भाष्यम्—स्यादेतत्, अप्रयुक्तावपि वाक्यादसति सम्बन्धे स्वभावादर्थावगम इति यदि कल्प्येत, शब्दो धर्म्ममात्मीयं व्युत्क्रामेत्। नचैष**

**शब्दधर्म्मः, यत् अप्रयुक्तादपि शब्दादर्थः प्रतीयते। नहि, प्रथमश्रुतात् कुतश्चिच्छब्दात् केचिदर्थं प्रतियन्ति। तदभिधीयते पदधर्म्मोऽयं न वाक्यधर्म्मः। वाक्याद्धि प्रथमावगतादपि प्रतियन्तोऽर्थं दृश्यन्ते। नैतदेवम्। यदि प्रथमश्रुतादवगच्छेयुः, अपि तर्हि सर्वेऽवगच्छेयुः। पदार्थविदः, अन्ये च। न त्वपदार्थविदोऽवगच्छन्ति। तस्मान्नैतदेवम्। ननु पदार्थविद्भिरप्यवगच्छद्भिरकृत एव वाक्यार्थसम्बन्धो भविष्यति, पदार्थवेदनेन हि संस्कृताः अवगमिष्यन्ति, यथा तमेव पदार्थं द्वितयादिश्रवणेन इति। नेति ब्रूमः। यदि वाक्येऽन्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः पदार्थेभ्योऽर्थान्तरं प्रत्याययति, उपकारस्तु तदानीं पदार्थज्ञानादवकल्प्यते। तस्मात् कृत्रिमो वाक्यार्थप्रत्ययो, व्यामोहो वा। न पदार्थद्वारेण सम्भवति वाक्यार्थज्ञानमिति।**

इन्द्रियापेक्षया शब्दस्यायमेव विशेषः, यत्तैरगृहीतसम्बन्धैरपि अर्थोऽधिगम्यते, शब्दैः पुनर्गृहीतसम्बन्धैरेवेति अगृहीतसम्बन्धाद्वाक्यादर्थावगमस्वीकारे तु आत्मीयमिमं विशेषं ते जह्युरित्याह—**यदीति**। प्रथमश्रवणे शब्दादर्थप्रत्ययादर्शनेन अप्रयुक्तादर्थप्रत्यायकत्वं न शब्द धर्म इत्याह—**न चैष इति**।

ननु अप्रयुक्तादर्थप्रन्यायकत्वमिति न पदस्य धर्मं ब्रूमः, किन्तु वाक्यस्येत्याह—**पदधर्म इति**। यतो नायं पदधर्मः, तत एव वाक्यधर्मोऽपि नायं, युक्तेरुभयत्र साम्यादित्याह—**यस्मान्नैतदेवमिति**। पुनः शङ्कते—**ननु पदार्थ विद्भिरिति**। उत्तरमाह **वाक्येऽन्त्यवर्ण** इति। अयम्भावः—यदि वाक्यार्थे साक्षादेव वाक्यं प्रवर्तते, तदा पदार्थज्ञानस्य दृष्टोपकारित्वं बाध्येत, पदार्थधीद्वारा वाक्यार्थधियोऽनुपगमात्। तथाचाज्ञातपदार्थस्यापि स्वभावादेव वाक्यादर्थबोधापत्तिः। न चैवं दृश्यते। तस्मात्पदार्थज्ञानस्योपकारित्वसम्पादनाय तद्द्वारैव पूर्वपूर्ववर्णजनितसंस्कारसहितो वाक्यान्तिमवर्णः पदार्थातिरिक्तं वाक्यार्थं बोधयतीति स्वीकार्यम्, एवं च वाक्यार्थबोधे पदार्थानामनुरोधस्यावश्यकत्वेन तेषामेव मूलत्वं स्यात्, तच्च पूर्वोक्तरीत्या निराकृतमिति, न वाक्यार्थे किञ्चिन्मूलम्।

न च कथं तर्हि लोके गामानयेत्यादि वाक्याद् वाक्यार्थधीः, गवानयनादिव्यवहारश्चेति। प्रमाणं विनापि अर्थादेव ज्ञानव्यवहारोपपत्तिसम्भ-

वात् । वेदार्थस्तु प्रमाणान्तरामूलकत्वेन शब्दमूलक एव । तत्र चोक्तदिशा शब्दस्यापि मूलत्वनिरासेन निर्मूलएवापन्नः । ततश्च याज्ञिकैर्वेदान् कृत्वा, अस्य वाक्यस्यायमर्थ इति सङ्केतः गुणवृद्ध्यादिवत्कृतः । तत एव पुंसां वाक्यार्थावगम इत्याह—**तस्मात् कृत्रिम इति** । अतथाभूतस्याप्यर्थस्य याज्ञिकैस्तथा परिभाषितत्वम् व्यामोहः । न चोदनालक्षणोर्थो धर्मो, मानाभावात् किन्तु याज्ञिकैर्धर्मस्य चोदनालक्षणत्वेन परिभाषणाद् व्यामोह इत्याह—

**भाष्यम्—ननु एवं भविष्यति—सामान्यवाचिनः पदस्य 'गौः' इति वा 'अश्वः' इति वा, विशेषकं शुक्लः इति वा कृष्णः इति वा पदम् । अन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते । तन्न । नहि, कथमिव गौरिति वा अश्वः इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धिरुपसर्पन्ती श्रुतिजनिता, वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत । न च शुक्लः इत्यादे विशेषवचनस्य कृष्णादिनिवृत्तिर्भवति शब्दार्थः । न च अनर्थको माभूदित्यर्थपरिकल्पना शक्या । अतो न पदार्थजनितो वाक्यार्थः । तस्मात् कृत्रिमः ।**

**पदसंघाताः खल्वेते संघाताश्च पुरुषकृता दृश्यन्ते, यथा, नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः नीलकौशेयसम्बीताः प्रणश्यन्तीव कादम्बाः । अतो वैदिका अपि पुरुषकृता इति ।**

ननु माभूदाश्रयैकनिबन्धनमेकवाक्यत्वम्, विशेष्यविशेषणवाचकाभ्यां गोशुक्लपदाभ्यामभिधेयद्वारैकव्यक्तिकत्वेनैकवाक्यत्वमिति चेत् ? न । व्यक्तिषु अनेकत्वस्यापि सम्भवात्, गम्यमानैकत्वेन यद्येकसम्बन्धः स्यात् ? तदा घटवृक्षयोरपि पार्थिवत्वेनैकत्वस्य गम्यमानत्वादेकवाक्यतापत्तेः । न च शुक्लपदश्रवणेन कृष्णगवीषु गोत्वं निवर्तते, कृष्णगवीषु गोत्वस्य दृश्यमानत्वात् । न च नार्थस्य निवृत्तिरुच्यते, किन्तु बुद्धेरिति । अर्थनिवृत्ति विना बुद्धिनिवृत्तेरशक्यत्वादर्थस्वभावानुरोधित्वाद् बुद्धेरिति, शुक्लपदश्रवणेऽपि कृष्णगवीषु गोबुद्धिरनुवर्तत एव ।

यद्वा श्रुतिबलाज्जायमाना गोबुद्धिर्न शुक्लपदेनैकवाक्यताबलेन कृष्णगवीतो व्यावर्तितुमर्हति, वाक्यापेक्षया श्रुतेर्बलीयसीत्वात् । कृष्णदिब्यावृत्ति-

बोधनत्वे शुक्लपदस्य व्यवच्छेदोऽपि श्रौतः स्यात्, नतु तदस्तीत्याह— **नन्वेवमिति** । तथा च शुक्लपदश्रवणजा बुद्धिर्न गोपदैकवाक्यतया अश्वादिभ्यो व्यावर्तते, व्यावृत्य बोधने च नियतवाक्यार्थप्रत्ययाभावेन न शब्दस्य वाक्यार्थे प्रामाण्यमिति ।

न च नीलादिव्यावर्तकत्वाभावे शुक्लादिपदोपादानमेव व्यर्थं स्यादिति, तत्सार्थक्याय व्यावृत्तिपरत्वमवसीयते इत्याशङ्कते **न चेति** । शक्येति । तथा सति अर्थान्तरकल्पनयाऽपि सार्थक्यसम्भवेन वाक्यस्याव्यवस्थितार्थबोधकत्वापत्तेरिति भावः । वेदवाक्यं पौरुषेयं पदसङ्घातात्मकत्वात् भारतादिवदित्यनुमानेन वेदवाक्यस्यापि पौरुषेयत्वमित्याह—**पदसङ्घाता इति** ।

ननु पौरुषेयत्वेऽपि स्मृत्यादिवत्प्रामाण्यमस्तु, को विरोध इति चेत् ? न । स्मृत्यादीनामाप्तोक्तत्वेनैव प्रामाण्याभ्युपगमादतीन्द्रियोर्थे कस्यचिदाप्तत्वाभावेनाम्नायस्य धर्मादौ प्रामाण्यासम्भवात् । तस्मान्मूलाभावाद् वेदवाक्यमप्रामाणमेवेति पूर्वपक्षसंक्षेपः ।

**सिद्धान्तः**

अत्रोच्यते—प्रत्येकसमुदायविकल्पितानि पदानि पूर्वोक्तरीत्या यद्यपि न वाक्यार्थबोधनक्षमाणि, तथापि पदस्मारिताः पदार्था आसत्तियोग्यताकाङ्क्षादिसहकृता वाक्यार्थबोधनक्षमा इत्यन्वयव्यतिरेकाभ्यामवगम्यते, सावयवस्य वाक्यस्य तु पदस्येव न साक्षाद्वाक्यार्थबोधकत्वं, वाक्यार्थबोधनशक्तिविरहात् । न च वाक्यार्थबोधान्यथानुपपत्त्या वाक्ये शक्तिः कल्प्यतामिति, वक्ष्यमाणन्यायेन पदार्थेभ्य एव वाक्यार्थबोधसम्भवेनान्यथानुपपत्त्यभावात् ।

न च विनिगमकाभावः । वाक्यशक्तिकल्पनाक्लेशस्यैव विनिगमकत्वात् । वाक्यार्थे वाक्यशक्तिं कल्पयता पूर्वपूर्ववर्णजनितसंस्कारसहितवाक्यान्तिमवर्णस्य प्रत्यक्षात्मिकायां युगपद् वाक्यघटकतावद्वर्णविषयकस्मरणरूपायां चित्रबुद्धौ सदसद्रूपायामन्तिमवर्णोपलब्ध्यनन्तरं तावद्वर्णविषयकस्मरणे वा भासमानानां वर्णानां शक्तिः कल्पनीया स्यात् । एवञ्च पदवाचकत्वे क्रमेणोपलब्धतिरोहितानां क्लेशेन युगपत्स्मरणमाश्रित्य शक्तिः समर्थिता । वाक्ये तु चिरोच्चरिततिरोहितानां युगपदनुसन्धानं क्लेशतरेण स्यादिति, न वाक्यशक्तिकल्पना समुचिता ।

किञ्च पदार्थप्रतिपादनव्यापारेणोपयुक्तानां पदानां पुनर्वाक्यार्थबोधौपयिकव्यापारान्तरकल्पनायामपि गौरवम्, अदृष्टव्यापारकल्पनापत्तेः। पदार्थानां तु वाक्यार्थबोधसामर्थ्यस्य गम्यमानत्वेनापूर्वकल्पनाभावात् पदार्थप्रतीत्यनन्तरं वाक्यार्थबोधोत्पत्तेः, सर्वानुभवसिद्धत्वात्। यद् व्यापारानन्तरं यद् जायते, तत्तद्धेतुकमिति नियमस्य सर्वसम्मतत्वात्। पदस्य पदार्थवाचकत्ववद्, वाक्यस्य वाक्यार्थवाचकत्वमपि न सम्भवति। तत्र तु पूर्वपूर्ववर्णजनितसंस्कारसहितस्यान्तिमवर्णस्य वाचकत्वमुक्तरीत्या प्रदर्शितं, विजातीयव्यवधानाभावेनान्तिमवर्णश्रवणवेलायां सर्वेषां युगपत्स्मरणसम्भवात्। अत्र तु पदपदार्थसम्बन्धबुद्धीनां व्यवधानाद् वाक्यान्तिमवर्णश्रवणवेलायां चिरतिरोहितानां तावद्वर्णानां पदानां युगपत् स्मरणासम्भवात्। नहि महावाक्येषु तावतां वर्णानां पदानां वा स्मरणोत्तरं वाक्यार्थबोधः कस्यचिदनुभवसिद्धः, किन्तु तद्विनापि तावत्पदार्थस्मरणानन्तरमेव वाक्यार्थबोध इत्येव सर्वानुभवसिद्धम् इति, न वाक्यं नापि पदं साक्षाद् वाक्यार्थवाचकम्। पदार्थवाक्यार्थोभयबोधनव्यापारस्य कल्पनापि पदे न युक्ता, एकफलकव्यापारस्य फलान्तरकल्पनाऽयुक्तैव, शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्। फलान्तरौपयिकव्यापारान्तरकल्पनापि निष्प्रमाणा, वाक्यार्थबोधस्यान्यथाप्युपपत्तेरिति।

**प्रसङ्गात् विज्ञानवादिमतोपन्यासनिरासौ**

यत्तु वर्णातिरिक्तपदाभावाद् वाक्याकाराबुद्धिरेव वाक्यम्, तथा पदार्थभेदाभेदनिरूपणाशक्यतयाऽनेकजातिगुणद्रव्यादिसंसर्गाभासाज्जायमाना वाक्यार्थबुद्धिरेव वाक्यार्थ इति; न वाक्यवाक्यार्थौ बाह्यौ, किन्तु बुद्ध्यालम्बनावेवेति मतम्।

तत्तुच्छं बाह्यविषयालम्बनं विना बुद्धिसद्भावस्य शून्यवादे निरस्तत्वात्।

**शाब्दिकमतोपक्षेप-प्रतिक्षेपौ**

एवं स्फोटवादिनां वैयाकरणानामपि वाक्यतदर्थबुद्धौ वर्णपद-तदर्थाभासाः निष्प्रमाणा मिथ्याकल्पिताः स्युः। बाह्यवाक्य-तदर्थयोः स्वीकारेऽपि निरंशत्वाङ्गीकारान्निरंशस्य वाक्यस्य वाचकत्वकल्पनायां गौरवं, स्वल्पपद-

पदार्थभेदैर्बहुविधवाक्यतदर्थाश्चारभ्यन्ते । तत्र तत्तदर्थभेदेन धावन्ति वाक्यानि कल्पयितव्यानि, तेषु च तत्तदर्थबोधौपयिकानि सामर्थ्यानि कल्पयितव्यानि, तदपेक्षया क्लृप्तसामर्थ्यैः स्वल्पपदैरेव तावद्वाक्यार्थबोधः स्वीकार्यो लाघवादिति वैयाकरणास्तावद् वाक्यं निरवयवमङ्गीकृत्य तत्रावयवभानं प्रत्यभिज्ञां च सादृश्यात्समर्थयन्ते ।

'ध्वनयः सदृशात्मानो विपर्यासस्य कारणमित्युक्तेः । अयमर्थः, यद्यपि वाक्यं निरवयवं, पदे वर्णा न विद्यन्ते वर्णेष्ववयवा न चेत्युक्तरीत्या वाक्यस्फोटस्यैव निष्कर्षत्वेन प्रतिपादनादवयवानुसन्धानं तत्र न परमार्थतः, तथापि वाक्यान्तराभिव्यञ्जकध्वनिसदृशध्वन्यभिव्यज्यमानत्वेन ध्वनिगतं सादृश्यं तदभिव्यङ्ग्यवाक्ये आरोपितं प्रतीयते । तत एव सावयवमिव वाक्यं तत्सादृश्यादेव चावयवप्रत्यभिज्ञापि लक्ष्यते इत्याहुः ।

तदपि न । वस्तुतो वाक्यस्य निरवयत्वे सादृश्यप्रयोजकवर्णपदादिभागानां तत्रासत्त्वात् सादृश्यस्य वक्तुमशक्यत्वात् ।

अस्तु वा निर्भागस्यापि कथञ्चित् सादृश्यं, तथापि वाक्ये पदानि पदे वर्णा न सन्तीत्यभ्युपगमो न युज्यते, अस्मिन् वाक्ये इदमाद्यम् इदं मध्यमम् इदमन्त्यं पदमेवं पदेऽस्मिन्निदमक्षरमाद्यमित्यादि व्यवहारस्य सर्वानुभवसिद्धस्यापलापापत्तेरित्यन्यत्र विस्तरः ।

नन्वस्तु वाक्यं सभागमेव, तथापि स्वभागप्रतिपादितार्थज्ञानसहकृतं वाक्यमेव पदार्थान्वयरूपस्य वाक्यार्थस्य वाचकमास्तां, किं पदार्थे व्यापारकल्पनेनेति चेत् ? न । वाक्ये पदव्यापारेणैव वाक्यार्थबोधसम्भवेन वाक्ये तत्सामर्थ्यकल्पनायां प्रमाणाभावात् । न च पदानां पदार्थोपस्थापनमात्रे व्यापारो, न वाक्यार्थबोधे, तत् कथं पदव्यापाराद्वाक्यार्थबोधः ? पदार्थानां प्रमाणान्तरसिद्धत्वेन तत्र तात्पर्याभावात् अभिधाव्यापारस्य पदार्थोपस्थापनाङ्गत्वेन तदहेतुत्वेऽपि वाक्यार्थतात्पर्येणैव तत्प्रयोगात्तात्पर्यव्यापारस्य पर्यवसितत्वाभावेन वाक्यार्थबोधपर्यन्तत्वाद् 'यत्परः स शब्दार्थ' इति न्यायेन तात्पर्यार्थशब्दप्रामाण्याङ्गीकाराच्छब्दप्रमेयतया वाक्यार्थस्य शाब्दत्वोपपत्तेः ।

एतेन पदार्थोपस्थापनव्यापारमात्रेण पराङ्मुखेषु शब्देषु पश्चात् पदार्थेभ्यो जायमानस्य वाक्यार्थस्याशाब्दत्वं स्यादित्यपास्तम् ।

पदार्थानां शाब्दत्वेन तद्द्वाराजायमानवाक्यार्थबोधस्यापि शाब्दत्वात्, शब्दस्य तत्रैव तात्पर्यात्, तात्पर्यार्थे एव तत्प्रामाण्याभ्युपपगमस्योक्तत्वादित्याशयेन सूत्रमवतारयति—

तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् । सिद्धान्त सूत्रम् ।

**भाष्यम्—तेष्वेव पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन समाम्नायः समुच्चारणम् । न, अनपेक्ष्य पदार्थान् पार्थगर्थ्येन वाक्यमर्थान्तरप्रसिद्धम् । कुतः? प्रमाणाभावात्, न किञ्चन प्रमाणमस्ति येन प्रमिमीमहे । न हि, अनपेक्षितपदार्थस्य वाक्यान्त्यवर्णस्य पूर्ववर्णजनित संस्कारसहितस्य शक्तिरस्ति पदार्थेभ्योऽर्थान्तरे वर्त्तितुम् इति ।**

**ननु अर्थापत्तिरस्ति, यत् पदार्थव्यतिरिक्तमर्थमवगच्छामः । न च शक्तिमन्तरेण तदवकल्प्यते इति । तन्न । अर्थस्य तन्निमित्तत्वात् । भवेदर्थापत्तिः यद्यसत्यामपि शक्तौ नान्यन्निमित्तमवकल्प्येत । अवगम्यते तु निमित्तम् । किम्? पदार्थाः । पदानि हि स्वं स्वं पदार्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं पदार्थाः अवगताः सन्तो वाक्यार्थं गमयन्ति । कथम्? । यत्र हि 'शुक्लः' इति वा 'कृष्ण' इति वा गुणः प्रतीतो भवति, भवति खल्वसावलं गुणवति प्रत्ययमाधातुम् । तेन गुणवति प्रत्ययमिचक्षन्तः केवलं गुणवचनमुच्चारयन्ति, सम्पत्स्यते एषां यथासङ्कल्पितोऽभिप्रायः । भविष्यति विशिष्टार्थसम्प्रत्ययः, विशिष्टार्थसम्प्रत्ययश्च वाक्यार्थः, एवं चेत् । अवगम्यते भेदे अन्यत एव वाक्यार्थः । 'को जातुचित् अदृष्टा पदसमुदायस्य शक्तिः, अर्थात् अवगम्यते' इति वदिष्यति । अपि च अन्वयव्यतिरेकाभ्यामेतदवगम्यते, भवति हि कदाचिदियमवस्था, मानसादप्याघातात् यद् उच्चरितेभ्यः पदेभ्यो न पदार्था अवधार्यन्ते, तदानीं नियोगतो वाक्यार्थं नावगच्छेयुः । यद्यस्य अपार्थगर्थ्यमभविष्यत् । नियोगतस्तु नावगच्छन्ति । अपि च अन्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छति, अवगच्छत्येवासौ शुक्लगुणकम् । तस्मात् पदार्थप्रत्यये एव वाक्यार्थः नास्य पदसमुदायेन सम्बन्धः । यस्तु (३७।२१) श्रौतः पदार्थो न वाक्यानुरोधेन, कुतश्चिद्विशेषादपवर्तितु-**

**मर्हति इति । सत्यम् एवमेतत् । यत्र केवलः पदार्थः प्रयुज्यमानः प्रयोजनाभावादनर्थकः संजायते इत्यवगतं भवति । तत्र वाक्यर्थोऽपि तावद्भवत्विति विशिष्टार्थताऽवगम्यते, न सर्वत्र । एवञ्च सति गुणान्तरप्रतिषेधो न शब्दार्थं ( ३७।२२ ) इत्येतदपि परिहृतं भवति ।**

**अपि च प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याह । साच विशेषश्रुतिः सामान्यश्रुतिं बाधेत । यच्च ( ३८।१ ) एते पदसंघाताः पुरुषकृता दृश्यन्ते इति । परिहृतं तत् कर्त्रस्मरणादिभिः ( १५।२३ ) अपि च एवं जातीयकेऽर्थे वाक्यानि संहतुं न किञ्चन पुरुषाणां बीजमस्ति ।**

अस्यार्थः—तद्भूतानां तेषु पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन-क्रियावाचकेन पदेन ।

यद्वा अंशत्रयविशिष्टभावनार्थत्वेन समाम्नायः—समुच्चारणं, न पदार्थातिरिक्तो वाक्यार्थः । कुतः ? अर्थस्य—वाक्यघटकप्रत्येकपदाभिधेयस्य तन्निमित्तत्वात् वाक्यार्थावगमनिमित्तत्वात् । पदेषु पदार्थानभिधाय विरतव्यापारेषु पश्चादाकाङ्क्षायोग्यतादिवशेन पदप्रतिपादिताः पदार्था एव लक्षणया वाक्यार्थबोधं जनयन्तीत्यर्थः । वाक्यस्य वाक्यार्थवाचकत्वं निर्मूलत्वं च वाक्यार्थज्ञानस्यानेन निरस्तं वेदितव्यम् । तदाह—**तेष्वेवेति** । पदार्थातिरिक्तो न वाक्यार्थ इत्यत्र हेतुं पृच्छति—**कुत इति** । प्रमाणाभाव एव प्रमेयाभावसाधक इत्यभिप्रायेणोत्तरयति **प्रमाणाभावादिति** । **शक्तिरस्तीति** । चिरोच्चरिततिरोहिततावद्वर्णसमुदायानुसन्धाने क्लेशतरस्य दर्शितत्वात् । विजातीयव्यवधानेन चित्रबुद्धेरसम्भवाच्च ।

ननु वाक्यार्थबोधान्यथानुपपत्तिरेव वाक्यस्य वाक्यार्थबोधकत्वे प्रमाणं स्यादित्याशङ्कते—**नन्विति** । पदार्थद्वारा वाक्यार्थबोधस्यान्यथाप्युपपत्तेनर्थापत्तेरवकाश इत्याह—**तन्नेति** । अत्रैव समाधानपरत्वेन सूत्रावयवं योजयति—**अर्थस्येति** । अन्यथापि वाक्यार्थबोधमुपपादयति—**भवेदिति** । **अवगता इति** । पदादिति शेषः । प्रमाणान्तरोपस्थितपदार्थेभ्यः शाब्दबोधानङ्गीकारादितिभावः। प्रमाणान्तरोपस्थितपदार्थेभ्यः वाक्यार्थबोधोपपत्तिप्रकारं पृच्छति—**कथमिति** । यत्र-गवादि सामान्ये । **शुक्ल इति कृष्ण इति वेति** ।

तथा च शुक्लो गौरानीयतामित्यादौ शुक्लगवादिपदद्वयप्रतिपाद्यार्थद्वयसामान्यस्य पदद्वयसमभिव्याहारान्नीलगवादिव्यावृत्तगोव्यक्तिविशेषबोधतात्पर्यपरत्वावधारणाद् विशिष्टवाक्यार्थबोधकत्वमित्यङ्गीकारादेव वक्तुः संकल्पितोऽभिप्रायः सम्पद्यते। तदाह—**यथासंकल्पितोऽभिप्राय इति**।

ननु शुक्लादिविशेषणविशिष्टगवाद्यर्थबोधेऽपि वाक्यार्थबोधो न सम्पन्न इत्याशङ्क्याह—**विशिष्टार्थसम्प्रत्ययश्च वाक्यार्थ इति**। ननु नासम्बद्धात्सामान्याद् विशेषार्थबोधः, अतिप्रसङ्गात्। नाप्येकार्थसमवायादिः, अविशेषादिति चेत् सत्यम्। संयोगसमवायैकार्थसमवायादिर्न सम्बन्धः प्रकृते संगच्छते, तथापि सामान्यविशेषयोरविनाभाव एव सम्बन्धः प्रकृते ग्राह्यः। सामान्यस्य स्वविशेषं विनाऽनुपपद्यमानत्वात् सामान्यसद्भावे विशेषो नियमेन वर्तते इति, नासम्बद्धसामान्यविशेषयोर्गम्यगमकभावः। न च तर्हि अनुमानमेवेदं स्यात्, न शाब्दमविनाभावमूलकत्वादिति वाच्यम्। अविनाभावसद्भावेऽपि अनुमितिकारणैकदेशपक्षधर्मतादिविरहेणानुमानत्वासम्भवात्। कारणसमुदाये तदापत्तिर्नैकदेशात्। न च पक्षधर्मतायाः सम्भवः पदार्थानां पक्षीकरणे तेषामेव च हेतुत्वे हेतुपक्षयोरैक्येन प्रतिज्ञार्थैकदेशतापत्तेः। न च वैशेषिकमते यथा धूमविशेषस्य पक्षत्वं, धूमसामान्यस्य च हेतुत्वं तथा प्रकृतेऽपीति वाच्यम्। वैषम्यात्। तत्र धूमसामान्यस्यातिरिक्तपक्षविशेषान्विताग्निगमकत्वम्, अत्र तु सामान्यमेव वाक्यार्थविशेषान्वितम् आत्मानं गमयतीति प्रतिज्ञार्थैकदेशता दुर्वारैव। न चास्तु तर्हि वाक्यार्थ एव पक्षः, पदार्थश्च हेतुः, पर्वतादिदेशवद् वाक्यार्थस्य पदार्थप्रतीतेः पूर्वं, समकालं वा प्रतीत्यभावेन पक्षत्वासम्भवात्। वाक्यार्थज्ञानस्य पदार्थज्ञानजन्यत्वात्। सम्भवे च नानुमानोपयोगः। फलस्य वाक्यार्थावगमस्यान्यत एवोपपत्तेः पूर्वमेव वाक्यार्थावगमोपपत्तौ पश्चाद्भाविनः पक्षधर्मत्वस्य तत्र मूलत्वानुपपत्तिः।

वस्तुतस्तु वाक्यार्थज्ञाने पदार्थानामहेतुत्वे वाक्यार्थज्ञानानुत्पत्तिरेव तदुत्पादकप्रमाणाभावादिति बोध्यम्।

पदार्थवाक्यार्थयोरन्वयमजानतोऽपि शाब्दबोधो भवति, स च न स्यात्। अपि च वाक्यार्थानामानन्त्यात्तैः सह पदार्थानामन्वयोऽपि असर्वज्ञैः दुर्ज्ञेयः।

न च वाक्यार्थान्तरैः सह गृहीतसम्बन्धेभ्यः पदार्थेभ्यो वाक्यान्तरार्थानुमानमिति शक्यं वक्तुमतिप्रसङ्गात् । वाक्यार्थबोधस्य नियतत्वात् ।

अपि च वाक्यान्तरार्थैः सह गृहीतसम्बन्धेभ्यः पदार्थेम्योऽन्य एवामी पदार्थाः, येभ्योऽयमभिनवो वाक्याथंबोध इष्यते । न चैषु सम्बन्धग्रहः समजनि इति, कुतोऽनुमानं स्यात् । ननु न तत्तत्पदार्थत्वेन पदार्थानां वाक्यार्थेऽन्वयः स्वीक्रियते, येन पूर्वोक्तदोषः स्यात् । किन्तु पदार्थत्वसामान्येन पदार्थानां वाक्यार्थेऽन्वयोऽनुमानम् इति, न पक्षधर्मत्वाद्यनुपपत्तिः । पदार्थविशेषाणां पक्षत्वात् पदार्थत्वसामान्यस्य च हेतुत्वात्, सामान्यस्य च पदार्थविशेषवृत्तित्वात् । मैवम् । वाक्यार्थधियो विशेषविषयकत्वेन सामान्यार्थगोचरत्वानङ्गीकारात्, विशेषे च सम्बन्धग्रहणाभावादनुमानेन तद्भानासम्भवादिति ।

ननु असम्बन्धपदार्थेभ्यो वाक्यार्थबोधस्याभ्युपगमेऽप्रामाण्यं स्यादिति चेत् ? न । असम्बन्धप्रतीतेरपि प्रामाण्याभ्युपगमात् सम्बन्धस्य प्रामाण्यप्रयोजकत्वे राजाज्ञाभावात् । ननु अस्तु प्रामाणमप्रमाणं वेति विचारः प्रतीतिरेव इयमनुपपन्ना सम्बन्धानङ्गीकारे । मैवम् । नहि दृष्टेऽनुपपन्नं नाम । दृश्यते हि दूरदेशवार्तासु विज्ञातेभ्यः पदार्थेभ्यो वाक्यार्थबोधः, आप्तोक्तिनिश्चयेन तत्प्रामाण्यविघातोऽपि न । नच तेषां संसर्गोऽवगतः दूरदेशस्थत्वात् । न च दूरदेशवार्तापरवाक्यप्रामाण्यमपि आप्तोक्तिनिर्णयानुमानाधीनमेवेति वाच्यम् । प्रामाण्यनिश्चयस्य तादृशानुमानाधीनत्वेऽपि प्रामाण्यस्य तदधीनत्वाभावात् । तावतापि तद्बुद्ध्युत्पत्तेरङ्गीकारात् । आप्तत्वानाप्तत्वनिश्चयं विना तद्वाक्यार्थबोधे जाते पश्चादप्रामाण्यशङ्काविधूननायाप्तोक्तिनिश्चयोऽपेक्ष्यते, नतु तादृशवाक्यार्थबोधोत्पत्तये । न हि तत्सत्यत्वनिश्चय एव तद्वाक्यार्थबोधः । किन्तु भिन्न एवेति सत्यत्वनिश्चयात् पूर्वमेव तादृशवाक्यार्थबोध इत्यविवादम् । तथा च सत्यत्वनिश्चयस्यानुमानिकत्वेऽपि वाक्यार्थबोधस्य नानुमानिकत्वमिति स्पष्टमेव लभ्यते ।

न च वाक्यार्थबोधोऽपि आप्तवचनत्वहेतुक एव भवति, आप्तो हि यथार्थवादित्वेनासकृदुपलब्धः, तथा च वर्तमानवचनेऽपि एवमनुमीयते-एतद्वचनं वाक्यार्थबुद्धिपूर्वकमाप्तोक्तत्वात् पूर्वतद्वचनवत् । यद्वा एते पदार्था मिथः

संसर्गवन्तः आकाङ्क्षायोग्यतासन्निधिमत्त्वे सति पदार्थत्वादिति। न ।आप्तस्यापि कदाचिदन्यार्थाभिधित्सया भ्रमादिभिः पदान्तरप्रयोगदर्शनेन व्यभिचारात् । नहि भ्रमप्रयुक्ततादृशवाक्यस्य तद्बुद्धिपूर्वकत्वमनाप्तत्वापत्तेः । न च यः कदाचिदपि नान्यथा वदति स एवाप्तपदेन गृह्यते इति वक्तुं शक्यम्, एतादृशपुरुषरत्नस्य लोके अभावात् । भ्रान्तेः पुरुषधर्मतया शब्दप्रयोगस्य विरलविषयत्वापत्तेर्निर्विषयत्वापत्तेर्वा प्रकृतवाक्ययथार्थज्ञानवत्त्वरूपाप्तत्वस्य प्रकृतवाक्यार्थबोधोत्तरकालिकत्वेन हेतुत्वासम्भवात् ।

एवमुत्तरानुमानेप्यनाप्तवाक्ये नद्यास्तीरे पञ्च फलानि सन्तीत्यादौ व्यभिचारः स्फुटः । तस्मादाप्तानाप्तसाधारणवाक्यश्रवणसमनन्तरं वाक्यार्थबोधोदृश्यमानः शाब्द एव, नानुमानिकः, त्रिलक्षणलिङ्गजन्यत्वाभावात् । अतः प्रमाणान्तरमेव शाब्दं नानुमानिकमिति सिद्धम् ।

ननु तथापि असम्बद्धेभ्यः पदार्थेभ्यो वाक्यार्थबोधो जायते इति बुद्धौ नाधिरोहति, तथा प्रतिपत्तिप्रकाराप्रतिपादनादिति चेत् ? सत्यम् । तादृशः प्रकारो न प्रतिपादितः, इदानीं स प्रतिपाद्यते, तदित एवावहितेनाधिगम्यताम् । भावनावाचकशब्दस्तावल्लोकवेदयोरविशेषं भावनां स्मारयति, नात्र कस्यचिद्विप्रतिपत्तिः । न च यजेत पचेत इत्यादौ भावनावाचको धातुः प्रत्ययो वेति निर्णयो न सुलभः, बहुविदामत्र विवाददर्शनादिति वाच्यम् । अन्वयव्यतिरेकाभ्यां भावना आख्यातवाच्येति निर्णयस्य सुलभत्वात् । यजते पचते इत्यादावाख्यातसत्त्वेन भावना प्रतीयते इति भावनाख्यातयोरन्वयः ।

यागः पाक इत्यादौ आख्यातविरहान्न भावनाप्रत्यय इति, तयोर्व्यतिरेकः । धातुना सह नैकान्ततोऽन्वयः, यागपाकादौ सत्यपि धातौ भावनाप्रतीतिविरहान्न भावना धात्वर्थः, अन्यथा अत्रापि तत्प्रत्ययापत्तेरित्येके ।

अन्ये तु न केवलाख्यातप्रत्ययो भावनावाचकः स्वातन्त्र्येण तत्प्रयोगाभावात्तेनैवान्वयग्रहणायोगात्, किन्तु तत्समभिव्याहृते धातावेव, तत्रापि धातावेव शक्तिः आख्यातसमभिव्याहारोऽभिव्यञ्जक इति, न यागपाकादौ तत्प्रतीतिरभिव्यञ्जकविरहादित्याहुः ।

समुदायेनैव सहान्वयव्यतिरेकदर्शनात्प्रकृतिप्रत्ययसमुदाय एव भावनावाचक इत्यपरे। यागपाकादौ सत्यपि धातौ भावना न प्रतीयते। अस्ति भवतीत्यादौ सत्यप्याख्यातप्रत्यये भावना न प्रतीयते इति, यजेत पचेतेत्यादौ समुदायेनैवान्वयव्यतिरेकौ भावनावाचकत्वनिर्णायकौ एतन्मते साधु संगच्छते इति द्रष्टव्यम्।

ननु भावनावाचकत्वनिर्णयो न सुलभ इति यथाशङ्कितं, तदेवापन्नं तद्विवेकोपायाभावादिति चेत्, आपततु तदेव। किं तद्विवेकेन नः प्रयोजनम्, धातुर्वाऽऽख्यातप्रत्ययो वा विशिष्टो वा वाचकः। सर्वथा यजेत इत्यादौ भावना प्रतीयते इत्यविवादमेतावतैव नः प्रयोजनमुपपद्यते।

तथाहि "यजेत" स्वर्गकाम इत्यादौ प्रतीयमाना भावना साध्यं साधनम्, इतिकर्तव्यतां च सामान्यत आक्षिप्य तद्विशेषमन्यतोऽभिकाङ्क्षति, निष्पन्ने कामनाविरहात् कमिपदसमभिव्याहारेण कामनाविषयत्वेन प्रतीयमानः स्वर्गः साध्यतयाऽवगतो भावनामपेक्षते। तथा च साध्यसाधनमपेक्षमाणयोः स्वर्गभावनयोर्योग्यत्वसन्निधिबलेन परस्परमन्वयो ज्ञायते, ततः साध्यांशलाभेन तदंशे निरपेक्षा साधनमपेक्षमाणाऽवतिष्ठते।

एवं स्वसाधनं च न धात्वर्थातिरिक्तं किञ्चित्। यदपि गोदोहनेनापः प्रणयेदित्यादौ गोदोहनादीनां भावनाङ्गत्वं श्रूयते, तत्रापि न तेषां स्वरूपेण, किन्तु प्रणयनादिधात्वर्थोपरागेणैवेति, धात्वर्थ एव तत्साधनं, सोऽपि यागादिः करणत्वबोधकतृतीयादिविभक्तिविरहेऽपि स्वभावतो भावनया करणत्वेन सम्बद्धः तद्द्वारा फलमपेक्षते, साधनस्य साध्यांशे उत्थिताकाङ्क्षत्वात्। न च भिन्नपदोपात्तत्वेन सन्निहितत्वात् धात्वर्थस्यैव साध्यत्वेन भावनायामन्वयः किन्न स्वीक्रियते इति वाच्यम्। कष्टं कर्मेति न्यायेन धात्वर्थस्य यागादेः पुरुषार्थत्वाभावेन फलत्वासम्भवादिति, साधनस्वरूपेणैवोपतिष्ठते यागेन भावयेदिति। यागेन किं भावयेदित्यपेक्षा भावनान्वयेप्यस्त्येवेति योग्यत्वादिप्रत्यासत्तिनिमित्तः स्वर्गयागयोः सम्बन्धः स्वीक्रियते यागेन स्वर्गं भावयेदिति।

**यागस्य करणत्वोपपादनम्**

ननु कथं यागस्य करणत्वेनान्वयः, तद्बोधकतृतीयाविभक्तिविरहादिति

चेत् ? न । करणत्वस्य तृतीयाविभक्तिव्याप्यत्वानङ्गीकारात् । तन्निर्णायकप्रमाणसत्त्वे तृतीयाविभक्तिविरहस्याकिञ्चित्करत्वात् । न च तृतीयार्थसद्भावे किमिति सा नोत्पन्ना, प्रातिपदिकत्वाभावादिति गृहाण । न हि तदुत्पत्तौ तदर्थसद्भाव एव नियामकः, प्रातिपदिकसंज्ञाया अपि तन्नियामकत्वात् । प्रातिपदिकसंज्ञा च तद्विधायकसूत्रेऽधात्विति पर्युदासान्नभवतीति यागेनेत्यत्रेव यजेदित्यादौ न सा । यजेतेत्यादिविधिवाक्यसामर्थ्यलब्धयजिकरणत्वस्य प्रयोगाभावेन तृतीयान्तयजिना व्याकर्तुमशक्यतया कृत्यप्रत्ययान्तेन यागेन स्फुटीकरणमिह बोध्यम् ।

**प्रयाजादीनामितिकर्तव्यतात्वनिरूपणम्**

एवं प्रयाजादीनामपि कथंभावापेक्षया भावनया सम्बन्धो बोध्यः । फलोपायमात्रापेक्षित्वाद् भावनायाः, उपायश्च कश्चित् स्ववाचकपदेनोपात्तो, यथा यागादिः । कश्चिच्च पदान्तरेणोपात्तो, यथा प्रयाजादिः । अस्यापि साध्यापेक्षित्वाद् भावनाद्वारा स्वर्गादिरूपफलसम्बन्धो बोध्यः । पदवाक्ययोरपि परस्परापेक्षितत्वात् विश्वजिदादिवन्नादृष्टस्वर्गकल्पना, तदापेक्षया प्रत्यासत्तिवशेन फलवद्भावनांशकरणानुग्रहस्यैव न्याय्यत्वात् । स्पष्टीभविष्यति चैतत्प्रकरणाधिकरणे इति ।

**साध्य-साधनादीनां भावनान्वयमुखेन पार्ष्ठिकबोधे परस्परान्वयकथनम्**

ननु भावनान्वयिनां साध्यसाधनादीनां कथं मिथोऽन्वयः ? मिथोऽन्वये वा कथं भावनान्वयः ? उभयत्रान्वयाभ्युपगमे वाक्यभेदापत्तेरिति चेत् ? सत्यम् । प्रथममेकस्यामेव भावनायां साध्यसाधनेतिकर्त्तव्यतानामन्वयः । पश्चात्तेषामुपकार्योपकारभावेन परस्परमन्वयः । करणं साध्यस्योत्पत्त्युपकारं करोति इतिकर्तव्यतानुकरणस्य फलजननसामर्थ्यमिति तयोर्भेदः । साध्यमपेक्षमाणा भावना तेनान्विता सती न स्वरूपेण साधनमपेक्षते, किं साधनमिति किन्तु फलोपरक्तसाधनत्वेन किमेतफलस्य साधनमिति । एवमितिकर्तव्यतापि न स्वातन्त्र्येण भावनायां साकाङ्क्षा, केन फलं भावयेदिति, किन्तु साधनोपरक्तरूपेण कीदृशेन व्यापारेणेदं साधनं फलजननसमर्थं स्यादिति । तथा च न वाक्यभेदः साध्यसाधनोभयांशविशिष्टभावनायाः स्वर्गादिफलं प्रति विधानादिति ।

एवं गामानय शुक्लामित्यादावेकानयनक्रियान्वितयोः गोशुक्लयोः परस्परसम्बन्धाविच्छेदेनैवानयनक्रियायामन्वयः। न च जातिगुणोभयाश्रितद्रव्यस्यैवानयनक्रियायामन्वयो जातिगुणयोरिति कथं तयोरेकक्रियान्वयितयैकवाक्यत्वम् इत्थं शुक्लो गौरित्यादौ गोत्वजातिर्यादृशगवादिव्यक्तिं परिच्छिनत्ति, तादृशीमेव शुक्लगुणोपि इत्युभयमेकाश्रयपरिच्छेदकत्वेनानयनक्रियायामन्वेतीति जातिविशेषणात्वं गुणस्योपपद्यते इति। ननु गोत्वशुक्लत्वयोरेकाश्रयकत्वे सिद्धे तादृशाश्रयद्वारा तयोर्मिथः सम्बन्धः स्यादपि, तदेव तु न सिद्धचति, साधकाभावात्। न चैकानयन क्रियान्वयः साधकः, एकद्रव्याश्रयत्वे एकक्रियान्वयस्तस्मिन् एकद्रव्याश्रयत्वे एकक्रियान्वयस्तस्मिन् एकद्रव्याश्रयत्वमिति परस्पराश्रयात्। मैवम्' अत्रहि आनयनक्रिया प्रधानभूता गोत्वशुक्लत्वाभ्यामवरुद्धा अतज्जातीयमतद्गुणकं चाश्रयमनपेक्षमाणा श्रुतौ गोत्वशुक्लावेकस्मिन्नाश्रये नियमतोऽपेक्षते इत्यरुणाधिकरणे वक्ष्यमाणत्वात्। किं च जातिविनियोगे भवतीदृशी जिज्ञासा किं गुणकं द्रव्यमनया जात्या परिच्छेत्तव्यं, तथा गुणेऽपि कीदृग् जातिविशिष्टमनेन परिच्छेत्तव्यमिति, द्वयोः श्रुतत्वात् परस्परसम्बन्धेऽतीवोपकार इति, मिथः सम्बन्धाज्जात्यन्तरगुणान्तरव्यवच्छेदः पदात्साक्षादप्रतीयमानोऽपि- अर्थादेव फलति। नह्यस्ति सम्भवो यच्छुक्लगुणेन सहैकानयनादिक्रियायामन्वितस्य गोत्वस्य नीलगुणादिभिः ससर्गः। वस्तुतो गोत्वं न नीलादिव्यावृत्तं, स्वरूपेण तत्रापि सत्त्वात्, किन्तु, शुक्लो गौरानीयतामिति वाक्यस्य नीलाद्यसंकीर्णगोत्ववृत्तिरेव नीलादिव्यवच्छेद इति ध्येयम्।

**संसर्गो वाक्यार्थः न तु भेद इति कथनम्**

स्वतोऽसम्बद्धानां पदानामेकक्रियासम्बन्धादेकवाक्यत्वं क्रियाद्वारा एषां परस्परसम्बन्धे सिद्धे, यद्यपि पदार्था अनेकवाक्यार्थगामितया अनियताः, तथापि ततः एव सम्बन्धान्मिथो व्यवच्छिन्नत्वेन प्रतीयन्ते इति, तैर्नियमेनैकवाक्यार्थावगति जायते। तथाहि, यत्र गामानय शुक्लामिति वाक्यं प्रयुज्यते, तत्र गामिति द्वितीयान्तपदेन गोः कर्मत्वमुच्यते, तच्च यत्किञ्चिद् योग्यक्रियानिरूपितं नत्वानयनक्रियानिरूपितमेव, अन्यत्रापि तत्प्रयोगदर्शनात्। तथा आनयतिरपि आनयनमात्रमभिधत्ते, तच्चा-

नयनं गवाश्वव्यक्तिसाधारणं लक्षयति । नतु गवानयनमेवान्यत्रापि तत्प्रयोगदर्शनात् । एवं शुक्लामित्यपि शुक्लगुणां यां काञ्चिद् व्यक्तिं, नतु गोव्यक्तिमेव । तत एव मिथः सम्बन्धात्तु गामिति यां व्यक्तिं गोकर्मत्वेन बोधयति । आनयतिरपि तत्कर्मिकामानयनजातीयां लक्षयति, शुक्लपदमपि तामेव शुक्लगुणकत्वेन बोधयतीति, गोशुक्लानयनैः समुदिते विशिष्टे एकस्मिन् बोधिते गोत्वजातिरानयनक्रियातिरिक्तक्रियातः, शुक्लगुणातिरिक्तगुणतो, व्यवच्छिन्ना आनयतिक्रियापि गोत्वातिरिक्तजातितः शुक्लगुणातिरिक्तगुणतः, शुक्लगुणो जात्यन्तरात् क्रियान्तराच्च व्यवच्छिन्नः प्रतीयते इति, नियतैकवाक्यार्थबोधः सम्पद्यते इति ।

यद्यपि प्रत्यासत्तिवशेन समानप्रत्ययोपात्तां भावनामेव विधिर्विधातुं शक्नोति, नेतरांशं विप्रकर्षात्, तथापि अपरिपूर्णत्वात्तावन्मात्रस्य विधानेऽनुष्ठेये कर्मणि पुरुषप्रवर्तकत्वं विधेर्न स्यात्, साध्यसाधनसम्बन्धं विना भावनामात्रेण पुरुषप्रवृत्तेरशक्यत्वात् इत्यतो योग्यतादिवशेन साध्यसाधनेतिकर्त्तव्यताविशिष्टैव पूर्णा भावना विधीयते पुरुषप्रवर्तनानुरोधादिति दिक् ।

**उपसर्गाणां वाचकत्वपक्षः**

एवमुपसर्गनिपातानामपि स्वातन्त्र्येण प्रयोगादर्शनाद् द्योतकत्ववाचकत्वविवादेऽपि वाक्यार्थबोधोपयोगितयाऽर्थवत्त्वमस्त्येव । नहि स्वातन्त्र्येण प्रयोगदर्शनमेवार्थवत्त्वे नियामकं, स्वादीनामर्थवत्त्वस्य सर्वसम्मतत्वात् । तेषां च न स्वातन्त्र्येण प्रयोगः, केवलानां प्रयोगस्यासाधुत्वात् । आपिङ्गलः प्रवया वृक्षःप्लक्षश्चेत्यादावितरसमभिव्याहारे एषामर्थवत्त्वं स्पष्टमेव लभ्यते, आङादिसमभिव्याहारे ईषदाद्यर्थप्रतीतिः, तदसमभिव्याहारे तदर्थाप्रतीतिरित्यन्वयव्यतिरेकसद्भावात् तत्रेषदर्थादयः साक्षान्नाम्नैव सम्बन्धमनुभवन्ति ईषत् पिङ्गल आपिङ्गल इति । प्रादयस्तु क्रियाद्वारेण प्रगतं वयो यस्य, स प्रवया इति यथा क्वचिच्च प्रकृष्टत्वाभिमुखत्वादीनामिति कर्तव्यतया भावनायां विधानमनुष्ठानं च । यथा प्रवयसे दक्षिणां दद्यादभिक्रामं जुहोति इत्यत्र ।

ननु प्रतिष्ठते इत्यादौ स्थाधात्वर्थगतिनिवृत्तिविपरीतप्रस्थानार्थबोधकप्रादीनां कथं धातुसम्बन्धस्तदर्थालापकत्वात् ? सत्यम् । नेदृशार्थका धातु

विशेषणं, किन्तु एते धातुभागसमा एव समुदितस्य प्रतिष्ठतेर्गमने शक्तिः, अश्वकर्णवत्, नतु स एव धातुरुपसर्गसहितः, किन्तु स्थितौ प्रतिष्ठितिरन्य एव, द्वयोरर्थभेदात् । एकत्वे तु प्रोपसृष्टादपि स्थाधातोर्गतिनिवृत्तिबोधः स्यात् । न चैवं दृश्यते । तस्मादन्य एव । यद्यपि एकस्यैव धातोस्तादृशार्थ-द्वये शक्तिरिति स्वीकारेऽपि उपसर्गस्यार्थविशेषद्योतकत्वेन प्रशब्दश्रवण-वेलायां गतेरन्यत्र तन्निवृत्ते र्बोध इति नानुपपत्तिरापत्तिर्वा । तथापि वृत्ति-द्वयकल्पनापेक्षया समुदायशक्तिकल्पनमेवोचितम्, एवं सति अन्वयव्यतिरेका-वपि सुखेनोपपद्येते इति बोध्यम् । न चोपसर्गाणां धातुभागत्वे पृथगुपादानं किमर्थम् ? प्रातिष्ठत प्रातिष्ठिपदित्यादावुपसर्गात्पूर्वमडादिव्यावृत्तये नामत्वेन तेषां पृथगुपादानात् । एवं प्रलम्बतिरपि लम्बतेरन्य एवेति ।

### द्योतकत्व पक्षः

द्योतकतावादिनस्तु एकस्यैव धातोस्तत्तदुपसर्गवशेन भेदस्वीकारे शक्त-तावच्छेदकादीनां भेदेन तत्र तत्र शक्तिकल्पनायां गौरवं स्यादिति स्थाधातोः क्रियासामान्ये शक्तिः क्लृप्तैव, केवलं प्रादिसमभिव्याहारे क्रियाविशेषे शक्तिः कल्पनीया प्रशब्दविशिष्टस्य क्रियाविशेषवाचकत्वे तु प्रशब्दे सामान्ये विशेषे च शक्तिरक्लृप्तैव कल्पनीया स्यादिति द्योतकत्वे एव लाघवमित्याहुः ।

ननु द्योतकत्वस्वीकारे प्रतिष्ठते इत्यादौ प्रादेः कथं विशेषणत्वम् ? विशेषणं हि विशेष्यार्थमत्याजयत् विशेषे पर्यवस्थापयति, नीलोत्पलमित्यादौ तथा दर्शनात्, नहि नीलं स्वार्थात्प्रच्याव्योत्पलपदमर्थान्तरे व्यवस्थापयति, किन्तु स्वार्थविशेषे एव, प्रादिस्तु अर्थान्तरे धातुं व्यवस्थापयतीति चेत् ? सत्यम् एषां धातोः शक्तयन्तराभिव्यञ्जकत्वेनैव विशेषणत्वादित्यन्यत्र विस्तरः ।

### नञर्थनिरूपणम्

अथास्तु उपसर्गादेरेवं शब्दसम्बन्धः, वस्तुरूपविरुद्धविकल्पप्रतिषेधा-दिबोधकस्य नञादेः कथं शब्दान्तरेण सम्बन्धः, सदात्मना निरूपितस्य तदानीमेवासद्भावेन निरूपयितुमशक्यतया सम्बन्धद्वाराभावादिति चेत् ? अत्रोच्यते । नञर्थस्तावद्द्विविधः पर्युदासोऽभावः प्रतिषेधश्च । तत्राद्यो-ऽब्राह्मणानीक्षणादौ नाम्ना सम्बद्धेन नञा ब्राह्मणभिन्नः क्षत्रियादिः, धातु-

सम्बद्धेन नेक्षेतोद्यन्तमादित्यभित्यादौ तेनेक्षणविरोध्यनीक्षणसंकल्पश्च वस्तुस्वरूप एव प्रतिपाद्यते। तत्र वस्त्वन्तरप्रतिषेधोवस्त्वन्तरानुगुण एव सर्वस्य परस्पराभावात्मकत्वात्।

यत्र चाख्यातेन नञः सम्बन्धान्नास्ति नासीन्न भविष्यतीत्यादौ निवृत्त्यात्माऽभावोऽर्थः, तत्रापि न वस्त्वभावः नञा क्रियते, किन्तु संशयाज्ञानविपर्ययमात्रनिवृत्तिः। घटोस्ति नास्ति वेति सन्देहे सति, घटो नास्तीत्युक्त्या पाक्षिकास्तित्वबुद्धिर्निवर्तते।

अथवास्तित्वबुद्धिनिवृत्तिरपि साक्षान्न क्रियते, किन्तु घटो नास्ति इति कथिते विरोधादस्तित्वबुद्धिः स्वयं निवर्तते। एवमज्ञानविपर्ययवारणमप्यत्र यस्य तत्र घटनास्तिताज्ञानं नास्ति, किम्वा घटास्तित्वबुद्धिरेव विपर्ययरूपास्ति, तं प्रति तत्र घटोनास्तीत्युक्त्या तदज्ञानविपर्ययौ निवर्तेते, तदेवमज्ञानादिवारणं प्रत्यक्षस्थलेऽपि दृष्टमेव। यथाऽयं स्थाणुरिति ज्ञाने जाते, स्थाणुर्वा पुरुषो वेति सन्देहः, पुरुष एवेति विपर्ययः, स्थाणोरज्ञानञ्च निवर्तते। तथा नञोऽपि प्रमाणत्वात्ते निवर्तन्ते इति न कश्चिद्विशेषः।

न चाभावस्तुच्छात्मा न कश्चिद्वस्तुविशेषोऽयमेव च नञोऽर्थ इति कथ्यते। तथा चानर्थकत्वमेवैतस्येति कथं पदान्तरेण समभिव्याहारः स्यादिति वाच्यम्। अभावस्य वस्तुत्वं पूर्वमेव प्रतिपादितमित्यभावार्थकस्य नञो घटादिपदवदनर्थकत्वाभावात्। न चाप्राप्तस्य प्रतिषेधायोगात् प्राप्तस्यैव प्रतिषेधो वाच्यः, तथा च प्रमाणान्तरेण प्राप्तस्य कथं प्रतिषेधः विरुद्धयोर्भावाभावयोरेकत्र समुच्चयासम्भवादिति चेत्?

क एवमाह? विधायकेन सम्बन्धाभावान्नञः प्रतिषेधविधायकत्वानङ्गीकारादभावस्वरूपमात्रमनेन कथ्यते। अत्र च न प्राप्तेरुपयोगः अप्राप्तस्यैव घटादेरभावो घटो नास्तीत्यनेन बोध्यते इति। नन्वेवमपि सदर्थवाचिना घटशब्देनाभाववाचिनो नञः सम्बन्धो न घटते सृष्टिप्रलययोरिव विरुद्धार्थकत्वादिति चेद्? भवेदेवं यदि घटपदं सत्त्वेन घटं बोधयेत् तत्तु नाभ्युपगम्यते, किन्तु सत्त्वासत्त्वोदासीनं घटस्वरूपमात्रं बोधयति, घटश्च प्रादेशिकः क्वचित्सत्त्वेन वर्तते क्वचिदसत्त्वेनेति। सत्त्वासत्त्वोभयसाधारणं घटसामान्यं घटपदाभिधेयम्। अतएव घटोऽस्ति, घटो नास्ति इत्युभयविधः

प्रयोगः सङ्गच्छते । अन्यथा सत्त्वेन घटस्य तत्पदाभिधेयत्वे घटोऽस्तीति प्रयोगो न स्यादुभयोः सत्त्वार्थकत्वेन तदभिधेयत्वे घटो ना स्तीत्यपि न स्यात्तत एवेति बोध्यम् ।

न च भवन्मते जातेरेव पदार्थतया, तस्याश्च नित्यत्वेन कदाचिदपि नासत्त्वमिति, कथं सत्त्वासत्त्वसाधारणत्वं कस्यचिदपि जातौ सत्त्वासत्त्वविवक्षा विरहात्तदुपलक्षितव्यक्तितात्पर्येणैव तदुभयप्रयोगदर्शनात्तदभिप्रायेण तथोक्तेः, एवं च श्रुतायां जातौ नास्तित्वतात्पर्येण नास्तीति प्रयोगाभावात्, व्यक्तितात्पर्येण तादृशप्रयोगसत्त्वेऽपि तस्या अश्रुतत्वान्न विरोधगन्धोपीत्यपरमनुकूलम्।

न च यत्र घटोस्तीत्यनेन पूर्वं सत्त्वेन घटं प्रदर्श्य पश्चात्तदसत्त्वबोधनाय घटो नास्तीति प्रयुज्यते, तत्र विरोधात्कथमुभयविधः प्रयोग इति ? विवक्षाभेदेन तदुभयोपपत्तेः । तथा हि यत्र घटोस्तीत्यनेन घटसत्त्वं प्रतिपाद्य पश्चान्नास्तीत्यनेन तदसत्त्वं प्रतिपाद्यते, तत्र तयोर्नैकवाक्यत्वं, किन्तु घटसत्त्वप्रतिपादकं घटोस्तीत्येकं वाक्यं, तदसत्वप्रतिपादकं घटो नास्तीत्यपरं वाक्यम् । तथा घटोऽस्तीत्येद्वाक्यजन्यज्ञानस्य घटो नास्तीत्येतद्वाक्यजज्ञानेन बाध एव भवति । यथा शुक्तिशकले इदं रजतमितिजातस्य ज्ञानस्योदीच्येन नेदं रजतमिति ज्ञानेन बाध इति न विरोधः ।

अथवा भ्रान्त्या घटसत्त्वमवगच्छता घटोऽस्तीति वाक्यं प्रयुक्तं, भ्रान्त्यवगतं सत्त्वमेवैतद्वाक्यम् अनुवदति । पश्चात्तदभावमधिगत्य भ्रान्तिप्रसक्ततत्सत्त्वापनोदाय घटो नास्तीति प्रयुज्यते । पूर्वं भ्रान्त्यावगतो यो घटः, स वस्तुतो नास्तीति । एवञ्च नानयोर्विरोधः भ्रान्तिप्रतिपन्नसत्त्वेन वास्तविकासत्त्वस्य विरोधाभावात् । नहि शुक्तिशकले भ्रान्तिप्रतिपन्नस्य रजतसत्त्वस्य पारमार्थिकेन तदसत्त्वेन विरोधः, कल्पितत्वाद् रजतसत्त्वस्येति ।

अथवा कालभेदादुभयोरविरोधः घटोऽस्ति इति वाक्यं पूर्वकाले घटसत्त्वं बोधयति, घटो नास्तीत्येतद्वाक्यन्तु तदुत्तरकाले तदसत्त्वं बोधयति, पूर्वकाले गृहीतो यो घटः स इदानीं नास्तीति । तथा च भिन्नविषयत्वान्नानयोर्विरोधः, विषयभेदश्च कालकृत इति ।

ननु यत्र 'न हन्यान्न पिबेदित्यादो विधिना नञः सम्बन्धः, तत्र विरोधो दुर्वार एव । प्रकारान्तरेण प्राप्तस्यैव प्रतिषेधो वक्तव्यो नाप्राप्तस्य

विधिवैयर्थ्यापत्तेः । हननपानादिप्राप्तिश्च रागादेव स्वीकार्या वचनप्राप्तस्य वचनेन बाधायोगाच्छास्त्रद्वयप्रामाण्याय तत्र विकल्प एवेति सिद्धान्तात् । तथा च रागप्राप्तयोर्हननपानयोरभावं कथं नञ् बोधयेत् ? यदि वस्तुतः पुरुषेण हननं पानं वा कृतं तथा अनुष्ठितस्य हननस्य पानस्य च सत्ता जातैवेति, कथं तदभावः शक्यते वक्तुम् । यदि वा न हननपानेप्रवृत्तः, तदा प्राप्त्यभावात् प्रतिषेधानर्थक्यमित्युभयतः पाशारज्जुरिति चेत् ? अत्रोच्यते । यथा पचति, न पचति, पक्ष्यति, न पक्ष्यतीत्यादीनां यथावस्थित-भावाभावगोचरत्वेन सत्यत्वं, मिथ्यात्वं च भवति, तथा न विधिनिषेध-बोधकवाक्यानां यथावस्थितभावाभावबोधनाय प्रवृत्तिः । यतः, तद्वदेव सत्यत्वं मिथ्यात्वं वा स्यात्, किन्तु अन्यादृशी प्रवृत्तिः । विधिर्हि कृतिसाध्येष्ट-साधने तद्विषयकानुष्ठानसंकल्पं जनयन् पुरुषं प्रवर्तयति विधिरेव विधेयस्येष्ट-साधनभावे प्रमाणञ्च भवति । एवं निषेधोऽपि अनिष्टकर्मणस्तद्विषयकान-नुष्ठानसंकल्पं कारयन् पुरुषं निवर्तयति, स्वयञ्च तस्यानिष्टसाधनभावे प्रमाणीभवति, अभावं व्यवस्थापयति च । तथा च प्रतिषेधेषु रागादिप्राप्त-हननपानादिकर्तव्यतारूपविध्यर्थो लिङा विधीयते, उभयथापि हननपानादि-व्यापारस्यानिष्टसाधनत्वबोधनात्तदनुष्ठानसंकल्पजननेन विरोधान्निराकरणं साधु सङ्गच्छत इति न विरोधशङ्कालेशोऽपि इति ध्येयम् । विकल्पविरोधोपि अनयैवरीत्यानिराकरणीयः ।

विधिनिषेधविषये भवन् विकल्पोऽपि विधेये इष्टसाधनत्वबोधनद्वारा तत्र पुरुषं प्रेरयति, प्रतिषिद्धेऽनिष्टसाधनत्वबोधनद्वारा तद्विषयकानुष्ठानविरोधि-संकल्पजननेन ततो निवर्तयति इति न नञो विधिसमभिव्याहारे काचिदनु-पपत्तिः ।

**विरोधपरिहारः**

ननु विधिनिषेधयोः प्रेरणनिवारणबोधकयोर्भिन्नविषयत्वाद् माभूद् विरोधः, प्रेरणनिवारणोभयकार्यकारिणो विकल्पस्य स्वात्मनैव विरोधः स्फुटः, प्रवृत्तिनिवृत्त्यौपयिकार्थद्वयकरणाद् वाक्यभेदश्च । कथं तदेवेष्टसाधन-त्वेनानुष्ठेयं, तदेव चानिष्टसाधनत्वेन नानुष्ठेयमिति शक्यं प्रतिपत्तुम् ? एकं प्रति तदेकस्य युगपदिष्टसाधनत्वमनिष्टसाधनत्वञ्च कोऽविकलवाचा बोधयेत् प्राप्तस्य

प्रतिषेधः अप्राप्तस्य तु विधानम्। नहि निषिषेधयिषया तदेव प्राप्तं, विधित्सया च तदेवाप्राप्तमिति शक्यं वक्तुं, युगपदेकत्र प्राप्त्यप्राप्त्योर्विरोधादिति चेत् ? न ।

युगपद्विरोधेऽपि कालभेदेन विधिनिषेधयोः समावेशेन विरोधाभावात् । एवञ्च न वाक्यभेदोऽपि, विकल्पो हि कदाचित्प्रेरयति, कदाचिन्निवर्तयति यदा च प्रेरयति, तदा तदनुकूल एव वाक्यार्थः । यदा चासौ निवर्तयति, तदा निवृत्यनुकूल एव वाक्यार्थं इति, सकृदुभयानुकूल वाक्यार्थाकरणान्न दोषः ।

एवमनुष्ठानमपि नाशक्यं, पर्यायेण तदुभयानुष्ठानस्य कर्तुं शक्यत्वात्, सकृदनुष्ठानस्य चाबोधनात् । स्थाणुर्वा पुरुषो वा, याति न यातीत्यादौ तु न विकल्पः, परिनिष्ठिते वस्तुनि विकल्पासम्भवात् । किन्तु सन्देहमात्रकथनाय तथा प्रयोग इत्यलमतिप्रपञ्चेन ।

**अधिकरणार्थस्योपसंहारः**

तस्मात् पदैः पदार्थाः प्रतिपाद्यन्ते, प्रतिपादितैश्च पदार्थैर्वाक्यार्थबोधः सम्पद्यते इत्येव मार्गः । पदानां क्रियार्थेन समाम्नायो न तत्स्वरूपप्रतिपिपादयिषया, तत्स्वरूपाणां प्रमाणान्तरसिद्धत्वात्, किन्तु वाक्यार्थबुबोधयिषयेति, अभिधावृत्तेः पदार्थोपस्थापकत्वेन क्षीणत्वेऽपि तात्पर्यवृत्तेरपर्यवसानात्, तत एव वाक्यार्थः, पदार्थप्रतिपादनन्तु अवान्तरव्यापारः, पाके काष्ठानां ज्वाला इवेति युक्तम् । तेषां क्रियावाचकपदेन सह समभिव्याहार इति । तस्मात् सुष्ठूक्तं सूत्रकृता—**क्रियार्थेन समाम्नाय इति ।**

ननु वाक्यार्थबोधमात्रे यदि क्रियावाचकपदेन सह पदानां समाम्नायो हेतुतयाऽपेक्ष्यते, तर्हि कथं भाष्यकारः क्रियाशून्यमेव शुक्लो गौरिति वाक्यार्थमुदाजहार इति चेत् ? सत्यम् । उदाहरणस्यानादरणीयत्वात् । पदार्थसम्बन्धप्रदर्शनतात्पर्यपरत्वेन तदुपपत्तेः । निष्प्रयोजनवाक्यप्रयोगादर्शनात् क्रियावाचकपदं विना वाक्यस्य प्रयोजनक्षमत्वासम्भवादिति तत्राप्यानीयतामित्यध्याहारः द्वारमितिवद्वाक्यैकदेशे वाक्यप्रयोगः इति भावः ।

वाक्यार्थबोधं प्रति पदार्थानां कारणत्वावधारणाय अन्वयव्यतिरेकमाह **अपि चेति** । वार्तिके तु यत्तु श्रौतः पदार्थो न वाक्यानुरोधेनेति भाष्यं

व्याख्याय प्रतिपदिकादुच्चरन्तीति भाष्यं याख्यातं ततोऽन्वयव्यतिरेकाभ्यामिति भाष्यं व्याख्यातम् । तेन ज्ञायते कलिकातामुद्रितपुस्तके भाष्यक्रमोऽन्यथयित: । वार्तिककारस्य व्युत्क्रमेण भाष्यव्याख्याने बीजाभावात् । मया तु यथापाठं भाष्यं व्याख्यायते तत्क्रमपरिवर्तनावसरे एतत्क्रमोऽपि परिवर्तित: स्यात् । एवं पूर्वत्रापि बोध्यम् । पदार्थावगमव्यतिरेके वाक्यार्थावगमव्यतिरेकं दर्शयति—**कदाचिदिति । अपघातादिति** । अपचारादित्यर्थ: । वस्तुतस्तु **अपचारादित्येव भाष्यपाठ:**, न्यायरत्नाकरे तथैव दर्शनादिति । अपचार: विषयान्तरासक्ति: । यथा चेदृशस्थले पदश्रवणेऽपि पदार्थावगमाभावादेव वाक्यार्थबोधो न जात इति पदार्थावगमव्यतिरेके वाक्यार्थावगमव्यतिरेक: स्फुट: । नन्वत्र पदावगमव्यतिरेकोऽप्यस्ति, यत: क्षणान्तरेऽवहितो ब्रूते नाहमेतदवादीधरम् मनोऽन्यत्र मेऽभूत् तत्पुनर्ब्रूहीति । पदावधारणे तु तत एव पदार्थस्मरणसम्भवात् पुनर्ब्रूहीत्यसङ्गतं स्यादित्यत आह—**अपि चेति** ।

शुक्लं किञ्चित्पदमपरिस्फुटं दूरादुपगच्छन् तत्रैव प्रदेशे हेषया—अश्वासाधारणशब्देनाश्वं तत्खुरशब्देन गतिं चानुमिमान: तत्रेदृशान्यवस्तूनामनुपलम्भात् गुणजातिक्रियाणां शुक्लाश्वत्वगतीनाम् एकत्रान्वयसापेक्षाणां योग्यानां मिथोऽन्वयमुपगच्छति श्वेतोऽश्वो धावतीति । तथा चात्र पदानामश्रवणेऽपि योग्यताकाङ्क्षासन्निधिवशात्पदार्थानां सामान्यतोऽन्वयबोधनक्षमत्वं क्लृप्तमेवेति केवलमर्थापत्त्या तद्विशेषनियम: कल्प्यते । तथा च मानसापराधस्थले पदार्थज्ञानाभावादेव वाक्यार्थावगमाभावो न पदावगमाभावात्, सत्यपि पदग्रहणे पदार्थापरिज्ञाने वाक्यार्थबोधस्य कुत्राप्यजननादिति भाव: । पदार्थज्ञाने सत्येव वाक्यार्थबोधात्तस्यैव हेतुत्वं युक्तमित्यभिप्रायेणाह—**तस्मादिति** । वाक्यार्थेन वाक्यशक्तिरस्तीत्याह—**नास्येति** । पूर्वोक्ताक्षेपं निराकर्तुमनुवदति—**यत्तु श्रौत: पदार्थ इति** । प्रबलया गोपदश्रुत्याऽविशेषेण सर्वगवीषु प्रसक्ताया गोत्वबुद्धेर्दुर्बलेन शुक्लादि समभिव्याहारवाक्येन नीलादिव्यक्तिविशेषादपवृत्तिरयुक्तेत्याशय: शङ्कितु: ।

समाधानमाह—**यत्रेति** । अयम्भाव:—शुक्लो गौरित्यादौ शुक्लगोत्वादीनां पदार्थानां परस्परासम्बन्धे तत्स्वरूपयो: स्वातन्त्र्येण प्रत्यक्षेणैव सिद्धतया तदभिधाने प्रयोजनाभावाद् वाक्यमेवानर्थकं स्यात्, तदनर्थकत्वे

श्रुतेरपि बाधः स्यादिति, तत्सार्थक्याबाधाय व्यक्त्यन्तरादप्रवृत्तिरेव श्रेयसीति ।

वस्तुतस्तु नात्र श्रुतिविरोधलेशः, श्रुतस्य गोत्वस्य लक्षितायाश्च व्यक्तेर्न परित्यागः, यस्य परित्यागः क्रियते, स नीलादिः, न श्रुत इति ।

तथा चोक्तम्—

"जातिव्यक्ती गृहीत्वैव वयं तु श्रुतिलक्षिते,
कृष्णादि यदि मुञ्चामः का श्रुतिस्तत्र बाध्यते" । इति ।

लक्षणापि नात्र बाध्यते, श्रुतिबाधस्य तु कः प्रसङ्ग इति भावः । केवलं गौरानीयतामित्युक्तेः कीदृशो गौरानेय इति यः संशयः, स एव शुक्लम् इत्युक्त्याऽपनीयते, न गोत्वं, न वा व्यक्तिः, संशयापनयनं च गोश्रुतेरनुगुणमेवेति, न श्रुतिविरोधगन्धः । प्रत्युत गोत्वशुक्लयोरसम्बन्धे एव श्रुतिविरोधः, वाक्यस्यैवानर्थक्यापत्तेः तयोःप्रमाणान्तरसिद्धत्वादितिभावः । तदेतन्मनसि निधाय सोत्प्रासमाह—**वाक्यार्थोऽपीति** । यदपि च सामान्यतः प्रसक्तायाः श्रुतेर्विशेषेऽवस्थापनम्, तदपि न सर्वत्रेत्याह—**न सर्वत्र** । किन्तु क्वचिदेवेत्यर्थः । पदार्थहेतुकवाक्यार्थबोधाभ्युपगमादेव नीलादिव्यावृत्तिरर्थात् सिद्ध्यतीत्यभिप्रायेणाह—**एवञ्च सतीति** ।

यदुक्तं न सर्वत्रेति तद्दर्शयितुमाह—**प्रातिपादिकादिति** । तथा च गामिति द्वितीयान्तश्रुतिदशायामेव कर्मान्वितगोव्यक्तिविशेषावगमात् सामान्यश्रुतिरलब्धपदैव ।

वस्तुतस्तु प्रातिपदिकादुच्चरन्ती द्वितीयादिश्रुतिविभक्तिरिति भाष्यपाठो न्यायरत्नाकरे दृश्यते । तथा च गवान्वितकर्मत्वविशेष एव श्रुतिदशायामवगम्यते, न गवाश्वादिसाधारणकर्मत्वमात्रमिति सामान्यश्रुतिरलब्धपदैव । यथा द्वितीयां विनापि गवादिपदं प्रयुज्यते, एवं प्रातिपदिकं बिना केवलद्वितीयादिप्रयोगः स्यात्, तदा प्रातिपदिकार्थाविशेषितं कर्मत्वं सामान्यरूपेण लभ्येतापि । न तु तदस्ति, केवलप्रत्ययप्रयोगस्यासाधुत्वात् ।

यत्रापि इः इयानित्यादौ केवलप्रत्ययः प्रयुज्यते, तत्रापि तादृशप्रत्ययस्य प्रकृतिप्रत्ययोभयार्थकत्वमेवेति, प्रकृत्यर्थोपरक्तस्यैव प्रत्यार्थस्य भानं, न

केवलप्रत्ययार्थस्येतिभावः। विशेषयतीति विशेषकः। यत्र प्रातिपदिकादुच्चरन्ती द्वितीया विभक्तिर्दृश्यते तत्र प्रातिपदिकार्थो द्वितीयार्थस्य कर्मत्वस्य विशेषकः प्रकृत्यर्थानुरक्तस्यैव प्रत्ययार्थस्य भानं, न केवलस्येत्यर्थः।

**यच्चैते पदसंघाता इति।** ननु सम्बन्धानित्यत्वाक्षेप एव कर्तुरस्मरणादिना परिहृतो न वेदानित्यत्वाक्षेपः, तत्कथमुच्यते—**परिहृतमिति**। येन हेतुना सम्बन्धानित्यत्वं परिहृतं, तेनैव वेदानित्यत्वमपि परिहर्तुं शक्यमिति परिहारहेतूनामभिहितत्वात् परिहारोऽपि कृतप्राय इत्यभिप्रायेण परिहृतमित्युक्तेः।

सूत्रम्—लोके सन्नियमात् प्रयोगसन्निकर्षः स्यात्॥ २६॥ (सि०)

**भाष्यम्—लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थमुपलभ्य, सन्नियमः सन्निबन्धनं न शक्यं तत्र संहर्त्तुम् एवञ्जातीयकानि वाक्यानि नीलोत्पलवनेष्वद्य। ३८।२। इति। तस्मात् अग्निहोत्रं जुहुयात् स्वर्गकामः इत्येतेभ्य एव पदेभ्यो ये अर्था अवगताः, तेभ्यः एवैतदवगम्यते अग्निहोत्रात् स्वर्गो भवतीति पदेभ्य एव पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थ इति।**

सप्रतिसाधनत्वञ्च संघातत्वस्य हेतोः। सर्ववेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वादधुनावेदाध्ययनवदिति। न च भारतादिष्वपि एवमनुमानसम्भवात्तेषामपि नित्यत्वं स्यादिति वाच्यम्। तत्र कर्तृस्मरणेनैवमनुमानासम्भवात्। न च प्रजापतिर्वेदानसृजत इत्युक्त्या वेदेऽपि तदस्तीति वाच्यम्। अर्थवादमूलकतादृशस्मृतेरनुभवमूलकत्वाभावेनाप्रमाणत्वात्। यदि कश्चिद्वेदस्य कर्ता स्यात् तर्हि तत्प्रणयनकाले केनचिदुपलब्धो भवेत्। तथा च स उपलब्धकर्तृकः परस्मै कथयेदयमस्य कर्त्तेति। सोऽप्यन्यस्मै, सोऽप्यन्यस्मै इति परम्परया भारतादौ व्यासादेरिवाधीयानकर्तृकं स्मरणं नियमेन स्यात्, नतु तदस्तीति, तदृशस्मरणमर्थवादमूलकमेव नानुभवमूलकमिति न प्रमाणम्।

न चार्थवाद एव प्रमाणमस्तु किमत्रप्रमाणान्तरान्वेषणेन स्तुतिपराणामर्थवादानां स्ववाच्यार्थे प्रामाण्याभावस्यार्थवादाधिकरणे वक्ष्यमाणत्वात्। न च तादृशास्मरणप्रामाण्याय मूलान्तरमेव तर्हि कल्प्यतां नहि कल्पनायामस्ति

कश्चित्प्रतिरोध इति, न, अस्ति, तावत्प्रकृते प्रतिरोधः कः ? अर्थवाद एव। कथम् ? इत्थं पारम्पर्याभावात् स्मरणस्यानुभवमूलकत्वे निरस्ते, तदन्यथानुपपत्त्या किञ्चिन्मूलं कल्पनीयमित्यपेक्षायामयमेव तत्र मूलं भवत्कल्पनाबीजमन्यथानुपपत्तिं प्रतिहन्तीत्यवदधातु। न चेदं स्तुतिपरमिति कथमत्र मूलं स्यात् ? अन्यपरवाक्यादपि भ्रान्तिसम्भवात्। दृश्यते हीदानीन्तनपुरुषाणां तत्कार्यत्वस्मरणभ्रान्तौ मूलत्वेनेदमेवेति ध्येयम्।

इति कल्पकलिकायां सप्तमं तद्भूताधिकरणम्। अथाऽष्टमं वेदनित्यताधिकरणम्।

सूत्रम्—वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥ ( पू० १ )

**भाष्यम्—उक्तं चोदनालक्षणोऽर्थो धर्म्म इति। यतो न पुरुषकृतः शब्दस्यार्थेन सम्बन्धः। तत्र पदवाक्याश्रय आक्षेपः परिहृतः। इदानीमन्यथाऽऽक्षेप्स्यामः। 'पौरुषेया श्चोदना' इति वदामः, सन्निकृष्टकालाः कृतकाः वेदा इदानीन्तनाः। ते च चोदनानां समूहाः, तत्र पौरुषेयाश्चेत् वेदाः, असंशयं पौरुषेयाः चोदनाः। कथम् ? पुनः कृतका वेदाः, इति केचिन्मन्यन्ते। यतः पुरुषाख्याः, पुरुषेण हि समाख्यायन्ते वेदाः। 'काठकं, कालापकं, पैप्पलादकं, मौद्गमिति। नहि सम्बन्धादृते समाख्यानं, न च पुरुषस्य शब्देन अस्ति सम्बन्धः, अन्यदतः कर्ता पुरुषः, कार्य्यः शब्दः इति। ननु प्रवचनलक्षणा समाख्या स्यात्। नेति ब्रूमः। असाधारणं हि विशेषणं भवति, एक एव हि कर्त्ता बहवोऽपि प्रब्रूयुः। अतोऽस्मर्य्यमाणोऽपि चोदनायाः कर्त्ता स्यात्। तस्मान्न प्रमाणं चोदनालक्षणोऽर्थो धर्म्म इति।**

सूत्रम्—अनित्यदर्शनाच्च ॥ २८ ॥ ( पू० २ )

**भाष्यम्—जननमरणवन्तश्च वेदार्थाः श्रूयन्ते 'बबरः प्रावाहणिरकामयत कुसुरुविन्दः 'औद्दालकिरकामयत' इत्येवमादयः। उद्दालकस्यापत्यं गम्यते औद्दालकिः, यद्येवं, प्राक् औद्दालकिजन्मनः, नायं ग्रन्थो भूतपूर्वः। एवमप्यनित्यता।**

सूत्रम्—उक्तन्तु शब्दपूर्वत्वम् ॥ २९ ॥ ( सि० )

**भाष्यम्—उक्तमस्माभिः शब्दपूर्वत्वमध्येतॄणाम्। केवलम् आक्षेपपरिहारो वक्तव्यः, सोऽभिधीयते ॥ २९ ॥**

सूत्रम्—आख्याप्रवचनात् ॥ ३० ॥ ( उ० ) १

**भाष्यम्—यदुक्तं ( १ पू० ) कर्तृलक्षणा समाख्या काठकाद्येति । तदुच्यते । नेयमर्थापत्तिः, कर्तृभिरपि ह्येनामाचक्षीरन् । प्रकर्षेण वचनम् अनन्यसाधारणं कठादिभिरनुष्ठितं स्यात्, तथापि हि समाख्यातारो भवन्ति । स्मर्यते च 'वैशम्पायनः सर्वशाखाध्यायी, कठः पुनरिमां केवलां शाखामध्यापयांबभूवेति' । स बहुशाखाध्यायिनां सन्निधावेकशाखाध्यायी अन्यां शाखामनधीयानः, तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणम् ।**

सूत्रम्—परन्तु श्रुतिसामान्यमात्रम् ॥ ३१ ॥ ( उ० २ )

**भाष्यम्—यच्च ( २ पू० ) प्रावाहणिरिति । तन्न, प्रवाहणस्य पुरुषस्यासिद्धत्वात् न प्रवाहणस्यापत्यं प्रावाहणिः । प्रशब्दः प्रकर्षे सिद्धः वहतिश्च प्रापणे, नत्वस्य समुदायः क्वचित् सिद्ध इकारस्तु यथैवापत्ये सिद्धः, तथा क्रियायामपि कर्तरि । तस्माद् यः प्रवाहयति स प्रावाहणिः । बबर इति शब्दानुकृतिः । तेन यो नित्योऽर्थः तमेवैतौ शब्दौ वदिष्यतः वायुम् आकाशं वा । अत उक्तम्—परन्तु श्रुतिसामान्य मात्रम् इति ।**

वेदांश्चैके सन्निकर्षं पुरुषाख्याः ( २७.पू० १ ) इति पदपदार्थसम्बन्धानित्यत्वप्रयुक्त आक्षेपस्तेषां नित्यत्वसाधनेन परिहृतः । इदानीं समाख्यावशेन वेदस्य पौरुषेयत्वावबोधात्तद्घटकचोदनानां पुनरप्रामाण्यमाक्षिप्यते—**पौरुषेया इति ।**

ननु समाख्यया पौरुषेयत्वाक्षेपो न युक्तः । साहि सामान्यतः प्राप्तं विशेषतो नियमयति । यथा दक्षिणया परिक्रीतानामृत्विजां वैदिके कर्मणि यथेष्टं कर्तृत्वप्राप्तौ आध्वर्यवमित्यादिसमाख्या अध्वर्योरेव तत्र कर्तृत्वं नियम्यते, आध्वर्यवं कर्म स एवानुतिष्ठति, नान्यः । एवं वेदस्य सामान्यतो न केनापि प्रमाणादिना कर्तृत्वं प्राप्तं, यन्नियमाय समाख्या व्याप्रियेत, किञ्च कठादिसमाख्या कठादिप्रोक्तत्वेनाप्युपपद्यत इति न नियमेन तत्कर्तृकत्वं साधयितुं क्षमते । तेन कृतमितिवत् तेन प्रोक्तमित्यर्थेऽपि तदुपपत्तेरिति चेत् ? न । वैदिकं वाक्यं पौरुषेयं वाक्यत्वात् कालिदासादिवाक्यवदित्यनु-

मानेन सामान्यतः कर्तृजन्यत्वप्राप्तौ काठकादिसमाख्यया तज्जन्यत्वं विशेषतो नियमयितुं शक्यमित्यभिप्रायात् । न च वचनान्तरसाधर्म्यप्रयुक्ततदाक्षेपः पूर्वमेव परिहृतः । तत्कुतः पुनरिदानीं स एवाक्षेपः क्रियते इति चेत्, अयमभिप्रायः । वेदपौरुषेयत्वनिराकरणार्थमिदं प्रकरणम्, तेन पौरुषेयत्वनियमित्तकस्तदाक्षेपोऽत्रैवोपन्यसनीयो निरसनीयश्च । पूर्वत्रेदृशाक्षेपतन्निरासौ चानागतावेक्षणेनोपन्यस्तौ, एतत् प्रकरणाभावात् । किंच भोभो भगवन्तः सभ्याः क्वेदं दृष्टं, क्व वा श्रुतं लोके यद् वाक्येषु पदानां रचना नैसर्गिकी भवति । यदि स्वभाविकी वेदे पदानां रचना भवेत्, पटे हि हन्त तन्तूनां कथं नैसर्गिकी न सा' शन्नो देवीरभीष्टये, नारायणं नमस्कृत्य, अस्त्युत्तरस्यां दिशि देवतात्मेत्यादि तुल्ये रचनात्वे क्वचित् कर्तृपूर्वकत्वमपरत्र तद्विपर्यय इति महान् व्यामोह इति, परोक्तरीत्या वेदवाक्यरचनान्यथानुपपत्त्या वेदेऽपि कर्ता प्रसज्यते ।

किं च ववरः प्रावाहणिरित्यनित्यार्थवाचकशब्दस्य वेदे दर्शनाद्वेदः कृतक इति मतिर्भवति । प्रवाहणस्यापत्यं प्रावाहणिरितिव्युत्पत्त्या प्रावाहणिशब्दार्थनिर्णयो भवति । तेन ज्ञायते प्रवाहणपुत्रोत्पत्त्यनन्तरमयं वेदः कृतः, ततः पूर्वन्त्वयं कीदृशः स्यादिति वेदस्य कश्चित्कर्ता अवश्यमेवाश्रयणीय इति पूर्वपक्षसंक्षेपः ।

तदेतद्भाष्ये दर्शयति—**अन्यथाऽक्षेप्स्याम** इत्यादिना । सन्निकृष्टकाला इति सन्निकर्षमिति सूत्रावयवव्याख्यानम्, यतः कठादिपुरुषेणाख्यायन्ते वेदाः, अतस्तत्सन्निकृष्टकालाः अन्यथा इदानीन्तनानामिव कठादीनामपि तत्र निर्देशो न स्यात् । तत्सन्निकृष्टकालत्वात्तत्कृतत्वं वेदे सम्भवति। भाष्यस्यैवं योजना-इदानीन्तना वेदास्तत्सन्निकृष्टकालाः । अतस्तत्कृता इत्यर्थः ।

ननु वेदस्य कृतकत्वेऽपि किमायातं चोदनानामित्यत आह—**ते चेति** । पुरुषाख्या **इति** । हेतुव्याचिख्यासया पृच्छति—**कथमिति** । द्वितीयोपपत्तये योग्यक्रियां दर्शयति—मन्यन्ते इति । कार्यकारणभावः सम्बन्धः समाख्यानिमित्त इत्याह—नहीति । प्रवचनस्य समाख्यानिमित्तत्वं निरस्यति नेति । प्रवचनकर्तृत्वयोर्भेदं दर्शयति—**असाधारणमिति** । असाधारणनिमित्तक एव व्यपदेशो लोके दृष्टः । अस्मरणेऽपि समाख्यावलात् कर्त्ता सिध्यतीत्याह—**अत इति** । आक्षेपमुपसंहरति—**तस्मादिति** ।

सूत्रम् अनित्यदर्शनाच्चेति २८।२ ।

अनित्यार्थाभिधानादपि वेदोऽनित्य एव। नहि एवं जातीयकार्थो नित्येनाभिधातुं शक्यः तदानीमर्थाभावेन विवक्षासम्भवात्, अप्रमाणत्वापत्तेश्च । पूर्वं तदर्थाभावादिति ।

उक्तन्तु शब्दपूर्वत्वमिति० २९ सूत्रम् । वेदाध्ययनं गुर्वध्ययनपूर्वकम् इत्यभ्युपगमादाह—उक्तमिति । सूत्रमवतारयितुमाह—स इति ।

आख्याप्रवचनादिति ३० सूत्रम् । नेयमर्थापत्तिरिति । काठकसमाख्यान्यथानुपपत्ति र्वेदस्य जन्यत्वे यत् प्रमाणमुक्तम् ।

तदसत् । साहि प्रवचननिमित्तेनान्यथाप्युपपद्यते इति भावः । प्रवचनस्याप्यसाधारणत्वं दर्शयति—अनन्येति ।

वस्तुतस्तु समाख्यया न तत्कर्तृकं साधयितुं शक्यते, सामान्यतस्तदप्राप्तेः, कर्तुः स्मरणे न किञ्चिन्मूलमित्युक्तमेव, प्रयोजनाभावादपि नास्य कर्ता । नहि कर्तृकल्पनातो वेदस्य किञ्चित्प्रयोजनं निर्वहति । न च समाख्यैव तत्र मूलमिति शङ्क्यम् । प्रवचनेनापि तदुपपत्तेः । एका दुर्बलाङ्गभूता समाख्या भूयांसं प्रधानं शब्दराशिं नैव बाधितुम् उत्सहते । तदुक्तम्—

श्रुत्यादे र्दुर्वला चासौ न शक्ता तानि बाधितुम् ।
अङ्गभूयांसमेकेयं शब्दराशिं न बाधते ।। इति ।

अथवा अवयवार्थशून्या रथन्तरादिवद् रूढिरेवेयमस्तु । न च रूढिस्वीकारे श्रुतिसामान्यमिति सूत्रविरोधः, अनित्यार्थकत्वाभावेन समाख्यायामपि तदुपपत्तेः । वैरूप्यसामवत् सत्तामात्रेणैव कठो विशेषणं भवतीति स्पष्टमन्यत्र । तथा चोक्तम्

सति साधारणत्वे वा सम्भवेन विशेषणम् ।
यथा वैरूप्यसामेति सत्तयैव प्रतीयते'' इति ।

अग्नीषोमयोर्विशिष्टयोरेव देवतात्वमित्र । यदि प्रवचनत्वमनेकपुरुषापेक्षो धर्मः स्यात् तर्हि यथा अग्नीषोमीयहविषः केवलेनाग्नेयशब्देन व्यपदेशो न भवति, न भवेदेवं शाखाया अपि काठकशब्देन व्यपदेशः । तत्तु न तथा किन्तु मातृत्ववत् प्रत्येकापेक्षमिति प्रत्येकशब्देन व्यपदेष्टुं शक्यते, डित्थडवित्थयो र्माता डित्थमातेतिवत् कठतदितरपुरुषप्रोच्यमानापि शाखा कठशाखेति व्यपदिश्यते । न च तत्प्रवचनस्य पुरुषान्तरसाधारणत्वे कठेनेव

पुरुषान्तरेण किन्न साऽख्यायते, व्यवहारफलकाख्यानस्यैकशब्देनैवोपपत्तौ पुरुषान्तरेण तदाख्याने प्रयोजनाभावात् । न च तेनैवाभिधाने नियमाभावात् कदाचित्पुरुषान्तरेणाप्यभिधानप्रसक्तिः, सति कार्ये निमित्तानुसरणमिति न्यायेन निमित्तस्य सतः निरूपणे एवास्माकमधिकारात् । समाख्यायाः अस्मदाद्यधीनत्वाभावेन ईदृशपर्यनुयोगानर्हत्वात् । दृश्यते च साधारणस्याप्यसाधारणशब्देन निर्देशः अगस्त्यतीर्थं कुमारिलतीर्थमित्यादि ।

परन्तु श्रुतिसामान्यमात्रमिति (३१) सूत्रम् । अनित्यार्थकत्वं परिहरति—यच्चेत्यादिना । भाष्यमिदं निगदव्याख्यातम् ।

सूत्रम्—कृतेवा विनियोगः स्यात् कर्मणः सम्बन्धात् ।। ३२ ।।

**भाष्यम्—अथ कथमवगम्यते—नायमुन्मत्तबालवाक्यसदृश इति ? तथाहि पश्यामः वनस्पतयः सत्रमासत, सर्पाः सत्रमासत इति, यथा, जरद्गवो गायति मत्तकानि, कथं नाम जरद्गवो गायेत् ? कथं वा वनस्पतयः सर्पा वा सत्रमासीरन्निति । उच्यते—विनियुक्तंहि दृश्यते, परस्परेण सम्बन्धार्थम् । कथम् ? ज्योतिष्टोमः इत्यभिधाय कर्तव्यः इत्युच्यते । केन ? इत्याकांक्षिते सोमेन इति । किमर्थम् ? इति स्वर्गाय इति । कथमिति इत्थम्, अनया इतिकर्तव्यतया इति । एवमवगच्छन्तः, पदार्थैरेभिः संस्कृतं पिण्डितं वाक्यार्थं कथमुन्मत्तबालवाक्यसदृशमिति वक्ष्यामः ?**

**ननु अनुपपन्नमिदं दृश्यते—वनस्पतयः सत्रमासत इत्येवमादि । नानुपपन्नम् । न अनेन अग्निहोत्रं जुहुयात् स्वर्गकामः—इत्येवमादयोऽनुपपन्नाः स्युः । अपि च वनस्पतयः सत्रमासत इत्येवमादयोऽपि नानुपपन्नाः, स्तुतयो ह्येताः सत्रस्य, वनस्पतयो नामाचेतनाः इदं सत्रमुपासितवन्तः, किं पुनर्विद्वांसो ब्राह्मणाः । तद्यथा लोके, सन्ध्यायां मृगा अपि न चरन्ति, किं पुनर्विद्वांसो ब्राह्मणा इति । अपि च अविगीतः सुहृदुपदेशः सुप्रतिष्ठितः कथमिवाशङ्केत—उन्मत्तबालवाक्यसदृश इति । तस्माच्चोदनालक्षणोऽर्थो धर्म इति सिद्धम् ।**

**।। इति श्रीमच्छबरस्वामिनः कृतौ मीमांसाभाष्ये प्रथमस्य अध्यायस्य प्रथमः पादः । तर्कपादोऽयम् ।।**

अयुक्तार्थकत्वे नोत्तरवाक्यवदप्रमाणत्वमाशङ्कते—**वनस्पतय इति**। परस्परान्वितार्थकत्वात् प्रामाण्यमेवेत्याह—**उच्यते इति**। तावतापि वनस्पतय इत्यादीनां प्रामाण्यं समर्थितमित्याह—**अनुपपन्ना इति**। स्तुतिपरत्वेन स्वार्थे तात्पर्याभावात्तत्राप्रमाणत्वेऽपि स्वतात्पर्यार्थे प्रामाण्यमव्याहतमेवेत्याह—**स्तुतय इति**। अतिस्पष्टमत्रत्यं भाष्यं न व्याख्यानमपेक्षते इति न पराक्रम्याभिहितमस्माभिरिति शिवम्।

**श्रीवैक्रमे नागनगाङ्कचन्द्रमिते कुजेऽब्दे शुचिपूर्णिमायाम्।**
**इमामहं पाटलिपुत्रमध्यविद्यालयस्थोऽरचयं मनोज्ञाम्॥ १॥**

**अस्मत्तातपितामहेन सुधिया धाराधरेण स्वयं**
**लब्धायां भुवि निर्विवादमभितो वासाय यो वासितः।**
**शुद्धः सार्थक एव पण्डितपुरं ग्रामः प्रयागात्स नः**
**सार्द्धक्रोशचतुष्टयीपरिमितोऽवाच्यां दिशि भ्राजते॥ २॥**

॥ इति श्रीलक्ष्मीगर्भजेन पण्डितवलभद्रदत्तात्मजेन म० म०
पण्डितश्रीहरिहरकृपालुद्विवेदिना रामनिरञ्जनदास-
मुरारकाविद्यालयप्रधानाचार्येण विरचिता
कल्पकलिका शाबरभाष्यीयतर्कपादान्ता
समाप्ता॥

——